# The Journal

OF THE

# Sri Sankaragurukulam

## Srirangam

VOL. I. APRIL 1939. NO. 1.

Editor :
Gurubhaktasikhamani,
Sastraprasarabhushana,
T. K. BALASUBRAHMANYA AIYAR. B. A,
Founder, Sri Sankara-gurukulam, Srirangam.

Literary Adviser :
Vidyasagara,
Vidyavacaspati,
P. P. SUBRAHMANYA SASTRI
B. A. (Oxon) M. A.
Curator, Govt. Oriental Mss. Library,
& Professor of Sanskrit, Presidency College, Madras.

ANNUAL SUBSCRIPTION { INLAND Rs. 6/—Post Free.
FOREIGN SH. 12/— „

CONTENTS.

# श्रीशंकरगुरुकुलपत्रिका

श्रीरङ्गम्

।। श्रीः ।।

या वर्णपदवाक्यार्थस्वरूपेण विवर्तते । अनादिनिधनानन्ता सा मां पातु सरस्वती ।।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।।

संपुटः १ ] प्रमाथिसंवत्सर वैशाखशुद्धपञ्चमी [ संचिका १



विदिताखिलशास्त्रसुधाजलधे

महितोपनिषत्कथितार्थनिधे ।

हृदये कलये विमलं चरणं

भव शंकरदेशिक मे शरणम् ॥





# ॥ मीनाक्षीस्तुतिः ॥

श्रीमत्परमहंसेत्यादि समस्तबिरुदालंकृत श्री जगद्गुरु शृङ्गगिरि श्री १९०८
श्रीचन्द्रशेखरभारतीस्वामिभिः विरचिता ॥

---

## १

मन्दस्मितोदञ्चितमञ्जुलास्यां कनन्निटालां वरकुङ्कुमेन ।
श्रीसुन्दरेशेन समं निशीथे प्रेङ्खाधिरूढां भज मीननेत्राम् ॥ १ ॥



दविष्ठलोकांश्च दयोर्मिलेन विलोकनेनैव विशालनेत्रा ।
मत्स्या इवार्भान्परिपालयन्ती डोलाविहारं तनुते झषाक्षी ॥ २ ॥



कृत्वा तपो दुश्चरमम्बिकाया माता भवामीति मनीषया या ।
प्राप्ता पुरा काञ्चनमालया सा पाण्ड्याधिराज्ञी वितनोतु भव्यम् ॥



दिव्यं रूपं दधाना ललिततररवैर्वेणुवीणादिजातैः
प्रापय्यान्तर्मुखत्वं निखिलजनमनांस्यात्मरूपं विवेक्तुम् ।
वृत्तीर्मोदादिरूपा अपि परिगलिताः कुर्वती ब्रह्मविद्या
मीनाक्षी जीवनीडं सुखममृतमहो बोधयन्ती विभाति ॥ ४ ॥



प्रेङ्खामारुह्य पत्या सह सुररमणीगर्वनिर्वापिकाभिः
नारीभिर्गीयमाना नवनवनटनैस्तोष्यमाणा च नित्यम् ।
आनन्दं देवभोग्यं धिगिति सुमनसामादधाना विरक्तिं
सान्द्रानन्दं महेशं परममृतमहो बोधयत्यम्बिकेयम् ॥ ५ ॥



या देवी द्वादशान्ते वसति विशदया प्रज्ञयैवाधिगम्या
यस्याः प्राप्त्यै विधत्ते श्रुतिरपि विविधान्यज्ञदानादिधर्मान् ।
साक्षाच्छ्रीमीननेत्रा मघवदधिगता कुम्भजाद्यर्चिताङ्घ्रिः
सा मे सोमावतंसा शिथिलयतु तमो हार्दमाशु प्रगाढम् ॥ ६ ॥



यस्या गेहं विशालं पुरमिव सकलं वस्तुजातं बिभर्ति
यद्दृष्ट्वाशु मोदं वहति भुवि जनो नास्तिकोऽपि प्रकामम् ।
स्तम्भैर्हैमैर्विचित्रैरपि शिखरवरैर्गोपुरैः शौकनीडैः
तीर्थैर्हेमाम्बुजिन्यादिभिरपि परितो भासमानं श्रियै स्तात् ॥ ७ ॥



सा हि श्रीरमृतासतामिति ऋचः सामानि यस्माद्यजूं-

ष्याम्नायो विदधाति तत्परशिवे मीनाक्षि विद्यां त्रयीम् ।

संबोध्यामृतसौख्यहेतुमचिराद्व्याजभव्यां दयां

नित्यं धेहि सुते जगज्जननि ते भूयोऽपि भूयो नमः ॥ ८ ॥



शफरनयने शान्ताराध्ये शिवार्धशरीरिणि

प्रचुरय सुखं दुःखं सर्वं विनाशय सत्वरम् ।

सफलय जनिं सक्तिं देहे निराकुरु सद्मने

चिति सुखतनावात्मन्यास्तां मतिर्मम संततम् ॥ ९ ॥



# २

अद्राक्षं बहुभाग्यतो गुरुवरैः संपूज्यमानां मुदा

फुल्लन्मल्लिमुखप्रसूननिवहैर्हालास्यनाथप्रियाम् ।

वीणावेणुमृदङ्गनादमुदितामेणाङ्कबिम्बाननां

काणादादिसमस्तशास्त्रमतिदां शोणाधरां श्यामलाम् ॥ १ ॥

मातङ्गकुम्भविजयिस्तनभारभुग्न-

मध्यां मदारुणविलोचनवश्यकान्ताम् ।

ताम्राधरस्फुरितहासविधूततार-

राजप्रवालसुषुमां भज मीननेत्राम् ॥ २ ॥



आपादमस्तकदयारसपूरपूर्णां

शापायुधोत्तमसमर्चितपादपद्माम् ।

चापायितेक्षुममलीमसचित्ततायै

नीपाटवीविहरणां भज मीननेत्राम् ॥ ३ ॥



कंदर्पवैर्यपि यया सविलासहास-

नेत्रावलोकनवशीकृतमानसोऽभूत् ।

तां सर्वदा सकलमोहनरूपवेषां

मोहान्धकारहरणां भज मीननेत्राम् ॥ ४ ॥



अद्यापि यत्पुरगतः सकलोऽपि जन्तुः

क्षुत्तृड्व्यथाविरहितः प्रसुवेव बालः ।

संपोष्यते करुणया भजकार्तिहन्त्रीं

भक्त्याऽन्वहं हृदय तां भज मीननेत्राम् ॥ ५ ॥



हालास्यनाथदयिते करुणापयोधे
बालं विलोलमनसं करुणैकपात्रम् ।
वीक्षस्व मां लघुदयोर्मिलदृष्टिपातै-
र्मातर्न मेऽस्ति भुवने गतिरन्तरा त्वाम् ॥ ६ ॥



श्रुत्युक्तकर्मनिवहाकरणाद्विशुद्धिः
चित्तस्य नास्ति मम चञ्चलतानिवृत्त्यै ।
कुर्यां किमम्ब मनसा सकलाघशान्त्यै
मातस्त्वदङ्घ्रिभजनं सततं दयस्व ॥ ७ ॥



त्वद्रूपदेशिकवरैः सततं विभाव्यं
चिद्रूपमादिनिधनान्तरहीनमम्ब ।
भद्रावहं प्रणमतां सकलाघहन्तृ
त्वद्रूपमेव मम हृत्कमले विभातु ॥ ८ ॥







# ॥ शान्तिपारम्यमीमांसा ॥

श्रीसच्चिदानन्दतीर्थस्वामिना विरचिता ॥



कैवल्यदानकल्पद्रुं करुणावरुणालयम् ।
अश्रान्तमाश्रये चित्तविश्रान्त्यै सद्गुरूत्तमम् ॥




यि भो धन्याः, समृद्धसौजन्याः, सत्पथाध्वन्याः, सुधीवरमूर्धन्याः, श्रुतिकमलिनीविहाररसिकराजहंसायमानहृदयाः, सदयाः, सहृदयाः! समाकर्णयत सादरं मामकीनमिदं किमपि कमनीयं वाङ्मयं सावधानेन हृदयेन ॥

इह किल कलिकाले, निर्जीवीकृतनिखिलनिगमागमसमुदाये, निर्मूलीकृतनिखिलधार्मिकजनसुरतरुनिकुरुम्बे, निरवशेषीकृतस्वस्वचिरंतनाचारनियमे, निरन्तरनिरूढनव्यशिक्षावशंवदीकृतसाधुसंताने, सनातनधर्ममर्मभेदकविविधशासननिर्माणालंकर्मीणाकर्मण्यजननिवहनिबिडीकृतभूभागे, स्वप्रतिभामात्रप्रवणपरःसहस्रपामरलोकखिलीक्रियमाणसरलतरसाधुमार्गे, अप्रस्तुतदानधर्मादिकथाप्रस्तावे, अगणितब्राह्मणादिवर्णगण-

व्यत्यासे, दैन्यदारिद्र्यदुर्दशादुरदृष्टदावदहनदन्दह्यमानदुर्गततरभारतीयजनवर्गे, अधरोत्तरीकृतलोकमर्यादे च सर्वतः संजरीजृम्भ्यमाणे, धर्मप्राणानां भारतीयानां कीदृशोऽयं दुरवस्थापरिणामः समुपानंसीदिति सुनिभृतं समालोचयतः कस्य वा सचेतसः सुधीरमपि हृदयं नावसीदति ? कस्य वा नयनाभ्यां नाश्रुबिन्दवो निष्पतन्ति ? कस्य वा वदनतः सगद्गदाः प्रलापा न निःसरन्ति ?

आः किमिदमापतितम् ! किं नु नाम नः पुनः प्रत्युपसीदेत् तादृशोऽपि समयः ; यत्र खलु वर्णाश्रमनियमपद्धतिरियमविप्लुतमर्यादा प्रातः स्मरणीयैरस्मत्पूर्वपुरुषैः सभक्तिश्रद्धातिशयमतितरामाद्रियमाणा सती नवयौवनदशामनुबभूव, सर्वतो विजयिनी च विराजते स्म । अपि नामास्माकं नयनपदवीमवतरेयुस्तत्तादृशाः पुरुषप्रवराः, ये खल्वापातरमणीयमैहिकसुखं तृणायापि मन्यमानाः आ कौमारादनुवर्तितगुरुकुलवासपरिक्लेशितकृशीकृततनुतरगात्रयष्टयोऽपि अप्राकृतेन बंहीयसा ब्रह्मवर्चसेन सहजेनैव प्रकाशमानाः, अभ्यगीपत नियमाध्ययनविधिना निगमराशीन्, अध्यैषत यथोचितं सर्वशास्त्राणि, आचरन्ननुदिनं श्रौतादिकर्माणि, आवसन्नतिगहनेष्वरण्यदेशेषु, असहन्त सुदुःसहां शीतोष्णबाधाम्, अशीशमन् क्षुद्व्याधिं कंदमूलाद्यैः, अशिश्रियन्विश्रमार्थमाश्रमकुटीराणि, अवीवृधन् ब्रह्मचर्यमस्खलितनियमेन, अतीतृपन्नात्मानमयत्नलब्धद्राविणेन, अनूनुपन्नीश्वरं स्वकर्माख्यसुकुसुमैः, अनीनयन्नायुष्कालमीदृशैः सत्कृत्यैः, समपीपदंश्चैवमतितरां मानवजन्मनः साफल्यम् ॥

अयि ऐतिहासिकतत्त्वसमीक्षणविचक्षणाः ! अन्ववेक्षध्वमिदमपक्षपातया दृशा, अनुचिन्तयध्वं च सूक्ष्मेक्षिकया क्षणमपि तत्तादृशानां भारतभूमिभूषणायितानां नः पूर्वपुरुषाणामतिपवित्राणि विचित्राणि चरित्राणि । किमेते निष्किंचना अपि अधुनातना इव निरन्तरोदित्वरनिरवधिकनितान्तदुरन्तसांसारिकचिन्तासंततिसंतप्यमानान्तरङ्गाः कचिदभूवन् ? किमेतैर्वनवासनिरतैरपि आधुनिकैर्नगरवासलोलुपैरिव अशनवसनाद्यभावप्रयुक्तदुरन्तदारिद्र्यदुःखं कचिदन्वभावि ? किं वा तादृशैर्दुराशापिशाचिकासमावेशकथा कचिदश्रावि ? किं नु तैरकिंचनैरपि अर्थिसार्थेषु नकारपारुष्यकथा कचित्प्रायोजि ? किमु तैः पूर्वपुरुषैरगण्यपुण्योपचयोपगमितं ब्राह्मण्यमधुनातनैरिव तुच्छदृष्ट्या कचिद्व्यलोकि ? अहो अतिमानुषचरित्रेण क्षत्रियपुत्रेण विश्वामित्रेणापि स्वीयतपोव्ययेनैव ब्राह्मण्यं समपादीति प्राक्तनीं कथां किमधुना नानुसंधद्ध्वे ? किं वा न स्मरथ 'धिग्बलं क्षत्रियगतं ब्रह्मतेजोबलं बलम् । एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे' इति विश्वामित्रवाक्यानुवादकं रामायणगतं पद्यरत्नम् ? आधुनिकविद्यावशंवदास्तु तत्सर्वं प्रत्यभिजानानाः स्वकीयब्राह्मण्यस्य दुर्विनियोगं स्वयमेव विविञ्चाना अपि वसिष्ठवामदेवादिकुलोत्पन्नतामात्मनः समाचक्षाणाः सन्तो मनागपि न लज्जन्त इत्येतदेव स्मारं स्मारं चित्रीयते नो हृदयम् ॥

अहो पश्यत कियदन्तरं नः पूर्वपुरुषाणामाधुनिकानां च । नव्यशिक्षापद्धतिशेमुषीकाणां संततचिन्तासंततिसंदानितान्तःकरणानां ब्रह्माण्डलाभेनाप्यसंतुष्यतामाधुनिकानां नव्यवेषभूषा-

भाषादिजुषामेषां नगरवासः क; क च नः पूर्वेषां स्वकर्मनिष्ठानामकिंचनानामपि सदा संतुष्टचेतसामाहितशुभसंगमो हृदयंगमो वनवासः? दुरन्तदुराशापिशाचिकासमावेशपरवशितचेतसामर्वाचामन्योन्यमीर्ष्यासूयाव्यतिषङ्गविक्षिप्तचित्तानां कलहप्रियता क; क च तेषां सर्वतो निःस्पृहाणां समदृशामन्यादृशी सहजसिद्धा च सौहार्दवशंवदता? क तावदेषां प्राकृतचर्यानुसरणप्रवणता; क च तेषां प्राक्तनसदाचारानुसरणैकपरायणता? क नु खल्वेषां स्वप्रतिभामात्रप्रमाणता; क च तेषां श्रुतिस्मृतिपुराणादिप्रदर्शितधर्ममार्गानुसरणनिपुणता? क्वैतेषामापातरमणीयपरिणामविरसविनश्वरवैषयिकसुखानुभवैकबद्धतृष्णता; क्व च नः पूर्वेषां तत्तादृशी विषयानन्दवितृष्णता? क्व पुनरेषामनभ्यस्तगुरुपरिचर्याणां प्राकृतानां परानुकरणदासता; क्व च तेषां शिष्टाचारानुकरणनिविष्टदृष्टीनां वरिष्ठा कर्मनिष्ठता? क्व नु नामैतेषामनल्पायाससाध्यक्षणिकक्षुद्रानन्दपल्वलनिमग्नानामतृप्तिपरवशता; क्व च तेषामल्पायाससाध्यदिग्देशकालाद्यनवच्छिन्ननिगमान्तवेद्यनिरवद्यनिरतिशयनिर्विकल्पकब्रह्मानन्दनिमग्नानामन्यादृशी आप्तकामता? क्वैतेषामशान्तचपलचित्तता; क्व च तेषामप्रधृष्यप्रशान्तगभीरचित्तता? क्व नु खल्वेतेषां तिर्यक्सधर्मणामुत्पद्योत्पद्य कीटनाशं नश्यतामवश्यंभाविनी अवश्यमृत्युता; क्व च नः पूर्वेषामप्राकृतप्रतिभातिशयजनितनिजयशोराशिनिशाकरविशदीकृताशावकाशानामद्यापि निजयशःकायेन जीवतां सफलीकृतजनुषामन्यादृशी वश्यमृत्युता? क्व तावदेतेषां द्रव्यसंचयलोलुपता; क्व च तेषां धर्मसंचयलालसता? क्वैतेषां भोगाभ्यासप्रवणता; क्व च तेषां योगाभ्यासनिपुणता? क्व चैषां संकरकथाप्रकटनैकलग्नचित्तता; क्व च तेषां शंकरकथाप्रकथनैकमग्नचित्तता? क्व चैषां स्वराज्यकामिता; क्व च तेषां स्वाराज्यगामिता? प्रियपाठकाः! विमृशन्तु नाम भवन्तः किंनिमित्तमिदं तारतम्यं पूर्वजानामधुनातनानां चेति; इत्थं विचार्यमाणे इदमेव तावन्निमित्तं नः प्रतिभाति, यत् विषयेषु नात्यभिनिविष्टचेतसां दैवादुपलब्धेनैव संतुष्टचेतसां पूर्वेषां स्वल्पलाभेनापि महती मनःशान्तिरासीत्; आधुनिकजनदुराशापिशाचिकाजठरपिठरीपरिपूरणस्य तु ब्रह्माण्डलक्षैरपि दुष्करतया तादृगाशावैशाल्यभरितचेतसां तेषां स्वजन्मनि मनःशान्तिलेशस्यापि नावकाश इति मनःशान्तितदभावयोरेव तादृक्तारतम्ये निमित्तता कथंचिदङ्गीकरणीयेति ॥

आस्माकीनाः खलु पूर्वपुरुषाः श्रुतिस्मृतिपुराणादिष्वतितरामाहितविश्वासद्रढिमानः स्वतश्च विवेचितसर्वशास्त्ररहस्यभूमानः अनुल्लङ्घितसदाचारसीमानः विश्वविख्यापितस्वयशःप्रथिमानो महामहिमानश्च सन्तः सहजसिद्धां स्वारसिकीमपि विषयवासनां स्वकीयविवेकबलेन न्यग्भाव्य शाश्वतसुखायैव सर्वथा स्पृहयमाणा अभूवन्, तेनैव च चित्तोपशान्तिं प्रतिपद्य तद्द्वारा सुखोत्कर्षसीमानमध्यगमन्निति तु नात्र खलु मात्रयाऽपि संशीतिः। न हि खलु विषयाभिमुखमेव स्वरसतोऽनुधावन्तीं चित्तवृत्तिमनुरुन्धानः अनुभूतनानाविधविषयजातोऽपि विवेकवानपि कश्चित् तृप्तिभरितो बभूवेति क्वचिदद्राक्ष्म वयं चक्षुषा, क्वचिदश्रौष्म वा श्रवसा ॥

विषयाः खलु ध्यानपातिनो महान्बलादपि स्वहस्तीकृत्य सधीराणामपि विवेकिनामपि तेषां

सहसैव समुज्जृम्भयन्ति विवेकविकलताम्, समाच्छादयन्ति स्वगतान्दोषविशेषान्, समुत्पादयन्त्य-सुन्दरेष्वपि सुन्दरताभिमतिम्, विस्तारयन्ति तृष्णातिशयम्, विस्मारयन्ति पुण्यपापकथाम्, उद्बोधयन्ति नास्तिकताम्, उन्मूलयन्ति पुनरास्तिकताम्, उन्मादयन्ति चित्तवृत्तिम्, उत्साहयन्ति निःसारकृत्येषु, उद्वेजयन्ति च सद्गानधर्मादेः, प्रवर्तयन्ति प्राकृतचर्यासु, प्रलोभयन्ति परधना-हरणादौ, प्रबलीकुर्वन्त्यसंतोषभूमानम्, प्रशिथिलीकुर्वन्ति देहादिदृढिमानम्, प्रचुरीकुर्वन्ति दुर्वा-सनागरिमाणम्, प्रकटीकुर्वन्ति च स्वसेविनां दुःखपरिणामम्। किं बहुना? लब्धाश्रयाः खलु ते विषयाः स्वाश्रयान्प्राणिनः प्रलोभ्य स्ववशीकृत्य स्वविषयकतृष्णामेव तेषां पुनः पुनरुज्जृम्भयन्तो मृगप्रायानेव तानन्ततः स्वयमातन्वन्तीति को हि नामात्र संदिग्धे सचेताः पुरुषप्रवरः। विषया-णामेवमाकर्षकतामविवेकजनकतां व्यामोहकतामतृप्तिकरतां परिणामविरसतां च करतलामलक-वदादर्शयितुं कति कति वैदिककथाः प्रावर्तिषत, कति कति पौराणिकगाथाः पुरातनैः प्रास्ताविषत, कति कति कथाकलापा ऐतिहासिकैरुदभाविषत, कति कति लघुकथाश्च पूर्वजैः प्रायोजिषत, कति कति सूक्तिविशेषाश्च सोदाहरणं सुधीवरैः समदर्शिषत; अयि पाठकाः, न खल्वद्यापि तिरो-हितानि तादृशानि ग्रन्थरत्नानि, यदि तादृशेष्वपि सुधियां दृष्टिकोणः कदाचिन्निपतेत् तदानीं नूनमवगम्येत, यदि मे विषयविशेषा निमेषोन्मेषमात्रा आशीविषविषवद्विषमाश्चेति। अथ वा किमधिकेन; उर्वशीसमाकृष्टचेतसः पुरूरवस उपाख्यानमेकमेवात्र पर्याप्तं विषयाणां विषमतामव-गमयितुम्। विषयाणामेषां तृष्णाविवर्धकता परिणामविरसता च पुरूरवसः स्वैरोद्गाररूपैः प्रलाप-मयैः पद्यविशेषैरेव भागवते स्फुटतरं निरटङ्कि। तदिदं सर्वं सुधीवराः स्वयमेव तत्र द्रष्टुमर्हन्तीति न तत्र वयं विस्तरभीरवो वृथैव लेखनीं व्यापारयितुमभिलषामः। तस्मादनन्तानामेषां विषयाणा-मनुभवार्थं समग्रस्य पुरुषायुषस्य व्ययीकरणेऽपि तावता चित्तवृत्तेर्नालंभावो भविता, प्रत्युत पुनः पुनस्तज्जातीयविषयेषु तृष्णावृद्धिरेव भविष्यतीति निर्णयात् तत्तादृशविषमविषयमार्गमनुरुन्धानानां कथं नु खलु तृप्तचित्तता समुदेष्यति; तदभावे च कुतस्तेषां मनस्तोषः; तदसत्त्वे कुतस्तरां मनः-शान्तिः; तद्रहितानां च कुतस्तमां सुखप्राप्तिप्रत्याशा?

सुखप्राप्तिर्हि नाम स्वरसतो न मनःशान्तिं विना क्वचिदात्मानं लभते। यो हि विषया-भिलाषुकाणां स्वाभीप्सितविषयलाभे सति तात्कालिकः कश्चन सुखाभासो लक्ष्यते, सोऽपि तात्कालि-कमनःशान्तिलेशनिबन्धन एव। न पुनस्तावता तेषां सुखसाधनताऽपि शङ्कनीया। यदि पुनः स्रक्च-न्दनादयो विषया एकान्ततः सुखसाधनान्येव भवेयुस्तर्हि फलनियतानामेव साधनत्वौचित्यात् सर्वदाऽपि विषयैः सुखसंपादकैरेव भवितव्यं सकलतत्सामग्रीसमवधाने सति। न पुनरेवमियं नियतता नयनपदवीं नः क्वचिदुपयाति। न हि चन्दनादिकं घर्मकाले सुखावहमिव भवतीति सुदुःसहहिमसंहतिसंनिपातसमुज्जृम्भितशीतिकापिशाचिकासमानत्यमानसमखिलपशुसमाक्रान्तसक-लजनसंदोहे, समुद्वेजितदुर्बलजनस्वान्ते दुरन्ते हेमन्तेऽपि तदेव कस्यचित्क्वचिदपि सुखाय कल्पेत। न वा वह्निसांनिध्यं हेमन्ते सुखाय भवतीति दुःसहतरसहस्रकरनिकरसमुदिततापप्रप-यपापच्यमानप्राणिनिवहे भीष्मतमे ग्रीष्मसमयेऽपि तदेव कस्यचित्सुखावहं भविष्यति। तस्मा-द्विषयाणां स्वसहकारिसामग्रीसमवधानदशायामपि क्वचित्सुखजनकत्वादर्शनादनैकान्तिकतया न

तेषामेकान्ततः सुखसाधनत्वमिति निर्णयो निष्प्रत्यूह एव। न च सहकारिकारणकोटौ तत्तद्देश-कालादीनामपि प्रवेशनात्तदनुसारेण सुखसाधनत्वव्यवस्था न दोषावहा स्यादिति वाच्यम्, घर्मकाले चन्दनादीनां विषयिणं प्रति सुखजनकत्वेऽपि विषयविमुखान्प्रति सुखजनकत्वादर्शनात्। स्रक्च-न्दनादिविषयैः सुखे जननीये तदभिलाषोऽपि सहकारिकारणमिति तदनभिलाषिणां विरक्तानां तादृग्विषयैः सुखानुदयेऽपि न तावता तेषां सुखसाधनताविरहः, अन्यान्प्रति तेषामेव सुखजनकत्वादिति चेत्, तर्हि अभिलाषानभिलाषावेव सुखतदभावयोः प्रयोजकौ स्यातामिति न तावताऽपि विषयाणां सुखसाधनतासिद्धिः। विषयेष्वभिलाषश्च पुरुषाणां तद्याथार्थ्यानवबो-धप्रयुक्तभ्रान्तिनिबन्धन एवेति न तेषां वस्तुतः सुखसाधनत्वम्। विषयसंनिधाने सति प्राक्तनवासनासध्रीचीनस्य चेतसो योऽयं विकारो रणरणिकामुत्पाद्य तदलाभे महद्दुःखं ददाति स एव खलु विषयाभिलाषो नाम। स च तत्तदभीष्टविषयप्राप्तिपर्यन्तं हृदयाभ्यन्तरे कोम-लकण्टकवदवतिष्ठमानः तत्प्रयुक्तभाविदुःखानामङ्कुरायमाणो भवतीति, समुद्धृतकण्टके चरणे सुखप्राप्त्यभिमानवत् विषयलाभे सति हृदयकण्टकायमानस्य तादृगभिलाषस्य तात्कालिकोपशमन-मेव हि सुखं सुखमित्यभिमन्यन्ते विवेकविधुराः। यदि विषयाणां क्षणिकत्वपरिणामविरसत्वादिदो-षानुसंधानं प्रागेव स्यात्तदा तादृग्विवेकवह्निना विषयाशाङ्कुराणां भस्मीकरणादात्यन्तिकी चित्तशान्तिर्भवतीति तत एव वास्तविकं सुखं समुदेति॥

न केवलमेषां विषयाणां वास्तविकसुखाजनकत्वमेव, प्रत्युत पुनः पुनरधिकतृष्णासमुज्जृ-म्भकतया मनसः सुतरामशान्तजनकतया च सर्वथा दुःखजनकत्वमेवेति विवेचनचतुराणां विद्व-द्वराणां नेदमनुभवविसंवादि स्यात्। तस्माद्विषयाणामनुभववशात् चित्तोपशान्तिजननद्वारा मनस्तृ-प्तिसंपादनप्रत्याशा, तरङ्गोपशमनानन्तरं समुद्रस्नानप्रत्याशावदाशामोदकमात्रमेव। अत एवाह पातञ्ज-लयोगसूत्रभाष्ये भगवान् वेदव्यासः— "या चेन्द्रियाणां तृप्तेरुपशान्तिः तत्सुखम्, या च लौल्या-दनुपशान्तिः तद्दुःखम्। न च भोगाभ्यासेनेन्द्रियाणां वैतृष्ण्यं कर्तुं शक्यम्। कस्मात्? यतो भो-गाभ्यासमनु विवर्धन्ते रागाः कौशलानि च तस्मादनुपायः सुखस्य भोगाभ्यासः" इति॥

तर्हि कुतो वा सर्वेऽपि खल्वमी प्राणभृतः सुखसंपिपादयिषया विशृङ्खलं व्याप्रियन्ते विषयेषु, इति चेत् अन्यथाग्रहादेवेति ब्रूमः। ते खलु प्रागुक्तरीत्या किमपि किमपि दुःखं स्वयमेव संपाद्य तत्प्रतिचिकीर्षया परं विषयेषु व्याप्रियन्ते, तल्लाभेन च तात्कालिकदुःखनिवृत्तौ जातायां सुखिनामिव स्वात्मानमभिमन्यन्ते; यथा ललाटंतपतपनतापपापच्यमानकलेवरः कश्चन काष्ठवाहकः क्वचन शीतलच्छायतरुमूले काष्ठभारमवरोप्य विश्राम्यन् सुखितोऽस्मीति मन्यते तद्वत्। न हि शिरस्यारो-पितकाष्ठभारस्य तादृग्भारापगमे सति स्वयंकृतप्राक्तनदुःखानामुपशान्तिमन्तरा वस्तुतः सुखप्राप्तिरपि तत्र सुवचा स्यात्। तदाह भर्तृहरिः—

'तृषा शुष्यत्यास्ये पिबति सलिलं शीतमधुरं
क्षुधार्तः शाल्यन्नं कवलयति सूपादिकलितम्।

प्रदीप्ते कामाग्नौ सुदृढतरमालिङ्गति वधूं
प्रतीकारं व्याधेः सुखमिति विपर्यस्यति जनः ॥' इति ॥

ततश्च प्राक्तनवासनावशंवदस्वचित्तपरिकल्पिततत्तद्दुःखानां तत्तद्विषयप्राप्त्या किंचिदुपशमे सति चित्तोपशान्तिर्या भवति तामेव सुखं सुखमिति व्याहरन्ति अभिमन्यन्ते च विवेकाविधुराः। सर्वथा चित्तोपशान्त्यैव कश्चिदानन्दो वा तदाभासो वा भवतीति तु निर्विवादम्। चित्तोपशान्तितारतम्यादेव हि प्राणिनामानन्दतारतम्यभानम्। अत एव भगवती श्रुतिरानन्दवल्ल्यां मानुषानन्दमारभ्य शतगुणोत्तरोत्तरमुत्कर्षभाजां हैरण्यगर्भानन्दपर्यन्तानामानन्दमात्राणां तारतम्यं तच्चित्तोपशान्तितारतम्यनिबन्धनमेवेति स्फुटतरमुदटङ्कयत्। उदघोषयच्च वाचामगोचरमचिन्तनीयमहिमानमनधिगम्यसीमानमाश्रितस्थेमानमपरिच्छेद्यप्रथिमानमनुपमानं ब्रह्मानन्दनामानमानन्दभूमानम् ॥

अयमाशयः। आनन्दो हि नाम परमार्थतो ब्रह्मस्वरूपमेव; 'विज्ञानमानन्दं ब्रह्म' 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादिश्रुतेः। वैषयिकसुखमपि प्राक्तनपुण्योपगमितसात्त्विकधीवृत्तौ प्रतिफलिततादृगानन्दात्मकब्रह्मप्रतिबिम्बमात्रमेव। सात्त्विकवृत्तितारतम्यादेव तत्प्रतिफलितानन्दस्वरूपेष्वपि तारतम्यप्रतिभानमुपपद्यते। चित्तस्य हि विषयसांनिध्यनिमित्तप्राक्तनवासनासमुद्बोधे सति तादृग्वासनासध्रीचीने चेतसि तत्तद्विषयसंकल्पातिशयवशात्तत्र तत्र कामना प्रथममुदेति। भावनाप्रकर्षेण च तादृशकामनायां परिपुष्टायाम्, कामिततत्तद्विषयाणां च यथाकालमलाभे, लाभेऽपि वा तदनुभवप्रतिबन्धे च सति चापल्यातिशयात् तद्विलम्बासहिष्णुताप्रयुक्तं दुःखं प्रादुर्भवति। प्राक्तनसुकृतैस्तु तेष्वेव विषयेषु कथंचिदनुभवयोग्यतामापादितेषु तद्विषयककामनायाः तदुद्दीपितचापल्यस्य वा तत्प्रयुक्तदुःखानां वा किंचिदपगमेन तात्कालिकचित्तोपशमसंभवात् तादृशप्रशान्तसात्त्विकचित्तवृत्तौ आनन्दरूपस्य ब्रह्मणः प्रतिफलने जाते तदैव सुखितोऽस्मीत्यभिमन्यन्ते विवेकविकलाः। तदुक्तं विद्यारण्यचरणैः—

विषयेष्वपि लब्धेषु तदिच्छोपरमे सति।
अन्तर्मुखमनोवृत्तावानन्दः प्रतिबिम्बति ॥

यद्यत्सुखं भवेत्तत्तद्ब्रह्मैव प्रतिबिम्बनात्।
वृत्तिष्वन्तर्मुखास्वस्य निर्विघ्नं प्रतिबिम्बनम् ॥ इति ॥

न च विषयसंयोगादेव चित्तोपशान्तेर्वा तत्प्रयुक्तसुखातिशयस्य वा प्रादुर्भावदर्शनात् तस्यैव तादृक्सुखसाधनताऽस्तु इति वाच्यम्, तथा सति वीतरागाणामपि विषयसंयोगे सति प्राकृतजनानामिव सुखपारवश्यप्रसङ्गात् सरागाणां च प्रियेष्वपि विषयेषु कदाचित् द्वेषाभावप्रसङ्गाच्च। दृश्यन्ते हि तादृशा अपि विषयाः ये खलु कस्यचित् कदाचिदत्यन्तप्रियतमा अपि कालान्तरे तस्यैव द्वेष्यतां प्रतिपद्यन्त इति। किं च यदि विषयेभ्य एव ऐकान्तिकी सुखप्राप्तिः स्यात् तर्हि न कोऽपि विश्रान्तिलाभाय सुषुप्त्यवस्थामनुधावेत्। विविधविषयदेशविभ्रान्तचेतसो हि पुरुषाः अवश्यं तथाविधविश्रान्ति-

वर्गान्, विसृज्य दूरतस्तदभिलाषम्, विस्मृत्य बाह्याभ्यन्तरसुखदुःखभेदान्, अधिशय्य मृदुलतरशय्याविशेषान्, आश्रित्य निद्राभिमुखीं चित्तवृत्तिम्, प्रसार्य च पाणिपादादीन्, निमील्य च नयनयुगलीम्, विगलितवेद्यान्तरपरमानन्दनिर्वृतान्तरङ्गाः सन्तः सौषुप्तसुखस्य सर्वोत्कृष्टताभिमानेनैव विश्रान्तिकामनया सुषुप्त्यवस्थामनुधावन्तीति सार्वजनीनम्। सौषुप्तसुखं च विषयानभिव्यङ्ग्यतया देशकालादिपरिच्छेदरहिततया च परमानन्दरूपं ब्रह्मैव, तद्योगादेव च जीवस्य तदा सुखाविर्भावः, तदर्थमेव च जीवस्य प्रत्यहं सुषुप्त्यवस्थानुधावनम् इति तु सर्वत्रैव उपनिषदामुद्घोषः। विषयसुखानां तु अतथाविधत्वेन कादाचित्कत्वेन च न तेषां नियतरूपत्वम्। अत एवाहुः श्रीमन्तो भगवत्पादाः—

> यस्माद्यावत्प्रियं स्यादिह हि विषयतस्तावदस्मिन्प्रियत्वं
> यावद्दुःखं च यस्माद्भवति खलु ततस्तावदेवाप्रियत्वम्।
> नैकस्मिन्सर्वकालेऽस्त्युभयमपि कदाऽप्यप्रियोऽपि प्रियः स्या-
> त्प्रेयानप्यप्रियो वा सततमपि ततः प्रेय आत्माख्यवस्तु ॥ इति।

तस्माद्विषयाणां सुखसाधनत्वाभिमानो भ्रान्तिनिबन्धन एव। अत एव विषयाणामभावेऽपि स्वत एव शान्तचित्तानां तत्तच्चित्तोपशान्तितारतम्यादानन्दतारतम्यं जायमानमद्याप्यसन्नयनपदवीमवगाहते ॥

अपि च। आनन्दो हि जीवनसाधनम्। न हि सर्वथा निरानन्दः कश्चन प्राणी प्राणितुं क्षमते। 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इति श्रुतेः। यदि आनन्दो नाम विषयजन्य एव स्यात् कथं तर्हि निर्विषयाणां ब्रह्मविदामपि स उपलभ्यते। ब्रह्मविदो हि सर्वतो निःस्पृहाः स्वत एव शान्तचित्ताश्च सन्तो निरतिशयानन्दभाज इति तदीयमुखप्रसादादिलिङ्गैरवगम्यते। ततश्च विषयाणामभावेऽपि चित्तोपशान्तिमतां सुखातिशयदर्शनात् विषयसांनिध्यवतामप्यशान्तचित्तानां सुखलेशाभावस्य प्रत्युत दुःखातिशयस्यैव दर्शनाच्च चित्तोपशान्तिरेव अन्वयव्यतिरेकाभ्यां सुखसाधनमिति निर्णयो निष्प्रत्यूह एव। स्वतः शान्तिरहितानां विषयसंयोगादेव तादृग्मनःशान्तिं लिप्समानानामविवेकिनां तु तज्जन्यक्षणिकसुखाभासोऽपि जायमानो दुःखसहस्रकलुषित एव जायेत ॥

तथा हि धनकनकवस्तुवाहनगृहारामक्षेत्रपुत्रमित्रकलत्रादयः खलु सुखसाधनानीत्यभिमन्यन्ते बालिशाः, तत्संपादनं च विना दुःखसहस्रानुभूतिं न घटेत। संपादने च यावद्दुःखं तदपेक्षया द्विगुणं तद्रक्षणे स्यात्। रक्षितानां वर्धने विनियोजने वा जायमानं दुःखं तु ततोऽप्यधिकतरम्। तेषामपि कदाचिदपक्षये वा नाशे वा जायमानं दुःखं तु अवर्णनीयमेव। तदेवमेतादृग्दुःखसहस्रमनुभूतवतः तन्मध्ये यः स्वल्पानन्दलेशो विद्युदुद्द्योत इव सद्यो विद्योतते, सोऽयं दुःखतया परिगणनीयो वा सुखत्वेन परिगण्यतां वा इति सुधिय एव विवेचयन्तु। यदि हि क्षारसमुद्रे क्षिप्तोऽपि क्षीरबिन्दुः क्षणमपि स्वीयं मधुरिमाणमनपहाय कस्यचित्सुखाकरिष्यति, तर्हि प्रागुक्तरीत्या परःसहस्रदुःखजालजटिलोऽयं वैषयिकानन्दलेशोऽपि स्वकीयस्वादिमानं मा हासीत्। परं तु कथमिदं संभाव्येत ? न हि

खलु तादृग्दुःखसहस्रमननुभूतवतोऽपि कस्यचिदनुभवगोचरो नाम भवेद्विषयानन्दः, सुखलेशस्यापि दुःखसहस्राविनाभूततायाः भूयिष्ठमुपलम्भात्, दुःखानुपसृष्टविषयसुखस्य तु कुत्राप्यनुपलम्भाच्च ।

तदुक्तं विद्यारण्यचरणैः—

गृहक्षेत्रादिविषये यदा कामो भवेत्तदा ।
राजसस्यास्य कामस्य घोरत्वात्तत्र नो सुखम् ॥

सिद्धयेन्न वेत्यस्ति दुःखमसिद्धौ तद्विवर्धते ।
प्रतिबन्धे भवेत्क्रोधो द्वेषो वा प्रतिकूलतः ॥ इत्यादिना ॥

तथा च तत्तादृशदिग्देशकालाद्यनवच्छिन्ननिरवधिकब्रह्मानन्दसिन्धुबिन्दुकणिकायमानानां क्षणिकानां क्षुद्रानन्दानां लाभाय यत्प्रयतनम्, या च तदर्थं विषयजातसमार्जनाभिनिवेशव्यग्रता, यश्च तद्रक्षणवर्धनविनियोजनादिपरिक्लेशः, यश्च तादृग्विषयालाभतत्प्रतिबन्धादिप्रयुक्तक्रोधसंरम्भविजृम्भितम्, याऽपि परोत्कर्षासहिष्णुतादिप्रयुक्तक्लेशजातक्षुभिताचित्तता, या च स्वाभीप्सितविषयाविनश्वरतानुसंधानजनितदुर्निवारदुःखानलदन्दह्यमानचित्तता, या च भूयो भूयस्तेषामनुभवेऽप्यतृप्तिपरवशता, यश्च तन्नान्तरीयकसंख्यातीतविविधदुःखजातानुभवः, तत्सर्वं श्रौतमार्गेष्वश्रद्धालूनामधःपतयालूनां क्षणिकसुखस्पृहयालूनामवर्जनीयमेवेति ये तावदेवं विषयस्वरूपयाथार्थ्यं मनागिव विवेचयन्ति ते कथमीदृशेषु क्षुद्रानन्देष्वभिनिविशेरन्? कथंतरामापातरमणीयविषयेभ्यः चित्तोपशान्तिं लिप्सेरन्? कथंतमां च ततः सुखप्राप्तिमभिमन्येरन्? न हि खलु स्वत एव विषयवैतृष्ण्यवशात्प्रशान्तचित्तानां तदर्थं विषयान्वेषणप्रत्याशा क्वचिदास्पदं लभेत; न वा स्वस्वरूपभूतमपगतसीमानमानन्दभूमानमनवरतमनुसंदधानानां क्षणिकानन्दोऽपि कुहचित्काङ्क्षणीयः स्यात् ॥

तदित्थं तत्तदानन्दानां चित्तोपशान्तिनिबन्धनतामभिसंधायैव हैरण्यगर्भानन्दान्तानां तेषामुत्तरोत्तरं शतगुणिततां श्रुतिः पर्यजीगणत् । अकामहतश्रोत्रियानन्दस्य पुनरवाङ्मनसगम्यातिरम्यश्रुतिगम्यविगततारतम्यब्रह्मानन्दसाम्यमनुचिन्त्यैव प्रतिपर्यायं तमपि प्रत्यपीपदत् । अकामहतत्वप्रयुक्तचित्तोपशान्तितारतम्यमेव तत्तदानन्दतरतमभावे हेतुरिति सूचयितुमेव तत्तत्पर्याये श्रोत्रियानन्दमपि तत्तत्परिमाणमिव प्रादीदृशत् । तथा अनुभूतसर्वमानुषानन्दतया ततो विरक्तस्य सार्वभौमस्य यः सुखातिशयो भवति तदपेक्षया तावन्मात्रे निःस्पृहस्यापि श्रोत्रियस्य अतिशयिततर एवानन्दो भवतीति बोधयितुमेव प्रथमपर्याये श्रोत्रियानन्दं नाजूघुषत् । सार्वभौमस्य श्रोत्रियस्य वा निःस्पृहतायां समानायामपि चित्तोपशान्तिः श्रोत्रियस्यैव खल्वभ्यधिका स्यात् । न हि सार्वभौमवत्तत्तत्सामग्रीसंपादनतद्रक्षणादिजनितं दुःखं श्रोत्रियः कश्चिदनुभवति । ततश्च प्राक्तनपरःसहस्रदुःखोपसृष्टचित्तोपशान्तिसंपादनद्वारा ततो विरक्तस्य सार्वभौमस्य, दुःखाननुषक्तस्वतःसिद्धचित्तोपशान्तिमत्तया मानुषानन्दनिःस्पृहेण श्रोत्रियेण साकं कथमिव साम्यं संघटते? अत एवोक्तं विद्यारण्यमुनिवरैः—

निष्कामत्वे समेऽप्यत्र राज्ञः साधनसंचये ।
दुःखमासीद् भाविनाशादतिभीरनुवर्तते ।
नोभयं श्रोत्रियस्यातस्तदानन्दोऽधिको मतः ॥ इति ॥

अयि पाठकवरेण्याः ! इदमेव हि रहस्यं संविदाना अस्मत्पूर्वपुरुषाः सर्वतो निःस्पृहाः सन्तः सुखेन जीविकां निर्वर्तयामासुः ऐहिकमामुष्मिकं च सीमातीतमानन्दभूमानमनुबभूवुः । यदि हि भवन्तः सुखाभिलाषिणो भवेयुस्तर्हि तमेव पूर्वपुरुषैः प्रहतमपगतातङ्कं पन्थानं विगताशङ्कमनुरुन्धन्तु । तथा यावद्यावन्मनःशान्तिरभ्यधिका भवति तावत्तावत्सुखोत्कर्षोऽप्यतिरिच्यत एवेति प्रागुक्तरीत्या निश्चित्य तादृक्शान्तिसंपादनार्थमेव सर्वे कृतपरिकरा भूत्वा भूयसामपि श्रेयसां भाजनानि भवन्तु भवन्त इति भूयो भूयोऽप्यभ्यर्थयामहे वयमिन्दुकलावतंसमिन्दिरारमणं चेति सर्वतः शिवम् ।

॥ ओं तत्सत् ॥

सच्चिदानन्दतीर्थेन निबन्धोऽयं निगुम्फितः ।
अमत्सराणां सुधियां मनस्तोषाय कल्पताम् ॥

अथ वा नैष दोषज्ञजनतोषाय कल्प्यते ।
दोषाकरोऽपि यच्छीर्ष्णि तत्तोषायास्तु किं स्वयम् ॥







# ॥ सर्वदर्शनानामद्वैतमतानुगुणत्वम् ॥

## कल्याणपुरीशंकरमठपाठशालाध्यक्षेण वेङ्कटेशशास्त्रिणा विरचितम् ॥





विदितोऽयं विषयः समेषां यदत्र प्राणिनः सुखार्थं प्रयतन्ते, दुःखप्रहाणाय निवर्तन्त इति, परं तु सुखसाधकं दुःखपरिहारकं चोपायं नैव प्रतियन्ति, इति सविस्रम्भं भणितुं प्रभवामः। यद्यपि दुःखसंभिन्नाया आनन्दमात्रायाः साधनसाहितीमन्वयव्यतिरेकाभ्यां ज्ञातुमीशते, तथाऽपि अलौकिकसुखोपायं नैवागमादृते बोद्धुं पारयन्ति ॥

स चागमः 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' इति याज्ञवल्क्योक्तरीत्या चतुर्दशभिः प्रभेदैः प्रविभज्यते। आयुर्वेदादिभिरुपवेदैः सहितानि तान्यष्टादशेत्यपि वदन्ति। पाञ्चरात्राद्यागमानां रामायणादीनामितिहासानां च पुराणेष्वेव यथायथमन्तर्भावः। बौद्धाद्यागमाः साक्षात्परंपरया वा न पुमर्थमातन्वन्तीति न ते विद्यास्थानत्वेन गण्यन्त इति केचनाशेरते ॥

अन्ये तु इत्थमभिप्रयन्ति— 'वेदमार्गजनितं तु वेदनं दोषहीनमतिशोभनं सदा। अन्यमार्गजनितं तु वेदनं वेदमार्गरुचिकारणं भवेत् ॥' इति सूतसंहितास्थपद्यपर्यालोचनायां सर्वाण्यप्यास्तिकानि नास्तिकानि च दर्शनानि साक्षात्परंपरया वा पुमर्थोपायकानीत्येवोपेयमिति। अस्य

चेत्थमर्थः— वेदनं मोक्षसाधनीभूतं ब्रह्मज्ञानम् 'प्रत्यग्ब्रह्मैकताज्ञानम्' इति पूर्वं तस्य प्रकृतत्वात्। वेदमार्गजनितं वेदान्ताख्यप्रमाणजनितम्, 'विना वेदान्तविज्ञानम्' इत्यत्र वेदान्तस्य प्रकृतत्वात्। दोषहीनं यथा धर्मादिज्ञानं क्षयिताप्रयुक्तदुःखानुषक्तस्य स्वर्गादेरनुष्ठानद्वारा संपादकं न तथेदं दुःखानुषक्तफलसाधनं भवति। कुतः? सदाऽतिशोभनं निरतिशयानन्दाभिव्यञ्जकम्। अन्यमार्गजनितं वेदान्तव्यतिरिक्तैः प्रमाणत्वेन संमतैः कर्मकाण्डधर्मशास्त्रशब्दन्यायादिशास्त्रैर्बौद्धादिनास्तिकशास्त्रैश्चोत्पादितं वेदनं, धर्मादिज्ञानम्। विचारतः सूक्ष्मेक्षिकया पर्यालोचनायां नाहनिन्दान्यायेन, उत्सर्गापवादन्यायेन च पर्यालोचन इति यावत्। वेदमार्गरुचिकारणं वेदान्तशास्त्रपठन इच्छोत्पादकम्, अद्वैतब्रह्मज्ञानोत्पत्तिसाधनमिति यावत्; क्रमात्, साक्षात्, परंपरया वा, इति यावत्॥

एतदुत्तरार्धसंक्षिप्त एवार्थः उपरिष्टात् कथं बौद्धाद्या आगमा वेदान्तमार्गरुचिहेतव इत्याक्षेपस्य समाधानद्वारा विव्रियते 'अथातः संप्रवक्ष्यामि मार्गप्रामाण्यमुत्तमम्' इत्याद्यैः 'अनेकभेदभिन्नानि तथा शास्त्रान्तराणि च। निर्ममे शंकरः साक्षात्सर्वज्ञः संग्रहेण तु॥' इत्यन्तैः पद्यैः। एषां पद्यानामयमाशय उन्नीयते— न हि बौद्धाद्यागमा नास्तिकविरचिता वेदविरुद्धमर्थं प्रकाशयन्ति, श्रुतिसंमतं प्रतिक्षिपन्तीत्यप्रमाणभूताः, तेषां सर्वेषामपि सर्वज्ञशंकरप्रणीतत्वात् इति। अनेकभेदभिन्नानीत्यनेन आपाततो दर्शनानि मिथोऽव्याहतार्थानि भासन्ते, तथाऽपि विवक्षिते परमतात्पर्यविषयेऽर्थे ऐककण्ठ्यं भजमाना एव भवन्ति। यदि तेऽप्रामाण्यमापत्स्यन्त तर्हि ईश्वरः असर्वज्ञभावमभजिष्यतेत्यर्थः स्पष्टीक्रियते॥

ननु वैष्णवाद्यागमानां विष्णवादयः प्रणेतार इत्यभियुक्ता अभ्युपगच्छन्ति। कथं तेषां शंकरो निर्मातेति संदिहानान्प्रति, 'प्रसादादेव रुद्रस्य ब्रह्मविष्णवादयः सुराः' इत्यादिना 'कुर्वन्ति तानि नामानि कथितानि महर्षिभिः' इत्यन्तेन पद्यजातेन प्रतिवचनं व्यधाद्भगवान्व्यास इति प्रतीयते। तत्र व्यासाचार्य इत्थमाशेते— ईश्वरप्रसादादेव ब्रह्मविष्णवादयस्तत्तदागमान्व्यरचन्, न स्वातन्त्र्येण; मूलकर्ता तु परमेश्वर एवेति। किमर्थमीश्वरो भिन्नभिन्नानि प्रस्थानानि निरमास्तेति विशयानान् 'अधिकारिविभेदेन नैकस्यैव सदा द्विजाः' इत्यादिभिः 'येन येन प्रकारेण जनैरेभिरुपासितः। तत्तन्मार्गानुसारेण साधकत्वमुपैति सः॥' इत्यन्तैः पद्यैः प्रत्यवोचत्। तत्रापीत्थमभिप्रैति— लोको भिन्नरुचिः, अधिकारिणो जनाश्च मन्दमध्यमोत्तमा दृश्यन्ते, सर्वे श्रेयोमार्गे प्रवर्तनीयाः। केषुचनाधिकारिषु सोपानारोहणरेखागवयादिन्यायोऽनुवर्तनीयः। केचन बुद्धिकुशलाः सूक्ष्मे पथि संचारयितव्याः। अतः अधिकारिसामर्थ्यानुरोधेन प्रस्थानानि प्रवर्तनीयानि। यथा तावद् वणिजोऽशनवसनोपयोगीनि विक्रेयाणि वस्तून्यकिंचनसकिंचनानुरोधेन विपण्यां विक्रयार्थं स्थापयन्ति। न हि निःस्वाः आढ्यक्रीयमाणानि वस्तूनि क्रेतुं समीशते। न वा धनिका दरिद्रैः क्रीयमाणानि वस्तूनि क्रेतुमभिलषन्ति। अशनवसनादिप्रयोजनमुभयोरविशिष्टम्। तथाऽतिमन्दाः अधिकारिणः कुण्ठितचरणसदृशा वेदान्तप्रस्थानेऽभीष्टगम्यदेशप्रापके प्रथमत एव प्रवर्तयितुमयोग्याः क्रमेण गम्यदेशप्रापके स्थूल एव मार्गे संचारयितव्या इत्याशयानो भगवान् शंकरः (शिवः) तत्तदाचार्यपुरुषद्वारेण तत्तत् स्थूलं प्रस्थानं प्राणैषीत् इत्येवोपेयम्॥

युक्तं चैतत् । नोपदेशमात्रेणास्मिन्नर्थे श्रद्धाऽऽधातव्या । तथा हि—यदि तानि तानि प्रस्थानानि भिन्नभिन्नोद्देश्यपरतां प्राप्स्यन्त तदाऽन्योन्यव्याहतार्थानि किमेतेषूपादेयं किं हेयमिति संशयमादधानानि श्रेयोऽभिलाषिभिर्नैवोपादीयेरन् । ननु यत्प्रस्थानं युक्तिमत् तदेवोपादद्मः । न चाविश्वासः करणीयः । प्रेक्षावद्भ्यो महानुभावेभ्यः अयमेव श्रेयःसाधनो मार्ग इत्यवगन्तुं पार्यत्वादिति चेत्, अत्र प्रतिवदामः । अत्र यावत्कश्चन तत्तादृक्षः पुरुषधौरेयः 'अयमेव श्रेयःप्रापकः पन्थाः, इममेव पन्थानं निःश्रेयसाभिलाषिणोऽवलम्बेरन्, नान्यं मार्गम्, तथा सति समीहितं देशं नापद्येरन्, अमितं दुःखव्रातमेव समीयुः' इति बोधं बोधमेकस्मिन्नेव नियमिते पथि प्रवर्तयमानो नैव विलोक्यते । श्वस्तादृश उत्पत्स्यत इति कः श्रद्दधीत ॥

अधुनाऽपि परीक्षका मिथो विवदमाना दृश्यन्ते । केचन प्राक्तनकर्मवासनावशीकृता वैष्णवागमेषु बद्धश्रद्धास्तदुक्तचर्यानिरताः 'भागवतादिपुराणप्रसिद्धे वैकुण्ठादिलोकविशेषे विशेषतोऽभिव्यज्यमानः पुरुषविशेष उपास्यदेवता, इतरे तदधीनाः, तत्प्रसादात्तल्लोकप्राप्तिरेव परमः पुमर्थः' इतीममर्थं श्रुतिस्मृतिपुराणन्यायैः प्रसाधयन्ति । शिवोत्कर्षावेदकानां पुराणानां तामसत्वमुद्घोषयन्ति । प्रामाणिकं तन्मतमाद्रियामहे का क्षतिः इति नैव वक्तुं युक्तम् । यतस्तद्विरुद्धमपि मतममितयुक्तियुतं जागर्ति । तथा हि अपरे केचन प्राग्भविकवासनावासिताः शैवागमेषु बद्धादरास्तदुक्तदीक्षाचर्यादिबद्धदीक्षाः 'स्कान्दादिप्रसिद्धे कैलासलोके विशेषतो विभासमानः शिव एवोपासनीयः, अन्या देवतास्तमेवानुरुन्धाना वर्तन्ते' इत्येवं स्वाभिमतार्थसाधनकृतसंनाहाः श्रुतिस्मृतिवाक्यानि तथैव योजयन्ति । किं बहुना, सर्वेऽपि तीर्थकराः यस्य यस्य योऽभिमतोऽर्थः तत्र तत्रैवार्थे श्रुतिस्मृतिपुराणादीनां तात्पर्यं वदितुमुत्सहन्ते । तदनुकूलामेव न्यायसरणिमारचयन्ति, तत्त्वबुभुत्सूनां किं दर्शनमनुसरणीयमिति नाद्यापि निश्चयः समजनि । यदि सर्वेषां प्रामाणिकताऽभ्युपेतव्या तर्हि तद्दर्शनानामैककण्ठ्यमूरीकर्तव्यम् । एतमभिप्रायमेव 'कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा। यद्युभावपि सर्वज्ञौ मतभेदः कथं तयोः ॥' इति पद्यमप्याविष्करोति । अतः सर्वेऽपि दार्शनिका एकस्मिन्नेव परमोद्देश्ये बद्धादरास्तत्प्रतिपत्तयेऽधिकारिबुद्धिमनुसरन्तः, अव्यवस्थितान्पथः प्रादर्शयन्निति स्वीकर्तव्यम् । 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति पद्यमपीममेवाशयमुद्घाटयति । तत्र कस्मिन्नर्थे एतेषां महातात्पर्यमिति विचारणायां श्रुतिशिरःप्रतिपाद्येऽद्वैते ब्रह्मण्येवेति निःसंकोचमाख्यातुं पारयामः ॥

ननु कथमिदं संघटते? चार्वाकबौद्धजैनाद्यागमा वेदविरुद्धानेवार्थानुपश्लोकयन्ति । प्रतिषेधन्त्याम्नायान्तवेद्यमर्थम् । तत्र चार्वाक इत्थं ब्रूते— 'अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥ त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः । जर्फरीतुर्फरीत्यादि पण्डितानां वचः श्रुतम् ॥ यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत् । भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः । नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥' इति । इमानि च पद्यानि चार्वाकस्य महान्तं वेदविद्वेषं प्रख्यापयन्ति । एवं सुगतमताभिनिवेशिनः अग्निहोत्रादीनां धर्मत्वं नाभ्युपगच्छन्ति, किं तु स्वकपोलकल्पितानां

द्वादशायतनपूजादीनामेव। एवं खलु ते वदन्ति— 'अर्थानुपार्ज्य बहुशो द्वादशायतनानि च। परितः पूजनीयानि किमन्यैरिह पूजितैः॥ ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च। मनो बुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः॥' इति। विवेकविलासाख्यग्रन्थे च, 'बौद्धानां सुगतो देवो विश्वं च क्षणभङ्गुरम्' 'कृत्तिः कमण्डलुर्मौण्डयं चीरं पूर्वाह्नभोजनम्। संघो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः॥' अत्र स्मृतिविरुद्धा एव संन्यासाश्रमधर्माः कथिताः पूर्वाह्नभोजनसंघस्थित्यादयः। किं च बौद्धशास्त्रप्रक्रियामार्गोऽप्यतीव विलक्षण इति तद्ग्रन्थपरिशीलिनां स्पष्टम्। आर्हता अपि श्रुत्यादिविरुद्धमेवात्मनः शरीरपरिमाणत्वमुररीचक्रुः। मोक्षस्यालोकाकाशे सततोर्ध्वगमनरूपत्वमभ्युपागमन्। वेदासंमतानां तप्तशिलारोहणादीनां धर्मतां प्रतिपेदिरे॥

अत्र प्रतिविदध्मः। नैतावता तानि दर्शनान्यप्रमाणतां भजेरन्, सर्वज्ञेन शंकरेण बृहस्पत्याद्याचार्यद्वारा तेषां प्रणीतत्वात्। तेषां दर्शनानां विवक्षितोऽर्थः अद्वैतमतोपयोगी भवितुमर्हत्येव। सर्वाण्यपि दर्शनानि तात्पर्यविषय एवार्थे प्रमाणभावं प्रपद्यन्ते; अन्यथा महान्वेदराशिरपि 'प्रजापतिरात्मनो वपामुदखिदत्' 'ग्रावाणः प्लवन्ते' 'सोऽरोदीत्' इत्येवंरूपासंबद्धार्थवाक्यभूयिष्ठोऽप्रमाणमेव भवेत्। तस्मात् यथा मन्त्राणामर्थवादानां च विधिनिषेधापेक्षितस्तुतिनिन्दयोः प्रामाण्यम्, तथा चार्वाकाद्या आगमा अद्वैतदर्शनोपयोगिनि विवक्षितेऽर्थे प्रमाणतां प्राप्नुवन्ति। दृश्यते च लोके कस्मिंश्चित्कर्मणि प्रवृत्तिसिद्धये तत्कार्यस्य महती स्तुतिः, ततो भिन्नस्य कर्मणो निन्दा च क्रियत इति। 'न हि शुण्ठ्यादिकमेव भक्षणीयं तत्सदृशः पदार्थो लोके नास्त्येव, माषादिकमतीव दुष्टं तद्भक्षणे प्राणहानिरेव स्यात् इत्यादीन्याप्तोक्तानि वाक्यान्यप्रमाणानि भवन्ति। विवक्षितार्थे तानि वाक्यानि प्रमाणान्येव। तानि च मन्दाग्निंप्रत्येव प्रवर्तन्ते। तेषां शुण्ठ्यादिभक्षणमेव श्रेयस्कारि, न तु माषादिभक्षणम्। कथं नु नाम ते शुण्ठ्यादिभक्षण एव प्रवर्तेरन्, न तु माषादिभक्षण इत्याशयेन माषादिभक्षणनिन्दा क्रियते। न तु तावता माषादिभक्षणं सर्वथा दुष्टम्, प्रवृद्धाग्नीनां माषादिभक्षणेनातिशयदर्शनात्॥

शक्यते च भणितुं चार्वाकशास्त्रं विवक्षितार्थे प्रमाणं भवतीति। चार्वाकदर्शनं स्थूलशरीरमात्मत्वेन ग्राहयति। तद्दार्ढ्योपयोगि पोषणं च सम्यगुपदिशति। तत्सर्वमात्मतत्त्वप्रतिपित्सूनां संग्राह्यमेव। 'शरीरमाद्यं खलु धर्मसाधनम्' इत्यभियुक्ता व्याहरन्ति। 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' इति काठके पठ्यते। 'यथाऽऽदर्शे तथाऽऽत्मनि' इति च तत्रैव श्रूयते। प्रथमवाक्ये धर्मपदेन वेदार्थः कथ्यते, अग्निहोत्रादिवद्ब्रह्मापि वेदार्थ एव, तच्च ज्ञातं सन्निःश्रेयसोपयोगि। शरीरदार्ढ्यं विना ब्रह्मज्ञानं संपादयितुं न शक्यत इति तद्वाक्यतात्पर्यमुन्नीयते। अत एव 'तमेतं वेदानुवचनेन' इति वाक्ये 'तपसाऽनाशकेन' इति भागः शरीरदार्ढ्योपयोगिहितमितमेध्याशनपरतया व्याख्यातः। द्वितीयवाक्ये शरीरं विष्णुपदाख्यस्य ब्रह्मरूपदेशस्य प्राप्तौ रथत्वेन रूपितम्। यथा अभिमतदेशावाप्तौ रथः साधनं तथा ब्रह्मप्राप्तौ शरीरमिति तेन रूपणेनावगम्यते। 'यथाऽऽदर्शे तथाऽऽत्मनि' इत्यस्यायमर्थः— यथा दर्पणे प्रतिबिम्बं सुव्यक्तं प्रतीयते तथेह मनुष्यदेहे बुद्धौ आत्मा स्पष्टं प्रतीयते, न स्वप्ने, न गन्धर्वलोके, न पितृलोके। ब्रह्मलोके तु यद्यप्यतिस्पष्टो भवति तथाऽपि स तु दुष्प्रापः।

अतो मनुष्यदेहक्षयात्पूर्वमात्मा ज्ञातव्य इति। सर्वथा मनुष्यदेह आत्मज्ञानोपयोगीति सिद्धम्। अतः शरीररक्षणविधायकम् 'यावज्जीवं सुखं जीवेत्' इत्यादिचार्वाकशास्त्रमद्वैतमतानुगुणमेव। शरीररक्षणं स्वयमेव प्राणिनः कुर्युः, किं तत्रोपदेशेनेति न भ्रमितव्यम्। यतः केचन मन्दबुद्धयः स्वस्वदेहमविगणय्य शरीरदौर्बल्यसंपादकेष्वसत्कर्मसु प्रवर्तमाना दृश्यन्ते। तान्प्रत्येवेदं लोकायतशास्त्रं प्रवर्तते। ऋणमपि वा कृत्वा शरीरसंरक्षणं कर्तव्यं, वैदिकमप्यग्निहोत्रादिकं न कार्यं, किमुतान्यल्लौकिकं कर्म इत्येव तन्प्रत्युपदेश उचितः। कथं नु नामासत्कर्मभ्यो निवृत्य, शरीररक्षणे व्याप्रियेरन्निति। एकत्र प्रवर्तनायान्यनिन्दापुरःसरं तत्स्तुतिरपेक्ष्यत इति पूर्वमेवावादिष्म। न च तावता ऋणकरणे, अग्निहोत्रादित्यागे तद्दर्शनस्याभिनिवेशः। अतस्तादृशान्मन्दमतीनसत्कर्मतो निवर्त्य शरीररक्षणे स्थापयित्वा स्थूलारुन्धतीन्यायेनाद्वैतमार्गे प्रतिष्ठापयति तद्दर्शनमित्येवोपेयम्। कथं नु ते शरीररक्षणेऽभिनिविशेरन्निति हेतोः शरीरमेवात्मत्वेन ग्राहयति। सर्वेषां प्राणिनामात्मन्यभिनिवेशात् शरीरस्यात्मत्वोपदेशे, नियमेन ते शरीररक्षणे यतेरन्नित्याशेरते चार्वाकानुयायिनः; न तु वस्तुतस्तस्यात्मत्वमभिप्रयन्ति। आस्तामिदम्॥

एवं बौद्धशास्त्रमप्यद्वैतमतानुगुणमिति निष्प्रपञ्चं वदामः। सौगता हि सर्वेषां पदार्थानां क्षणिकत्वमातिष्ठन्ते। न च पदार्थानां वस्तुतः क्षणिकत्वाभिप्रायेण तथा वदन्ति, किं तु यथाकथंचित्पुरुषा दुःखसाधनेषु बाह्यपदार्थेषु वैराग्यं प्राप्नुवन्त्वित्याशयेन। न च यथा पदार्थेषु क्षणिकत्वभावनया वैराग्यं भवति, तथा मार्गान्तरोपदेशेन संपादयितुं शक्यते। तथा च पदार्थाः क्षणिका भवन्तु, मा भूवन्। यथाकथंचित् श्रेयोऽभिलाषिणां वैराग्यमावश्यिकमित्यभिप्रायेणैव स्थिरत्वं पदार्थानां खण्डयित्वा क्षणिकत्वं प्रासाधि। किं च ज्ञानव्यतिरेकेणार्थ एव नास्तीति केचन बौद्धा मन्यन्ते। सोंऽशः अद्वैतिमतानुगुण एव भवति। यद्यप्यास्माकीनैर्भाष्यकारैः सोंऽशो निराकृतः, तथाऽपि परमार्थदृष्ट्या ज्ञानव्यतिरेकेण पदार्थानां भानं नास्त्येवेति खलु तेऽपि मन्यन्ते। व्यवहारकालेऽपि ज्ञानव्यतिरेकेण ते न भासन्ते इति वक्तुं न पार्यते। यतः तदात्वे तद्व्यतिरेकेण तेषां भानमनुभवसिद्धमपलपितुमशक्यम्। सुगतैकदेशी तु इत्थमभिसंधत्ते— व्यवहारकालेऽपि ज्ञानव्यतिरेकेण विषया न सन्त्येव, नापि भासन्ते; किमु वक्तव्यं परमार्थदृष्ट्या न सन्ति, न प्रकाशन्त इति। व्यवहारकालेऽस्तित्वभानयोर्निषेधे न तात्पर्यम्, किं तु तत्त्वज्ञानोत्पत्त्यनन्तरमेव। किं च बौद्धा हि चतुर्विधया भावनया पुमर्थं कथयन्ति। ताश्चेमाः चतुर्विधा भावनाः— सर्वं क्षणिकं क्षणिकम्, दुःखं दुःखम्, स्वलक्षणं स्वलक्षणम्, शून्यं शून्यमिति। तत्र आद्ये द्वे भावने वैराग्यजनन्याविति व्यक्तम्। स्वलक्षणभावनया जातिगुणादिविकल्प्येष्वपरमार्थतादृष्टिः स्थिरीभवति। शून्यभावनया क्षणिकविज्ञानेऽप्यात्मत्वदृष्टिर्निराक्रियते। न तु वस्तुतः क्षणिकविज्ञानमेवात्मा, सोऽप्यन्ततो नास्तीत्यभिप्रायेण। तथा च इमा भावना अद्वैतिनामनुकूला एव। तथागतोऽपि विनेयबुद्धिमनुसरन् आदौ बाह्यास्तित्वम्, ततस्तस्य प्रत्यक्षागम्यत्वम्, ततो ज्ञानव्यतिरेकेण नास्तित्वम्, ततः आत्मत्वेन गृहीतस्य क्षणिकविज्ञानस्यापि नास्तित्वमुपादिक्षत्। एतावतेदं सिद्धम्— तत्त्वं ग्राहयन्तस्तीर्थकरा अधिकारिमत्यनुसारेण परस्परव्याहतार्थानुपदेशान्कुर्वन्तीति। किं च, न हि भवति क्षणिकविज्ञान आत्मत्वोपदेशः वस्तुतस्तदेवात्मेत्यभिप्रायेण, किं तु स्थूलशरीरादावात्मत्वदृष्टिनिषेधाशयेन। एवं

तर्हि अस्मत्पूर्वाचार्याः किमर्थं बौद्धादिदर्शनं निराकुर्वन्। उच्यते— न हि ते अद्वैतिमताननुकूलमित्यभिप्रायेण तन्मतं पराणुदन्, किं तु तत्रापाततः प्रतीयमानमर्थमादाय अधिकारिणो मुह्येयुरित्यभिप्रायेण। अतो विवक्षितार्थे बुद्धिप्रसराय तदीययथाश्रुतार्थखण्डने प्रवृत्ता आस्माकाः पूर्वाचार्या इति ॥

आर्हतास्तु शरीरव्यतिरिक्तं शरीरपरिमाणमात्मानमुपयन्ति। न च तेषां शरीरपरिमाणत्व आग्रहः; किं तु शरीरव्यतिरेककथने। आत्मनो देहभिन्नत्वेऽल्पधिषणा इत्थमाशङ्केरन्— 'कथं न्वात्मा शरीव्यतिरिक्तः, अहं गच्छामि, अत्रातिष्ठे, अहमिहैवास्मि इति क्रियावत्त्वप्रादेशिकत्वादिना प्रतीयमानत्वात्' इति। सा च शङ्का तद्बुद्ध्यनुसारेण पराकरणीयेत्याशयवाञ्जिनाचार्यः 'आत्मा शरीरव्यतिरिक्तोऽपि शरीरपरिमाण एव। अतस्तत्र प्रादेशिकत्वं, क्रियावत्त्वं चोपपद्यते' इत्युपादिशत्। कथंचिच्छरीरव्यतिरेकं गृह्णन्त्वित्यत्रैवाभिनिवेशः। अद्वैतिभिरप्यात्मनः शरीरव्यतिरेकोऽपेक्ष्यते। सोऽर्थस्तैरेव साधितः, किं नश्छिन्नम्। तैरुपपादितः स्याद्वादोऽप्यद्वैतिनां परमानुकूल एव। तेन इदमित्थमिति निरूपणानर्हत्वप्रतिपादनेन भङ्ग्यन्तरेणानिर्वाच्यत्वमेव न्यरूपि। पूर्वाचार्याणां तत्खण्डनमपि यथाश्रुतार्थाभिनिवेशनिषेधपरम् ॥

गौतमकाणाददर्शनयोर्यथासंख्यमात्मविषये तदनुयायिनोर्भाट्टप्राभाकरदर्शनयोश्च देहव्यतिरेकनित्यत्वविभुत्वादीन्यद्वैतिमतानुकूलानि सम्यगुपपादितानि। तत्र गौतमकाणादप्राभाकरा आत्मनो जडस्वरूपत्वमुपश्लोकयन्ति। तत्र जडत्ववर्णनमात्मनि स्वभावतोऽनित्यज्ञानाभाववत्त्वाभिप्रायेण, न तु नित्यचिद्रूपत्वखण्डनपरम्। भाट्टास्तु ग्राहकत्वाद्ग्राह्यत्वाच्च चितिजडोभयात्मकत्वमभ्युपायन्। तत्र जडत्वकथनं पूर्ववदेव नेयम्। चितिस्वरूपत्वमद्वैतिसंमतमेव। सांख्ययोगिमतयोः केवलचितिस्वरूपत्वमुदासीनत्वं कर्तृत्वादिराहित्यं चाद्वैतिभिरपेक्षितमेव वर्णितम्। भोक्तृत्वस्य सुखदुःखसाक्षात्काररूपत्वात्। साक्षात्कारस्य चितिस्वरूपत्वेन, जडाया बुद्धेस्तदसंभवाभिप्रायेण आत्मन एव तदिति प्रतिपादितम्। तत्र न किंचिद्बाधकम्। तथा हि— कपिलः पतञ्जलिश्चाख्यातिवादिनौ महत्तत्त्वाख्यबुद्धेः सकाशात् विवेकाग्रहात्, आत्मनि बुद्धिगतधर्मवत्त्वव्यवहारमात्रमवदताम्। एवं च बुद्धिगतयोः सुखदुःखयोश्चिद्रूपसाक्षात्कारेण भेदाग्रहे आत्मनि भोक्तृत्वव्यवहार इति। प्रधानस्य परिणाम्युपादानत्वकथनम्, सूक्ष्मात् स्थूलस्यासतः उत्पत्तिरसंगता, दारुमयपात्रादावदर्शनात् इत्येवंपरम्। कथमन्यथा कणादाक्षपादप्रभाकरदर्शनेषु बहुयुक्तिभिः साधिते तन्तुपटन्यायोपोद्बलिते सत उत्पत्तौ, अभिव्यक्तेश्च सत्त्वे कारकव्यापारवैयर्थ्यमिति तर्कसहकृते आरम्भवादे जागरूके परिणामप्रक्रियोज्जीवति। एवमेव भट्टसांख्यपतञ्जलिसंमते 'असदकरणादुपादानग्रहणात्' इति कारिकोक्तयुक्तियुक्ते परिणामवादे जाग्रत्यारम्भवादोऽपि नोत्तिष्ठति। अतो गौतमकणादप्रभाकराणां परिणामवादखण्डन एव तात्पर्यम्; न तु यत्किंचिद्वादसमर्थने। एवमेव भट्टकपिलपतञ्जलीनामपि। एवं च वादद्वयासंभवे अनिर्वचनीयवादः सिद्ध्यति। न ह्यनिर्वचनीयाख्यो विधिरूपः कश्चन वादः अद्वैतिभिरभ्युपगम्यते; किं तु तत्तद्वादिभिर्यः परिणामवाद आरम्भवादो वा अङ्गीकृतः स न संभवति, निरूपणानर्हत्वात् इति। इममेवार्थम् 'पारिशेष्यात् सदेकमेव वस्तु अविद्यया उत्पत्तिविनाशादिधर्मैर्नटवदनेकधा विकल्प्यते' इति गीताभाष्यमुद्घोषयति ॥

एवं सत्ख्यात्यसत्ख्यातिवादिनौ नारायणभक्त्युत्कर्षप्रख्यापकौ च रामानुजानन्दतीर्थाचार्यावद्वैतिनां साहाय्यकमेवाचरताम्। तथा हि— शुक्तिरजतं सदेवेति बोधयद्रामानुजवाक्यमसत्ख्यातिनिषेधपरमित्येवोपेयम्। कथमन्यथा आनन्दतीर्थीयानामसत्ख्यातिसमर्थनयुक्तिषु जागरूकासु सत्ख्यातिवाद आत्मलाभं लभेत। एवमेव शुक्तिरूप्यमसदिति ज्ञापयदानन्दतीर्थीयं वाक्यं सत्ख्यातिनिषेधपरमेव। अन्यथा पूर्ववदेवात्मानं नैव विन्देत। एवं परस्पराक्षोभ्याभियुक्तिभिरनिर्वचनीयख्यातिरेव समर्थिता। अनिर्वचनीयख्यातिरित्यस्य ह्ययमर्थः— सदपि शुक्तिरूप्यं भासते इति वक्तुं न शक्यते। तथा असत् शुक्तिरूप्यं भासते इत्यपि न, परं तु सत्त्वेन, असत्वेन वा निरूपणानर्हं भासत इति। एवं नारायणभक्त्युत्कर्षस्य वर्णनमद्वैतिनामनुकूलम्, भक्तियोगस्याद्वैतज्ञानोपयोगित्वात्। भक्तियोगेन चित्तैकाग्र्यं वा क्रममुक्तिर्वा भवति। तत्र अस्या एव मूर्तेरुपासनं नान्यस्या इत्यत्राद्वैतिनां निर्भरो नास्ति। 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति' इति गीतावाक्यमिममेवार्थं प्रकटयति। अद्वैतज्ञानस्य मोक्षोपयोगित्वखण्डनम् नहिनिन्दान्यायेन भक्तिप्राशस्त्यपरम्; न तु विष्णुभक्तिरेव मोक्षसाधनमित्येवंपरम्। तथा सति शिवभक्त्युत्कर्षप्रतिपादके श्रीकण्ठादिदर्शने जाग्रति पूर्वोक्तदर्शनयोरपक्षपातिनां विस्रम्भो नैवोदियात्। 'शिवं विष्णुं वा यद्यभिदधति शास्त्रस्य विषयम्' इति दीक्षितीयं पद्यमिममर्थमाविष्करोति॥

एतेन तत्तन्मूर्त्युत्कर्षप्रतिपादकानीतिहासागमपुराणानि व्याख्यातानि। प्राक्तनवासनावशात् तत्तन्मूर्त्यभिनिवेशिनः प्रत्येव तत्तत्पुराणादीनां प्रवृत्तेः। केषांचन तामसत्वे, इतरेषामेव तामसत्वमिति प्रतिबन्द्या जागरूकत्वात्। 'आम्नायस्य क्रियार्थत्वात्' इति जैमिनिवाक्यं कर्मकाण्डानां क्रियास्ववान्तरतात्पर्यपरम्। कर्माण्यपि चित्तशुद्धिद्वाराऽद्वैतज्ञानोपयोगीन्येव। उपनिषदां कर्मसंबन्धिकर्तृस्तावकत्ववचनम्, ईश्वरदेवताभाववचनं, संन्यासनिषेधवचनं च कर्मप्राशस्त्यपरम्; न तु यथाश्रुतपरम्। अशुद्धचित्ताः कथं नु नाम कर्मण्येव प्रवर्तेरन् इति। यदि 'कर्मसंन्यासपूर्वकं ब्रह्मैव जानीयात्' इति प्रथमत एवोपदिशेत् तदा उभयतो भ्रष्टः अनर्थमृच्छेत्। एवमेवाभिप्रायम् 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्' इति गीतावाक्यम् 'अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्' इति वाक्यं च प्रकटीकुरुतः। शिक्षादीनां वेदाङ्गत्वात् वेदोपकारकत्वं, तद्द्वारा ब्रह्मज्ञानोपयोगित्वं च स्पष्टम्। अतोऽद्वैतदर्शनं सर्वोपकार्यम् इति सिद्धम्॥



SRIRANGAM SRI SANKARA GURUKULA SERIES No. 1.

# PANCHARATNAKARIKAS

BY

## SRI SADASIVA

A POETIC COMMENTARY
ON THE
**UPADESAPANCHAKA**
OF
**SRI SANKARABHAGAVATPADACHARYA**

EDITED BY
*Gurubhaktasikhamani, Sastraprasarabhushana,*
T. K. BALASUBRAHMANYA AIYAR, B.A.,
*Dharmadhikari, Sri Sankaragurukulam, Srirangam.*



—— SRIRANGAM ——
SRI VANI VILAS PRESS.
1939.





श्रीगुरुभ्यो नमः ॥

# ॥ पञ्चरत्नकारिकाः ॥

रामेन्द्रस्वामिनं वन्दे सच्चिदानन्दविग्रहम् ।
मुमुक्षूणामभयदं ब्रह्मात्मैक्यप्रदं गुरुम् ॥ १ ॥

तत्कृपालेशतो वाणीं पवित्रीकर्तुमुद्यतः ।
सदाशिवः करोतीमाः पञ्चरत्नस्य कारिकाः ॥ २ ॥

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयता-
मात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥

अतः प्रमाणान्तरतोऽप्राप्तिर्नैवात्र संमता ।
अपूर्वे रागतः प्राप्तिरत्र रागोऽपि वर्तते ॥ १९ ॥

तस्मान्नापूर्वविधिना तुल्यताऽत्र प्रसज्यते ।
व्रीहीणां प्रोक्षणं यत्तत्प्रमाणान्तरतो न हि ॥ २० ॥

तत्रैव प्रोच्यतेऽपूर्वविधिर्मीमांसकैः परः ।
व्रीहीणां वितुषीभावः खण्डनेन नखेन वा ॥ २१ ॥

प्राप्तो नियम्यतेऽस्त्यर्थमवहन्तीति वाक्यतः ।
नैवमत्र तु रत्यादिसुखप्राप्तिः सदा भवेत् ॥ २२ ॥

संस्कारबलतो लोके स्तनपानप्रवृत्तिवत् ।
पाक्षिकी प्राप्तिरपि सा नास्त्येव परिसंख्यया ॥ २३ ॥

तत्र चान्यत्र च प्राप्तौ परिसंख्याविधिर्भवेत् ।
सर्वेषामामिषं भक्ष्यं रागतः प्राप्तमञ्जसा ॥ २४ ॥

तत्र पञ्चेति वाक्येन पञ्चैवेति नियम्यते ।
एवं सौत्रामणीवाक्यं न हिंस्यादिति चापरम् ॥ २५ ॥

निवर्तयेद्यथा शास्त्रमादरेणाविपश्चितम् ।
पूर्वकाण्डेऽपि संकोचः कृत एवं हितावहः ।

किमुतोत्तरमीमांसाराद्धान्ते तद्धितैषिणा ॥ २६ ॥

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥ २७ ॥

एवं वर्णाश्रमप्रोक्तं कर्म नित्यादिकं च यत् ।
तदेव साङ्गं कुर्वीत येन यज्ञः प्रसीदति ॥ २८ ॥

फलाभिसंधिरहितमहंकर्तृत्ववर्जितम् ।
ॐ तत्सदिति निर्देशपूर्वकं कर्म आचरेत् ॥ २९ ॥

कारकः कर्म करणं संप्रदानं तथैव च ।
सर्वमोमिति संचिन्त्य भक्त्या सर्वेश्वरेऽर्पयेत् ॥ ३० ॥

एवमन्यानि कर्माणि लौकिकान्यपि सर्वदा ।
ईश्वरायार्पयेद्विद्वान्येन बन्धाद्विमुच्यते ॥ ३१ ॥

सर्वकामपरित्यागे मतिं कुर्याद्दृढां तथा ।
तद्यथेत्यादिवचसा क्षयिष्णुत्वावलोकनात् ॥ ३२ ॥

प्लवा ह्येत इत्यपीदं श्रुत्युक्तमवलोकयेत् ।
अनर्थबहुलं दुःखमैहिकामुष्मिकं च यत् ॥ ३३ ॥

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥ ३४ ॥

फलाभिसंधिरहिते तेऽपि कुर्यात्प्रयत्नतः ।
स संन्यासीत्यर्जुनाय हरिणोक्तं हितैषिणा ॥ ३५ ॥

निष्कामकर्मानुष्ठानाद्विशुद्धधिषणः पुमान् ।
ज्ञानानुत्पत्तिहेतूनि सर्वपापानि नाशयेत् ॥ ३६ ॥

ततस्तु दोषदृष्टिः स्यात्संसृतौ दुःखरूपता ।
सत्त्वशुद्धेः फलं दृष्टमुद्भवत्येव तत्क्षणात् ॥ ३७ ॥

अशुभे शोभनाध्यासो मनोमालिन्यमेव तत् ।
न भवेच्छुद्धचित्तस्य विरक्तस्य कथंचन ॥ ३८ ॥

परीक्ष्य लोकानित्यादिश्रुतिर्निर्वेदबोधिका ।
ब्रह्मात्मान्वेषणे बुद्धिस्ततः स्यान्मोक्षकारिणी ॥ ३९ ॥

आत्मा वा अर इत्यादि श्रुतिरात्मैषणोन्मुखी ।
दोषदृष्टिजिहासाभ्यां गृहमेव त्यजेत्पुमान् ॥ ४० ॥

ते यथा वान्तमश्नन्ति श्रौतवाक्यबलेन च ।
यथैव काकविष्ठायामिति च स्मरणात्सुधीः ॥ ४१ ॥

परिग्रहादिकं सर्वं त्यजेन्निर्वेदतः सकृत् ।
संन्यासमेव गृह्णीयादरण्ये निवसेद्द्विजः ॥ ४२ ॥

अनन्तरं तु यत्कृत्यमुच्यते तदिहाधुना ।
चित्तैकाग्र्येण हे शिष्याः शृणुध्वं कथयामि वः ॥ ४३ ॥

श्रीमद्ब्रह्मेन्द्रशिष्येण शिवेन परमादरात् ।
कारिकाः पञ्चरत्नस्य कृताः स्वज्ञानसिद्धये ॥ १ ॥

इति प्रथमः श्लोकः ॥

---

ब्रह्मचारिगृहस्थानां वनस्थानां तथैव च ।
धर्माः प्रोक्तास्तथा न्यासः सोऽप्युक्तस्त्यागमात्रतः ॥

त्यागं नैव प्रकुर्वीत सतां ब्रह्मविदां वने ।
इत्येवमुच्यते तत्तु श्रूयतां सादरं वचः ॥ २ ॥

सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढाऽऽधीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यताम् ।
सद्विद्वानुपसर्प्यतामनुदिनं तत्पादुके सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥

अस्यार्थः—

अरण्यवासिभिस्तत्र यतिभिः सङ्गतो भवेत् ।
सत्सङ्गाद्वासनात्यागाद्वैराग्यं सुदृढं भवेत् ॥ ३ ॥

ततस्तु भगवद्भक्तिर्भवेदव्यभिचारिणी ।
अनायासेन बोधाप्तिर्यया भवति केवला ॥ ४ ॥

भगवत्तोषकारीणि शारीरादीनि कानिचित् ।
तपांसि कुर्याच्छान्तः सन्सर्वदाऽभ्यासतत्परः ॥ ५ ॥

भक्तेर्विरक्तेः प्राबल्यात्कर्माण्यत्सुदृढं त्यजेत् ।
ज्ञानाविरोधि शान्त्यादि तत्तु नैव परित्यजेत् ॥ ६ ॥

श्रुतिर्वक्त्यकृतं मोक्षं सर्वधर्मानिति स्मृतिः ।
सलिङ्गानिति च प्राह भगवान्श्रीहरिः स्वयम् ॥ ७ ॥

आचार्यमुपसर्प्याथ कृत्वा तत्पादसेवनम् ।
श्रुतिराचार्यवान्वेद प्राहोपसदनं प्रति ॥ ८ ॥

उपदेक्ष्यन्ति ते ज्ञानमित्याह भगवानपि ।
यमोऽपि कठवल्लीषु प्राह प्राप्य वरानिति ॥ ९ ॥

सद्गुरोः सेवया भक्त्या प्रणिपातेन चासकृत् ।
सद्विद्वत्ते दुर्लभे द्वे विज्ञाय शरणं व्रजेत् ॥ १० ॥

SRIRANGAM SRI SANKARA GURUKULA SERIES No. 2.

**MADRAS GOVERNMENT ORIENTAL MANUSCRIPTS SERIES No. 10.**

# NAYAMAÑJARĪ

BY

ŚRĪMAD APPAYADĪKṢITA

EDITED BY

*Vidyasagara Vidyavacaspati*

**P. P. SUBRAHMANYA SASTRI, B.A. (Oxon), M.A. (Madras),**

*Curator, Government Oriental Manuscripts Library & Professor of Sanskrit & Comparative Philology, Presidency College, Madras.*



SRIRANGAM

SRI VANI VILAS PRESS.

1939.

# NOTE.

Sriman Appayya Dikshita, the great Polymath of the sixteenth century A. D. is the reputed author of more than 104 works representative of all branches of knowledge in Sanskrit Language and Literature. He attained the height of his fame by his works on Vedanta. And all the schools of Vedanta have drawn unique and unrivalled works from his pen. Of his Vedanta works, the Caturmatasarasangraha is justly famous for the even-handed justice with which he has expounded the tenets of the four great Schools—Dvaita, Visishtadvaita, Sivadvaita and Advaita in his Nyayamuktavali, Nayamayukhamalika, Nayamanimala and Nayamanjari (which together form the Caturmatasarasangraha).

The Nayamanjari portion has not so far been published elsewhere.

Our Edition of Nayamanjari is based on the single palm-leaf manuscript (Telugu script) available in the Tanjore Sarasvati Mahal Palace Library (No. 7628 of D. C. Volume XIII) There is a paper transcript of the above, available in the Madras Government Oriental Manuscript Library—R. No. 7300.

A detailed Introduction, Table of Contents etc., will be published at the end of the work.

PRESIDENCY COLLEGE,
MADRAS.
Dated: 13—3—1939.

*P. P. Subrahmanya Sastri,*
*Curator, Government Oriental Manuscripts Library,*
*Madras.*



॥ श्रीः ॥

श्रीमदप्पय्यदीक्षितकृते चतुर्मतसारसंग्रहे

# ॥ नयमञ्जरी ॥



नानाभाष्याहृता सा सगुणफलततिर्वैधविद्याविशेषै-
स्तत्तद्देशाभिरम्या सरिदिव सकला यत्र यात्यंशभूयम् ।
तस्मिन्नानन्दसिन्धावतिमहति फले भावविश्रान्तिमुद्रा
शास्त्रस्योद्घाटिता यैः प्रणमत हृदि तान् नित्यमाचार्यपादान् ॥

आचार्यपाददर्शितमाशयमनुसृत्य सूत्रकृतः ।
अधिकरणमञ्जरीमहमारचयाम्यात्मबोधाय ॥ २ ॥

एकोऽत्र पूर्वपक्षश्लोकः सैद्धान्तिकस्त्वपरः ।
एवं प्रत्यधिकरणं भिन्नैर्वृत्तैरियं क्रियते ॥ ३ ॥

अप्रसिद्धेषु वृत्तेषु पादभेदप्रतीतये ।
लिख्यन्ते युग्मपादादिवर्णमूर्धसु बिन्दवः ॥ ४ ॥

१. जिज्ञासाधिकरणम् ॥

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

ब्रह्मात्माभिन्नमस्मिन् विषयफलतया निर्विशेषं यदिष्टं
त्रय्यन्तानां सहस्रैरपि समधिगतिस्तस्य नैव प्रसिध्येत् ।
कर्ता भोक्ताऽहमित्याद्यखिलजनमनःसंमताध्यक्षबाधा-
भेदं तस्मादकस्मादविषयमफलं शास्त्रमारम्भणीयम् ॥ ५ ॥

मैवं गौरः कृशोऽहं बधिर इति बहुष्वेतदध्यक्षमुक्तं
मिथ्याताध्यासभावं शिथिलबलमतः कर्तृतादेर्गुणेऽपि ।
संदिग्धं द्रोग्धुमीष्टे न निगमशिरसि स्पष्टतात्पर्यलिङ्गे
तस्मात्तद्ब्रह्मसिध्यद्विषयफलमिदं शास्त्रमारम्भणीयम् ॥ ६ ॥

(स्रग्धरा)

२. जन्माद्यधिकरणम् ॥

## जन्माद्यस्य यतः ॥ २ ॥

ब्रह्मणो न जगज्जनिस्थितिभङ्गमर्हति लक्ष्मतां
लक्ष्यलक्षणता कथं नु विरोधिनोः सदसत्त्वयोः ।

सत्यबोधसुखात्मताऽपि न तस्य लक्षणतां व्रजे-
दप्रसिद्धिपराहता ननु धीपदं न समागता ॥ ७ ॥

स्रग्भुजङ्गनयात्तटस्थमिदं भविष्यति लक्षणं
सत्यबोधसुखात्मतैव तु तत्स्वरूपमिति स्थितिः ।
तत्प्रसिद्धिरपि त्रयीशिखरैरखण्डपरायणै-
स्तद्विरुद्धविशेषणानि विहाय शुद्धविशेष्यगैः ॥ ८ ॥

(मत्तकोकिल:)

३. शास्त्रयोनित्वाधिकरणम् ॥

## शास्त्रयोनित्वात् ॥ ३ ॥

ब्रह्मेष्टं यदि शास्त्रकर्त्रीति ततः सर्वज्ञता संभवे-
न्नेष्टं ब्रह्म तथा तथा सति हि तत्सापेक्षमापद्यते ।
नाविद्यानुगतादमुष्य तदुपादानत्वतः सा भवेत्
किं च ब्रह्म न शास्त्रयोन्यपि यतः कार्यानुमानास्पदम् ॥ ९ ॥

दृष्ट्वाऽर्थं रचितं न किं तु युगपत्पूर्वक्रमार्थैः समं
स्मृत्वा तद्विभुना प्रणीतमिति न प्राप्नोति सापेक्षता ।
कार्यद्योतितसर्वगोचरमुपादानं प्रकाशेत यत्
कर्त्रैक्याद्यनुमानवागुरिकया सिद्ध्येन्न शास्त्रादृते ॥ १० ॥

(शार्दूलविक्रीडितम्)

४. समन्वयाधिकरणम् ॥

## तत्तु समन्वयात् ॥ ४ ॥

न सिद्धे व्युत्पत्तिर्न च तदुपदेशात्फलमिति
प्रमाणं न ब्रह्मण्यपि तु सफलोपासनविधौ ।
तदप्याम्नायान्तः प्रथयतु तदालम्बनतया
न तत्सिद्धं तस्माद्यति वनिताग्न्यादितुलितम् ॥ ११ ॥

प्रसिद्धा व्युत्पत्तिर्व्यवहृतिषु सिद्धेऽपि विषये
फलं ब्रह्मज्ञानं स्वत इह सुखास्वादनमयम् ।
अतः स्पष्टैर्लिङ्गैरवगमिततात्पर्यभरितः
प्रमाणं त्रय्यन्तो निरवधिसुखे ब्रह्मणि परे ॥ १२ ॥

(शिखरिणी)

५. ईक्षत्यधिकरणम् ॥

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

अस्त्वेवमेवमपि कारणवाक्यमाला
शुङ्गेन मूलमनुमेयतया वदन्ती ।
कार्यानुमानविषयं भजति प्रधानं
न ब्रह्म संगतिपरिच्युतमप्रसिद्धम् ॥ १३ ॥

सा कारणस्य सत ईक्षणमामनन्ती
नाचेतने क्वचन पर्यवसातुमर्हा ।
स्यात् संगतिग्रहणमात्मनि यूपरीत्या
तात्पर्यलिङ्गविधया त्वनुमानवादः ॥ १४ ॥

(वसन्ततिलकम्)

६. आनन्दमयाधिकरणम् ॥

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

आध्येय आनन्दमयः फलार्थं
जीवः शिरःपक्षमुखाङ्गयुक्तः ।
तत्रैव विश्राम्यति चासमाते-
रानन्दवल्ली न तु तस्य पुच्छे ॥ १५ ॥

तस्य प्रतिष्ठात्मकमेव वेद्यं
ब्रह्म स्वशब्दाभ्यसनान्निरूप्यम् ।
कोशास्त्विहानन्दमयेन सार्धं
पञ्चापि तस्य प्रतिपत्तये स्युः ॥ १६ ॥

(इन्द्रवज्रा)

७. अन्तरधिकरणम् ॥

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

य एषोऽन्तरादित्यगः प्राज्ञदृश्यः
स जीवो भवेन्मण्डलस्याभिमानी ।

समर्यादमैश्वर्यमाधारनिष्ठा

वपुस्तादृशं चोपपन्नं न ह्रीशे ॥ १७ ॥

स ईशः परः साधकानुग्रहार्थी

फलाकर्षिणा सर्वपापोदयेन ।

अभिव्यक्तमस्य क्वचित् किंचन स्या-

द्वपुर्मायया किंचिदैश्वर्यशालि ॥ १८ ॥

(भुजङ्गप्रयातम्)

८. आकाशाधिकरणम् ॥

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

आकाशं गगनमुपक्रमप्रतिष्ठा-

मभ्यस्तां श्रुतिमवलोक्य निर्णयामः ।

आनन्त्याद्यपरममुष्य यत्र युक्तं

तल्लिङ्गं सकृदुपसंहृतौ श्रुतं च ॥ १९ ॥

आनन्त्यं किल परिहर्तुमत्र गीतं

सर्वोपक्रमगतमन्तवत्त्वदोषम् ।

संकोचासहमिदमित्यमुष्य वृत्त्या-

माकाशश्रुतिमखिलां परे नयामः ॥ २० ॥

(प्रहर्षिणी)

SRIRANGAM SRI SANKARA GURUKULA SERIES No. 3.

MADRAS GOVERNMENT ORIENTAL MANUSCRIPTS SERIES No. 8.

# ŚĀSTRADĪPIKĀ

OF

ŚRĪ PĀRTHASĀRATHI MIŚRA

WITH THE COMMENTARY

# MAYŪKHĀVALĪ

OF

ŚRĪ APPAYYA DĪKSHITA.

EDITED BY

*Vidyasagara Vidyavacaspati*

**P. P. SUBRAHMANYA SASTRI, B.A. (Oxon), M.A., (Madras)**

*Curator, Government Oriental Manuscripts Library & Professor of Sanskrit & Comparative Philology, Presidency College, Madras.*



SRIRANGAM

SRI VANI VILAS PRESS,

1939.

# NOTE.

Sriman Appayya Dikshita, the great Polymath of the sixteenth century A. D. is reputed to be the author of more than 104 works ranging over almost all fields of Sanskrit Literature. Of his works on Mimamsa, mention may be made of the following noteworthy contributions:—Vidhirasayanam with the commentary Sukhopayojini; Chitrapatah; Upakramaparakramah; Mimamsa Vadanakshatramala; Mayukhavali; etc. Among these, his commentary called Mayukhavali on the Sastradipika of Parthasarathimisra has never before been printed. The edition that follows is based on the following manuscripts:

I. The basic text is represented by Ms. No. D. 4510 of the Madras Government Oriental Manuscripts Library. The manuscript is on palm leaf, the script being Grantha.

II. In the foot-notes, अ represents the manuscript from the Adyar Library, bearing No. 20-D-83. The manuscript is on palm-leaf, the script being Telugu.

III. क represents manuscript No. R. 1789 of the Government Oriental Manuscripts Library, Madras. The manuscript is on palm-leaf, the script being Grantha. A few leaves in the beginning are missing.

IV. ग represents manuscript No. D. 15381 of the Government Oriental Manuscripts Library, Madras. The manuscript is on paper, the script being Grantha. A detailed Introduction, Table of Contents etc. will be published at the end of the work.

PRESIDENCY COLLEGE,
MADRAS.
Dated: 1—3—1939.

*P. P. Subrahmanya Sastri,*
*Curator, Government Oriental Manuscripts Library,*
*Madras.*





॥ श्रीगणेशाय नमः ॥

# ॥ शास्त्रदीपिका ॥

## श्रीमदप्पय्यदीक्षितप्रणीतमयूखावलीव्याख्यासहिता ॥

---

### प्रथमाध्याये द्वितीयः पादः ।

अर्थवादाधिकरणम् ॥ १ ॥

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥ शास्त्रदृष्टविरोधाच्च ॥ २ ॥ तथा फलाभावात् ॥ ३ ॥ अन्यानर्थक्यात् ॥ ४ ॥ अभागिप्रतिषेधात् ॥ ५ ॥ अनित्यसंयोगात् ॥ ६ ॥ विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥ तुल्यं च सांप्रदायिकम् ॥ ८ ॥ अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्या-**

च्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्यते ॥ ९ ॥ गुणवादस्तु ॥१०॥ रूपात्प्रायात् ॥ ११ ॥ दूरभूयस्त्वात् ॥ १२ ॥ स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥ आकालिकेप्सा ॥ १४ ॥ विद्याप्रशंसा ॥ १५ ॥ सर्वत्वमाधिकारिकम् ॥ १६ ॥ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥ १७ ॥ अन्त्ययोर्यथोक्तम् ॥ १८ ॥

---

॥ जैमिनीयन्यायमाला ॥

वायुर्वा इत्येवमादेरर्थवादस्य मानता ।
न विधेयेऽस्ति धर्मे किं किं वाऽसौ तत्र विद्यते ॥ १ ॥

विध्यर्थवादशब्दानां मिथोऽपेक्षापरिक्षयात् ।
नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत्कुतः ॥ २ ॥

विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः ।
तेनैकवाक्यता तस्माद्वादानां धर्ममानता ॥ ३ ॥

वादोक्तहेत्वपेक्षत्वाच्च विधेर्मानतेति चेत् ।
सत्यन्वये स्तुतिद्वारा नापेक्षेति गुरुर्जगौ ॥ ४ ॥

---

'अथातो धर्मजिज्ञासा' इत्यत्र प्रमाणस्वरूपसाधनफलैः साभामैर्धर्मो जिज्ञास्य-

---

॥ श्रीः ॥

# ॥ मयूखावली ॥

सुदूरस्थं देशं हयहृदयविद्येव तुरगान्
नयत्याशु ग्रन्थान् महिततरशास्त्रेषु विषमान् ।
अधीतेवार्थं या सहृदयमनःसंमतिपदं
विभोर्व्याख्यामुद्रां मनसि कलये तां पशुपतेः ॥ १ ॥

त्वेन प्रतिज्ञातः । तत्रास्मिन्नध्याये प्रमाणं निरूप्यते— किं प्रमाणं धर्मे इति । तेन यदेव किंचिद्धर्मप्रमाणनिरूपणमर्थवादमन्त्रस्मृतिनामधेयादिगोचरं तत्सर्वमत्रैव संगतम् । न

गुरुभिरुपदिष्टभावां व्याकुर्वे शास्त्रदीपिकामनघाम् ।
आकृष्टसकलसारां लघुभिर्वाक्यैः प्रसन्नगम्भीरैः ॥ २ ॥

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥**

प्रथमसूत्रसंकीर्तनेन त्रिपाद्यां करिष्यमाणस्यार्थवादादिप्रामाण्यविचारस्य[1] शास्त्रसंगतिं दर्शयति— **अथात इति** ॥

अथ [2]वेदाध्ययनानन्तरम् । अतः अध्ययनस्य वृत्तत्वात् । धर्मस्य अलौकिकश्रेयःसाधनस्य, जिज्ञासा विचारः कर्तव्य इति शाब्द्या सौत्रप्रतिज्ञया [3]धर्मस्य यत् प्रमाणं तस्य यत् स्वरूपं साधनं फलं च, ये च तत्प्रमाणाद्याभासाः बुद्धाद्यागमतद्बोधितचैत्यवन्दनादिस्वरूपतत्साधनतत्फलात्मकास्तत्तदधिकरणपूर्वपक्ष्युत्प्रेक्षितार्थावच्छिन्नतत्तद्विषयवाक्य[4]समर्पितस्वरूपसाधनफलात्मकाश्च तेषामप्यर्थाद्विचारः प्रतिज्ञातो भवति; प्रमाणमुखेनैव धर्मस्य निर्णेयत्वात्, स्वरूपसाधनफलनिर्णयमन्तरेणानुष्ठानद्वारा अभ्युदयपर्यवसानासंभवात्, आभासनिरूपणं[5] विना तत्प्रहाणायोगाच्चेति भावः । एवं प्रमाणविचारस्यापि प्रतिज्ञातत्वोक्त्याऽर्थवादादिप्रामाण्यविचारस्य शास्त्रसंगतिर्दर्शिता ॥

अध्यायसंगतिं दर्शयति— **तत्रेति** । **अस्मिन्नध्याय** इत्युक्त्या अध्यायान्तरेषु स्वरूपादिनिरूपणमिति दर्शितम् । द्वितीयाध्याये यागदानहोमादिधात्वर्थरूपावच्छेदकभेदभिन्नभावनात्मकं [6]धर्मस्वरूपम्, न तु यागादिसकलधात्वर्थावच्छिन्नैकभावनात्मकमित्यादिप्रकारेण स्वरूपस्य, शेषत्वप्रयुक्तिक्रमविषयेषु त्रिष्वध्यायेषु तत्साधनस्य, अधिकारलक्षणे तत्फलस्य निरूपणम् । एवं पूर्वषट्केनोपदर्शितार्थनिरूपणानन्तरं चतुर्भिरध्यायैस्तेषामेव विकृतिष्वतिदेशोहबाधनिरूपणम् । एकादशद्वादशयोरुपदेशातिदेशसाधारण्येनानेकप्रधानोद्देश्यकसकृदङ्गानुष्ठानरूपस्य तन्त्रस्य, एकप्रधानोद्देश्याङ्गानुष्ठानेन प्रधानान्तरेऽप्युपकृतिसिद्धिरूपस्य प्रसङ्गस्य च निरूपणमिति कृत्स्नमपि शास्त्रं प्रमाणस्वरूपादिविषयमेवेति द्रष्टव्यम् । भवतु धर्मप्रमाणनिरूपणमध्यायार्थः; अर्थवादादिप्रामाण्यविचारसंगतौ किमायातमित्याशङ्क्याह— **तेनेति** । अर्थवादादीनामपि धर्मप्रमाणत्वाविशेषात्तत्प्रामाण्यनिरूपणमप्यत्रैव संगतमित्यर्थः ॥

ननु 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रेण विध्युद्देशस्यैव प्रामाण्यं प्रतिज्ञातम्, 'चुद प्रेरणे' इति धातुनिष्पन्नस्य चोदनाशब्दस्य प्रवर्तकवाचित्वात् । विध्युद्देशस्यैव प्रवर्तकत्वादिति

1. अ. अर्थवादादिप्रामाण्यस्य; 2. अ. अध्ययनानन्तरम्; 3. अ. धर्मे; 4. अ. ०तत्समर्पित० 5. अ. ०विवेचनं; 6. अ. धर्मस्य.

**ह्यत्र चोदनाप्रामाण्यसाधनं लक्षणार्थो येन स्मृत्यादेरसंगतिः स्यात् । किं तर्हि ? धर्मप्रमाणनिरूपणम् । तदुक्तं भाष्यकारेण 'को धर्मः कथंलक्षणकः' इति सर्वस्मिंश्चाध्याये तदेव क्रियत इति समस्तमध्यायं प्रमाणलक्षणमाचक्षत इति । तेन लक्षणसंगतिस्तावत्सिद्धा ।**

---

प्राभाकरमतमाशङ्क्याह— न हीति । मन्त्रार्थवादाभ्युपेतमहावाक्य[1]रूपविध्युद्देशश्चोदना । तस्यैव क्रतुविशेषसंकल्पप्रभृतिसकलाङ्गसहितप्रधानविषयप्रवृत्त्युपयोगित्वान्न विध्युद्देशमात्रम् । एवं च विध्यर्थवादमन्त्ररूपेण त्र्यंशस्यापि कृत्स्नस्य वेदस्य धर्मे प्रामाण्यं प्रतिज्ञातं भवति । यद्यपि विध्युद्देशमात्रं[2] चोदनाशब्दार्थः, तथाऽपि स्तुत्यादिद्वारा तदीयधर्मप्रामाण्योपयुक्ततयाऽङ्गभूतयोरर्थवादमन्त्रयोरपि तत्र प्रामाण्यं प्रतिज्ञातं[3] भवति । अवधारणव्यवच्छेद्यास्तु स्वातन्त्र्येण प्रमाणतया प्रसक्ता बुद्धाद्यागमाः प्रत्यक्षादयश्च स्युः । यथा— 'अयमेव राजा वसुंधरायाः संरक्षकः' इति प्रतिज्ञायमाने तदीयराज्यसंरक्षणे तद्राज्यैकदेशमण्डलविशेषसंरक्षणद्वाराऽङ्गभूतानां मण्डलाधिपतीनामपि तत्संरक्षकत्वं प्रतिज्ञातं भवति, अवधारणव्यवच्छेद्यास्तु स्वातन्त्र्येण राज्यसंरक्षकतया प्रसक्ता राज्याधिपतयो भवन्ति । एवं सति लाघवार्थं वेदलक्षण इति वक्तुं शक्यत्वेऽपि धर्मप्रमितिशक्तिप्रदर्शनाय चोदनालक्षण इत्युक्तम् । एवं च[4] जिज्ञासासूत्रे[5] वेदाध्ययनहेतुना धर्मस्य विचार्यत्वप्रतिज्ञासामर्थ्यादेव वेदार्थो धर्म इति [6]धर्मस्वरूपे धर्मे वेदः[7] प्रमाणमिति तत्र प्रमाणे च सिद्धेऽपि चोदनासूत्रं वेदस्य धर्मप्रमितिशक्त्युद्बोधनेनार्थवत् । किं च— वेदार्थो धर्म इति सिद्धावपि शाक्यादिस्मृतिचोदितोऽपि किं धर्म इति शङ्का न निवर्तते; निवर्तते तु चोदनाप्रमेयत्वस्य धर्मलक्षणत्वोक्त्या । तेन हि चोदनाप्रमेय एव धर्म इति सिध्यति । अतथाभूतस्यापि धर्मत्वेऽत्र लक्षणेऽव्याप्तिप्रसङ्गादिति चैत्यवन्दनादिव्यावृत्तधर्मस्वरूपनिर्धारणार्थमपि चोदनासूत्रम् ॥

नन्वेवमपि स्मृतिप्रामाण्यविचारो नाध्यायसंगतः, स्मृतीनां त्र्यंशवेदबहिर्भूतत्वेन चोदनासूत्राविषयत्वात्[8] इत्याशङ्क्य तत्संगतिं प्रदर्शयितुं भाष्यमुदाहरति—**तदुक्तमिति** । 'को धर्मः कथंलक्षणः' इति चोदनासूत्रावतारिकाभाष्ये प्रकारवाचिना थमुप्रत्ययेन वेदस्य केन प्रकारेण धर्मे प्रामाण्यमिति प्रामाण्यप्रकारविशेषेऽप्याकाङ्क्षायाः प्रदर्शितत्वात् सोऽपि सौत्रप्रतिज्ञाविषयः । अनवगतस्वरूपस्य वेदस्य प्रामाण्यायोगात्स्वरूपावगतिरपि प्रामाण्यप्रकारः । ततश्च वेदस्य प्रत्यक्षावगतिरिव स्मृत्यादिलिङ्गवचनावगतिरपि प्रामाण्यप्रकार इति वेदप्रामाण्यप्रकारविशेषनिरूपणतया स्मृतिविचारस्य संगतिः । अत एवाचारविचारस्यापि संगतिरिति भावः । उपपादितामध्यायसंगतिमुपसंहरति—

---

1. ग. रूपो 2. अ. ०मेव ; 3. प्रतिज्ञातमेव ; 4. अ. एवं ; 5. अ. जिज्ञासासूत्रेण ; 6. अ. धर्मस्य ; 7. अ. वेदाः ; 8. अ. चोदनाविषयत्वात् .

**प्रकृतसंगतिरपि चोदनानां प्रामाण्ये पदपदार्थसंबन्धस्यौत्पत्तिकत्वेन वाक्यार्थप्रतीतेर्मूलवत्तया चोपपादितेऽनन्तराधिकरणे वेदद्वारेण तासां पौरुषेयत्वमाशङ्कितम्। यथोक्तं भाष्यकारेण—संनिकृष्टकाला वेदा इदानींतनाश्चैते च चोदनानां संघाताः। तत्र पौरुषेयाश्चेद्वेदा असंशयं पौरुषेय्यश्चोदना इत्येवमाशङ्क्य वेदापौरुषेयतया तदवयवानां चोदनानामप्य-**

---

तेनेति। **प्रकृतसंगतिरिति।** पूर्वपादान्त्येन वेदाधिकरणेन संगतिरित्यर्थः। [1]**चोदनानामिति।** चोदनासूत्रोक्तं चोदनानां प्रामाण्यं न घटते, सर्वेषां शब्दानां देवदत्तादिनामपदानामपीदंप्रथमतया पुरुषविशेषसंकेतनीयत्वेन[2] संकेतनात् प्राग्वेदस्य चोदकत्वासंभवात्[3] प्रत्यक्षाद्यगोचरत्वेनानुपस्थिते वेदार्थे धर्मसंकेतकरणस्याशक्यतयेदानीमपि तस्य बोधकत्वासंभवादिति शङ्काम् 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इत्यौत्पत्तिकाधिकरणे शब्दार्थयोर्वाच्यवाचकभावसंबन्ध औत्पत्तिकः स्वाभाविको नित्यः; न तु संकेतयितृपुरुषाधीनः, स च वैदिकानामपि गवादिशब्दानां लोकसिद्धगोत्वादिमुखेन[4] सुग्रह इति समर्थनेन निरस्य तथाऽपि तासां प्रामाण्यं न घटते, पदपदार्थयोः सामान्यरूपेणैव[5] वाक्यवाक्यार्थयोस्तत्र तत्र विशेषविषययोर्विशेषरूपेण संबन्धग्रहणासंभवेन लौकिकवाक्यवद्वक्तृतात्पर्यानिर्धारणात्तदवधारणासंभवेन च वैदिकवाक्यश्रवणानन्तरं यत्किंचिदर्थावभानस्य व्यामोहमात्ररूपत्वादिति शङ्कां च 'तद्भूतानामक्रियार्थत्वेन समाम्नायः' इति तद्भूताधिकरणे गृहीतसामान्यशक्तिकक्रियाकारकसमभिव्याहारादाकाङ्क्षादिसहितादपौरुषेयत्वेन निरस्तभ्रमप्रमादादिशङ्काकलङ्काच्चोदनावाक्यादर्थविशेषप्रतीतिः[6] संभवतीति वैदिकवाक्यार्थप्रतीतेर्मूलवत्तया निरस्य तासामुपपादितप्रामाण्ये वेदाधिकरणे वेदस्यैव पौरुषेयत्वात् कुतस्तदवयवानां चोदनानामपौरुषेयत्वं कुतस्तरां प्रामाण्यमित्याशङ्कितमित्यर्थः॥

ननु वेदपौरुषेयत्वेन चोदनानां पौरुषेयत्वशङ्का न युक्ता, वेदान्तर्गतवर्णवदपौरुषेयत्वोपपत्तेः। न च वेदान्तर्गतवाक्यत्वेन पौरुषेयत्वाशङ्का; वाक्यत्वस्य पर्याप्तत्वेन वेदान्तर्गतेरप्रयोजकत्वात् इति शङ्कां भाष्यवाक्योदाहरणेन निरस्यति— **यथोक्तमिति।** **पौरुषेयाश्चेद्वेदा इति।** वाक्यत्वेनैव चोदनानां पौरुषेयत्वं वेदाधिकरणे पूर्वपक्षिणा सिषाधयिषितम्। तत्र 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः' इत्यादिभिश्च वचनैर्वेदस्य पौरुषेयत्वावगमात् तदन्तर्गत[7]चोदनानामपौरुषेयत्वं बाधितमिति शङ्कानिरासार्थत्वप्रतिपादकमिदं भाष्यम्। तादर्थ्यस्पष्टीकरणार्थमेवासंशयपदमित्याशयेनेदं भाष्यमुदाहृतम्। **इत्येवमाशङ्क्येति।** एवमाशङ्कां [8]वेदापौरुषेयत्वेन निरस्य तासां प्रामाण्यं प्रतिष्ठापितमित्यर्थः॥

---

1. अ. इदं प्रतीकं नास्ति; 2. अ. ०संकेतनीयत्वेन; 3. अ. संकेतात्; 4. अ. ०सामान्यमुखेन; 5. रूपो नैव; 6. अ. ०प्रमितिः; 7. अ. चोदनानां पौरुषेयत्वं साधितमिति शङ्कां परिहर्तुं वेद एव अपौरुषेय इति साधितम्। तत्र साधनस्य बाधशङ्कानिरासार्थत्वप्रतिपादकमिदं भाष्यम्। तदर्थस्पष्टीकरणार्थमेव; 8. अ. वेदापौरुषेयत्वप्रसाधनेन.

**पौरुषेयतया प्रामाण्यं प्रतिपादितम् । एवं चोदनानां वेदावयवानां प्रामाण्ये साधिते तद-वयवत्वेनोपस्थितानामर्थवादादीनां भागानामप्यपौरुषेयत्वसामान्याच्चोदनावत् प्रसक्तं प्रामाण्यमस्ति न वेति चिन्त्यत इति । तदिदमुक्तम्— 'सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः । विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ॥' इति । अस्यार्थः— सिद्धप्रमाणभावं चोदनांशे वेदं त्रिधा विभज्य किं तावन्मात्रस्यैव प्रामाण्यमुत सकलस्येति विचार्यते; न विधेरेव; किं तर्हि ? विध्यर्थवादमन्त्राणां सर्वेषां सर्वशः सर्वप्रकारं विधिस्तुतिस्मृतिभिर्धर्म-प्रतीतावुपयोगः प्रतिपाद्यत इति । यद्वा चोदनार्थमप्युक्तेनापौरुषेयत्वेन समस्तस्य प्रामाण्यं सिद्धप्रायमपि बोधकशक्त्यभावमाशङ्क्य स्थिरीक्रियते, विध्यर्थवादमन्त्राणामिति नायमर्थो विधेरप्युपयोगः प्रतिपाद्यत इति किं तर्हि विध्यादीनां सर्वेषामुपयोगोऽस्ति न विधेरेवेति प्रतिपाद्यत इति । नामधेयाभिप्रायं वा विधिग्रहणम् । यद्वा अर्थवादमन्त्रयोः स्तुतिस्मृति**

---

ननु प्रतिष्ठापितं चेत् प्रामाण्यं प्रमाणाध्याये विचार्यं किमपरमवशिष्यते ? अर्थवादादीनामपि चोदनाशब्दान्तर्गतत्वेन तदङ्गत्वेन वा चोदनाप्रामाण्यव्यवस्थापनेनैव शब्दतोऽर्थतो वाऽपि सिद्धमेव विध्युद्देशवत् प्रामाण्यम् । अतस्त्रिपाद्यारम्भो न प्रयोजनवानित्याशङ्क्याह— **चोदनानामिति** । सिद्धमेव प्रामाण्यमर्थवादादीनामुपपद्यते[1] न वेति धर्मप्रमितौ तेषां द्वारसंभवासंभवाभ्यां विचार्यत इत्यर्थः । यथोक्तसंगतिप्रदर्शनार्थत्वेन 'सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः । विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ॥' इति वार्त्तिकश्लोकमवधार्य तदर्थमाह— **चोदनांश इति** । वेदस्यापौरुषेयत्वादिना विध्युद्देशांशे प्रामाण्यमविचाल्यं सिद्धम् । तस्य साध्यसाधनादिप्रतिपादकशब्दयुक्तस्य विधानेन धर्मप्रमित्युपयोगितायाः स्पष्टत्वादिदानीं विध्युद्देशस्यैव धर्मप्रमितौ नोपयोगः, किं तु त्रयाणामपि वेदाङ्गानां विधिस्तुतिस्मृतिरूपैः सर्वैरपि प्रकारैस्तदुपयोगोऽस्तीति प्रतिपाद्यत इति श्लोकार्थ इत्यर्थः । अस्मिन् व्याख्याने सिद्धप्रमाणभावस्येत्यत्र चोदनांश इत्यध्याहारगौरवम् । सर्वश इत्यस्य प्रकृतप्रकारत्रयपरामर्शि तासां जन्यं चेत्यपरितोषात्सर्वशः सर्वेष्वप्यंशेषु सिद्धप्रमाणभावस्य वेदस्य मन्त्रार्थवादांशयोर्धर्मबोधकशक्त्यभावेन चलनमाशङ्क्य तत्स्थिरीक्रियते इति श्लोकार्थ इति व्याचष्टे— **यद्वेति** । मन्त्रार्थवादयोरेव चलितं प्रामाण्यं स्थिरीक्रियत इति चेत्, कथमिह विधिग्रहणमित्याशङ्क्य तदभिप्रायमाह— **विध्यर्थेति** । अस्मिन् पक्षे विध्यर्थवादमन्त्राणां त्रयाणामिदानीमुपयोग उच्यत इत्यस्य न लङ्घनमित्यस्वरसाद्विधिशब्दस्यार्थान्तरमाह— **नामधेयेति** । तस्य नामधेयप्रसिद्ध्यभावात्प्रकारान्तरमाह— **यद्वेति** । **अर्थवादमन्त्रयोरिति** । विध्युद्देशस्य विधानेन धर्मप्रमितावुपयोग इति

---

1. अ. अर्थवादादीनामिति नास्ति.

SRIRANGAM SRI SANKARA GURUKULA SERIES No. 4.

MADRAS GOVERNMENT ORIENTAL MANUSCRIPTS SERIES No. 9

# BĀLABHĀRATAM

OF

AGASTYA PAṆḌITA

WITH THE COMMENTARY

# MANOHARĀ

OF

SĀLVA TIMMAYA DAṆḌANĀTHA.

EDITED BY

*Vidyasagara Vidyavacaspati*

**P. P. SUBRAHMANYA SASTRI, B.A. (Oxon), M.A., (Madras)**

*Curator, Government Oriental Manuscripts Library & Professor of Sanskrit & Comparative Philology, Presidency College, Madras.*



—— SRIRANGAM ——

SRI VANI VILAS PRESS

1939.





# ॥ बालभारतम् ॥

## मनोहराख्यया व्याख्यया सहितम् ॥



### प्रथमः सर्गः

॥ श्रीः ॥

वन्देमहि महीयांसमंसलम्बिजटाभरम्
यत्कङ्कणझणत्काररवः शब्दानुशासनम् ॥ १ ॥

शयनीयगृहं यस्य महेशानमहानसम् ।
यस्य नाभिर्गिरां देव्याः श्वश्रूस्तं दैवतं भजे ॥ २ ॥

यस्य गण्डगलद्दानबम्भ्रमद्भृङ्गसरावलिः ।
श्यामचामरतां धत्ते वन्दे किमपि तन्महः ॥ ३ ॥

अरालकबरीमीले मरालवरवाहनाम् ।
यत्केलीचङ्क्रमस्थानं श्रुतीनां सूतिकागृहम् ॥ ४ ॥

आसीन्महीशः शशिवंशरत्नं ययातिसूनुर्यदुनामधेयः ।
यदन्ववाये जगतां हिताय कृतावतारः पुरुषः पुराणः ॥ ५ ॥

तद्वंशशुद्धाम्बुधिसंभवानां विशुद्धिभाजां नृपमौक्तिकानाम् ।
नवोदयो नायकतामयासीत्तेजोनिधिस्तिम्मय ईश्वरेन्द्रः ॥ ६ ॥

स रसाधिपतिः प्रतापभानुर्नरसाधीशमजीजनत्कुमारम् ।
नरसाहसमुग्रसंगरोर्व्यां नरसामान्यतमं पुमांसमाद्यम् ॥ ७ ॥

अग्रहीन्नरपतिः पतिव्रतारत्नमुत्पलदृशं स तिप्पमाम् ।
छागलाञ्छनवधूपमां शुभभ्रूलतामपि च नागलाम्बिकाम् ॥ ८ ॥

तिप्पाम्बिका वीरनरसिंहरायमसूयत ।
यस्तुलापुरुषादीनि चक्रे दानानि षोडश ॥ ९ ॥

नागाम्बिकागर्भपयःपयोधौ जातः कनत्कौस्तुभरत्नगर्भः ।
श्रीकृष्णरायः श्रितपारिजातो यथार्थनामा यदुवंशमौलिः ॥ १० ॥

आलानं रिपुदन्तिनामरिपशोर्यूपः समीकाध्वरे
रुद्रस्वान्तनिखातशङ्कुरुदितो दीपः प्रतापाङ्कुरः ।
पातालात् कुहनावराहमुखतो दंष्ट्रा ध्रुवं निर्गता
श्रीकृष्णक्षितिपस्य भाति विजयस्तम्भः कलिङ्गाङ्कणे ॥ ११ ॥

प्रतापरुद्रस्य गजाधिपस्य पुत्रीं पवित्रीकृतभूतधात्रीम् ।
प्रत्यग्रहीद्यः प्रकटप्रतापो भद्रां सुभद्रामिव पाण्डवेयः ॥ १२ ॥

ब्रह्माण्डं कामधेनुं घटमपि च महाभूतपूर्वं सहस्रं
धेनूनां स्वर्णपूर्वांस्तुरगरथहयक्षोणिगन्धद्विपान् यः ।

सप्ताब्धीन् कल्पवल्लीं विबुधतरुतुलापूरुषौ विश्वचक्रं
प्रायच्छत् कृष्णरायः प्रथितमणिगवीं पञ्चसीरीं द्विजेभ्यः ॥ १३ ॥

पीत्वा तं शिवनसमुद्रजीवनौघं तन्वानः कविगुरुमित्रसत्प्रकाशम् ।
आश्चर्यं मधुसमये सुवर्णवृष्टिं धारालं जनयति कृष्णरायमेघः ॥ १४ ॥

तद्वंशप्रभवनृपालमौक्तिकानां राज्यश्रीभरभरणोत्सुकाः प्रवीणाः ।
स्वायत्तीकृतनिखिलार्थनीतिविद्याः कौण्डिन्यान्वयजनुषोऽभवन्नमात्याः ॥ १५ ॥

विलासरेखाविजिताद्रिराजः स्वान्तस्थरौप्याचलमन्दिराजः ।
नयेन यः सद्भिरनन्दि राजः स तेषु रूढोऽजनि नन्दिराजः ॥ १६ ॥

तस्य सूनुरभवन्महामतिर्दानशौर्यकरुणानिवासभूः ।
यामभूमिधवनीतिसंपदां वेमराज इति मन्त्रिकुञ्जरः ॥ १७ ॥

सोऽप्यशेषवसुधाधुरंधरं राजनीतिकलनायुगंधरम् ।
मन्त्रिशेखरमसूत राचयं विप्रसात्कृतसमस्तरैचयम् ॥ १८ ॥

संध्येवारुणमम्बिकेव गिरिशं स्वाहेव वैश्वानरं
वाणीवाम्बुरुहासनं वनरुहावासेव नारायणम् ।
पौलोमीव दिवौकसामधिपतिं सीतेव रामं प्रियं
राचय्यं वरदाम्बिकाऽभजत तच्चित्तानुकूला सती ॥ १९ ॥

तस्याः समभवन् पुत्राः [1]सर्वशास्त्रविशारदाः ।
दानशूरास्त्रयश्चादिपुरुषा इव भास्वराः ॥ २० ॥

साल्वतिम्ममहामात्यो गोविन्दो गुणभूषणः ।
[2]सुरागः सुरमन्त्रीश इति विश्रुतकीर्त्तयः ॥ २१ ॥

अग्रजस्तेषु विख्यातः साल्वतिम्मश्चमूपतिः ।
त्रिषु धर्मार्थकामेषु मूर्तिमानादिमो यथा ॥ २२ ॥

---

1 सर्वे 2 सुरभाः

सौजन्यस्य निदानमाद्यकवितासारस्य घण्टापथः
संगीतस्य निवासभूः कुलगृहं धर्मस्य मूलं श्रुतेः ।
हेतुर्नीतिफलस्य केतुरिरिराड्वृन्दस्य संख्यावतां
जीवातुः सचिवाग्रणीर्विजयते श्रीसाल्वतिम्मप्रभुः ॥ २३ ॥

पद्माऽसौ पद्मसद्मेति सासूयेव सरस्वती ।
साल्वतिम्ममुखाम्भोजमध्यमध्यास्य नृत्यति ॥ २४ ॥

बालभारतकाव्यस्य टीकां सर्वमनोहराम् ।
साल्वतिम्मचमूनाथो विधत्ते विदुषां मुदे ॥ २५ ॥

स्यादेव मेऽलसतया मतिमान्द्यतो वा
दोषः क्वचित्क्वचिदथाऽपि न काऽपि शङ्का ।
दोषोत्करस्य सुगुणीकरणे प्रवीणा
शक्तिः सदा विजयते खलु सज्जनानाम् ॥ २६ ॥

इह खलु पदवाक्यप्रमाणज्ञस्तत्रभवानगस्त्यपण्डितो नाम महाकविः 'देवप्रतिष्ठा भूदेवप्रतिष्ठा तनया वनम् । तटाकोऽथ निधिः काव्यं सप्तैते तनयाः स्मृताः ॥ एताः संपादयेद्धीमानिहामुत्रफलाय च ।' इति वचनप्रामाण्यात् काव्यरूपसंतानस्य ऐहिकामुष्मिकफलसाधनताम्, 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे' इत्यालंकारिकवचनात् काव्यस्य यशःप्रभृत्यनेकानुषङ्गिकफलसाधनताम्, 'काव्यालापांश्च वर्जयेत्' इति निषेधस्य असदाश्रयकाव्यविषयतां च पश्यन् बालभारताख्यं काव्यं चिकीर्षुः चिकीर्षितस्य ग्रन्थस्य अविघ्नेन परिसमाप्तये 'मङ्गलाचारयुक्तानां विनिपातो न विद्यते' इति स्मृतेः मङ्गलस्य अविघ्नपरिसमाप्तिहेतुतया देवतागुरुपूजास्तुतिनमस्कारादीनां मङ्गलात्मतया ग्रन्थादाववश्यकर्तव्यत्वेन 'आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम्' इत्यालंकारिकवचनात् वस्तुनिर्देशस्यापि प्रबन्धमुखत्वात् प्रधानभूतं सोमात्मकं वस्तु निर्दिशन् तद्गुणस्तुतिरूपं मङ्गलमादौ निबध्नाति— अस्तीत्यादिश्लोकत्रयेण ॥

**अस्त्यत्रिनेत्रप्रभवः कलात्मा**
**शशीति [1]नक्षत्रगणस्य नाथः ।**

1 नक्षत्रगणाधिनाथः ।

यं वारिजश्रीहरमाप्तवाचो
वामं हरेर्लोचनमामनन्ति ॥ १ ॥

अस्तीति । अस्तीत्येतत्तिङन्तप्रतिरूपकमव्ययम् । अत्रिर्नाम कश्चन ब्रह्मणो मानसः पुत्रः । तस्य नेत्रं नयनम् । 'लोचनं नयनं नेत्रम्' इत्यमरः । प्रभवत्यस्मादिति प्रभवः कारणम् । 'ऋदोरप्' इत्यप्प्रत्ययः । 'स्याज्जन्महेतुः प्रभवः' इत्यमरः । अत्रिनेत्रं प्रभवो यस्य सोऽत्रिनेत्रप्रभवः । 'अनेकमन्यपदार्थे' इत्यत्र 'बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्' इति समानाधिकरणबहुव्रीहिः । अत्रिनेत्रप्रभवत्वमुक्तं स्कान्दे काशीखण्डे—'पिता सोमस्य भो विप्र जज्ञेऽत्रिर्भगवानृषिः । ब्रह्मणो मानसात्पूर्वं प्रजासर्गं विधित्सतः । अनुत्तमं नाम तपो येन तप्तं हि तत् पुरा । दश वर्षसहस्राणि दिव्यानीति हि नः श्रुतम् । ऊर्ध्वमाचक्रमे तस्य रेतः सोमत्वमेयिवान् । नेत्राभ्यां सुस्रुवे तस्य दशधा द्योतयन् दिशः ॥' इति । अनेन जन्मशुद्धिरुक्ता । कलाः षोडश भागाः सुषुमारूपा आत्मा स्वरूपं यस्य स तथोक्तः, विद्यात्मकश्च । 'कला शिल्पे कालभेदे सुषुमाविद्ययोरपि' इति वैजयन्ती । एतेन तेजस्वित्वं सकलविद्यात्मकत्वं च दर्शितम् । शशो नित्यमस्मिन्नस्तीति शशी । 'एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इति निषेधस्य 'क्वचिदिष्यतेऽपि' इति भाष्यकारवचनेन 'कालाः परिमाणिना' इति सूत्रकारप्रयोगज्ञापनेन च प्रायिकत्वावगमात् । 'अत इनिठनौ' इति नित्ययोगे मत्वर्थीय इनिप्रत्ययः । शशीति नाम्ना प्रसिद्ध इत्यर्थः । असाधारण्येन व्यपदेशार्थमिदं विशेषणम् । न क्षरन्तीति न क्षियन्तीति वा नक्षत्राणि तारकाः । क्षरतेः क्षियतेर्वा क्षत्रमिति निपात्य 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' इति नञः प्रकृतिभावान्नलोपाभावः । 'नक्षत्रमृक्षं भं तारा' इत्यमरः । तेषां गणः समूहः । 'गणा प्रमथसंख्यौघाः' इति वैजयन्ती । तस्य नाथः । एतेन परमैश्वर्यं कथितम् । अस्ति विद्यते । तमेव विशिनष्टि— यमिति । आप्तवाचः वेदाः । वारिणि जले जायन्त इति वारिजानि पद्मानि । 'सप्तम्यां जनेर्डः' इति डप्रत्ययः । तेषां श्रियं शोभां हरति यः स तथोक्तः, तम् । 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः । 'शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिति गद्यते' इति शाश्वतः । चन्द्रस्य पद्मवैरित्वं लोकप्रसिद्धमङ्गीकृत्यैवमुक्तम् । हरिलोचनमपि वारिजश्रीहरम्, तत्सदृशकान्तियुक्तत्वात् । यं शशिनं हरेर्विष्णोर्वामं सव्यं लोचनं नयनमामनन्ति प्रतिपादयन्ति । "वामस्तु रम्ये वक्रे स्यात् सव्ये वामस्थितेऽपि च ।' 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना शबले त्रिषु ॥' इत्युभयत्र विश्वामरौ । अत्र प्रथमार्धे परिकरालंकारः, अत्रिनेत्रप्रभव इत्यादीनां विशेषणानां साभिप्रायत्वात् । 'यत्राभिप्रायगर्भा स्याद्विशेषणपरम्परा । तत्राभिप्रायविदुषामसौ परिकरो मतः ॥' इति लक्षणात् । वारिजश्रीहरमित्यत्र पदगतो निदर्शनालंकारः, वारिजश्रियो नयनेऽसंभवात्, वारिजश्रीरिति बिम्बप्रतिबिम्बभावस्य गम्यत्वात् 'असंभवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना' इति लक्षणात् । परिकरनिदर्शनालंकारयोस्तिलतण्डुलवत् संसृष्टिः । इतः परमलंकारा ग्रन्थविस्तरभयान्नोच्यन्ते । काव्यादावकारप्रयोगः प्रीतिकर इत्यकारः प्रयुक्तः । तदुक्तम्— 'प्रीतिमकारस्तनुते यदि न

ब्रूते निषेधार्थम्' इति। लक्ष्मीकरत्वादादौ तगणः प्रयुक्तः। तदुक्तम्— 'तो लक्ष्मीं तनुते' इति। आमनन्ति 'म्ना अभ्यासे' इत्यस्य धातोर्लटि शपि 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' इति मनादेशः। 'झोऽन्तः' इति झकारस्यान्तादेशे 'अतो गुणे' इति पररूपम्। अस्मिन् सर्गे इन्द्रवज्रोपेन्द्रवज्रयोर्मिश्रणादुपजातिर्वृत्तम्। 'स्यादिन्द्रवज्रा यदि तौ जगौ गः उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः॥' इति लक्षणात्॥ १॥

**सेव्यः सुराणां हिमवर्षिपादः**
**संभावनीयः शिरसा शिवेन।**
**महीध्रभर्तेव तमोऽपहन्त्रीं**
**यः कौमुदीं दिव्यनदीं प्रसूते॥ २॥**

**सेव्य इति**। सुराणामिन्द्रादीनाम्। 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी। सेव्यः सेवितुमर्हः। 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः। प्रतिमासं तेषामुपभोग्यत्वादन्यत्र देवभूमित्वात् सुरैः सेव्य इत्यर्थः। हिमवर्षिणस्तुषारस्राविणः पादा रश्मयः प्रत्यन्तपर्वताश्च यस्य स तथोक्तः। 'पादा रश्म्यङ्घ्रितुर्यांशाः' 'पादाः प्रत्यन्तपर्वताः' इत्यमरः। पुनः कीदृशः? शिवेन शंभुना कर्त्रा। 'शिवः शूली महेश्वरः' इत्यमरः। शिरसा करणेन संभावनीयो माननीयः। भवतेश्चौरादिकादनीयर्प्रत्ययः। चन्द्रपक्षे स्वयं नित्यं हरशिरःस्थितत्वादन्यत्र श्वशुरत्वाच्छिवेन शिरसा नमस्कार्य इत्यर्थः। त्रिभुवनवन्द्येनानादिनिधनेन परमेश्वरेण हिमवतो नमस्कारकरणमसंगतमिति नाशङ्कनीयम्; अधिकवयसाऽपि जामात्राऽल्पवयसः श्वशुरस्य नमस्कारकर्तव्यतायां प्रमाणस्य विद्यमानत्वात्। तथा च स्मृतिः— 'ऋत्विक्पितृव्यश्वशुरमातुलानां यवीयसाम्। अपि कुर्यान्नरो ज्यायान्प्रत्युत्थायाभिवादनम्' इति। एतदेवाभिसंधाय कुमारसंभवे कालिदासेनाप्युक्तम्— 'ह्रीमानभूद्भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः' इति। यः शशी तमोऽपहन्त्रीं ध्वान्तविनाशिनीम्; अन्यत्र तमोगुणनाशिनीं शोकनाशिनीं वा। 'तृजकाभ्यां कर्तरि' इति षष्ठीसमासनिषेधेऽपि 'जनिकर्तुः' इति ज्ञापकाच्छेषषष्ठ्या समासः। 'तमो राहौ गुणे ध्वान्ते शोके च' इति विश्वः। कौमुदीं ज्योत्स्नाम्। 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः। महीं धरन्तीति महीध्राः पर्वताः। मूलविभुजादित्वात्कप्रत्ययः। तेषां भर्ता पतिः हिमवान्। नन्वत्र कथं षष्ठीसमासः, यावता 'तृजकाभ्यां कर्तरि' इति निषिध्यते। उच्यते— याजकादिषु भर्तृशब्दः पठ्यते संबन्धिशब्दः पतिपर्यायः। तस्य 'याजकादिभिश्च' इति षष्ठीसमासोऽस्त्येव। दिव्यनदीं गङ्गामिव। पचादिषु नदट् इति पठ्यते। तेन टित्वान्ङीप्। प्रसूते जनयति। यद्यपि गङ्गा कारणान्तरादुत्पन्ना, तथाऽपि हिमवतः प्रथमं दृश्यत इत्येवमुक्तम्। 'षूङ् प्राणिगर्भविमोचने' इत्यस्य धातोः कर्तरि लटि रूपम्। ङित्त्वादात्मनेपदम्॥ २॥

SRIRANGAM SRI SANKARA GURUKULA SERIES No. 5.

# KUMĀRASAMBHAVACHAMPŪ

BY

ŚRĪ ŚARABHOJI MAHĀRĀJA

*of Tanjore.*

EDITED BY

*Gurubhaktasikhamani Sastraprasarabhushana*

**T. K. BALASUBRAHMANYA AIYAR, B.A.,**

*Dharmadhikari, Sri Sankaragurukulam, Srirangam.*



—— SRIRANGAM ——

SRI VANI VILAS PRESS.

1939.



॥ श्रीः ॥

# ॥ कुमारसंभवचम्पूः ॥

श्रीशरभोजिमहाराजविरचिता ॥



## प्रथम आश्वासः

नृत्तारम्भपिनद्धपिङ्गलजटासंदंशनिष्पीडन-

स्निग्धोन्मृष्टकलङ्कचन्द्रविगलत्पीयूषधारोल्बणैः ।

चञ्चन्मस्तकनिष्पतत्सुरनदीपूरैर्जगत्पावयन्

कल्याणं विदधातु नः शुभकरः श्रीचन्द्रमौलीश्वरः ॥ १ ॥

मातर्वाग्देवि किं ते शरभनरपते वत्स कार्यं ममास्ते

सौब्रह्मण्योद्भवार्थे रुचिरमृदुपदे चम्पुकाव्येऽभिलाषः ।

विज्ञातं हैमशैलस्फटिकमणिशिलासंघसंपातजात-
स्फीताटोपाभ्रगङ्गाप्रवहणसदृशाः सन्तु ते वाग्विलासाः ॥ २॥

राज्ञां भोसलवंशवारिधिसुधाधाम्नां यशोजन्मभू-
र्देवानाममरावतीव नगरी तञ्जापुरी विश्रुता ।
लक्ष्मीनित्यनिवासमन्दिरमहापद्माकृतिर्देवता-
ब्रह्माद्यालयपूरितोत्सवसमाजोल्लासिता शोभते ॥ ३ ॥

तत्र श्रीपरमेश्वरार्चनकलाधौरंधरीशोभिनो
मालोजिक्षितिपालमौक्तिकमणेर्वंशेऽभवत्पावने ।
इक्ष्वाकोरिव संततौ दशरथः षड्दर्शनीसारवि-
त्प्रख्यातस्तुलजेन्द्रभूवलारिपुः साहित्यविद्यानिधिः ॥ ४ ॥

तत्पुत्रः शरभोजिवर्मनृपतिः साहित्यसाम्राज्यभू-
र्भोजो रामकथासुधामधुरितं चम्पूप्रबन्धं यथा ।
सालंकारचमत्क्रियारसपदं शुद्धं च संदर्भतः
संग्रथ्नाति कुमारसंभवमहाचम्पूप्रबन्धोत्तमम् ॥ ५ ॥

पद्यं हृद्यमपीह गद्यरहितं धत्ते न हृद्यास्पदं
गद्यं पद्यविवर्जितं च भजते नास्वाद्यतां मानसे ।
साहित्यं हि तयोर्द्वयोरपि सुधामाध्वीकयोर्योगव-
त्संतोषं हृदयाम्बुजे वितनुते साहित्यविद्याविदाम् ॥ ६ ॥

अस्ति स्वस्तरुबृन्दसुन्दरतरच्छायोल्लसत्कंदर-
क्रीडत्किंनरमानिनीजनमनःस्वाच्छन्द्यसाक्षात्कृती ।
लोकालोककुलाचलादिकमहाशैलाग्रणीर्देवता-
रूपो नाम हिमाचलो महिमभूमोत्तरस्यां दिशि ॥ ७ ॥

यं सर्वेऽपि महीधरा विदधिरे वत्सं धरित्रीं पुरा
दोग्धुं श्लाघ्यगुणस्य यस्य न हिमं सौभाग्यमुल्लुम्पति ।
इन्दोः पूर्णकलस्य लाञ्छनमिव स्वर्वारसीमन्तिनी-
लीलामण्डनसंपदं वितनुते यो धातुसंपत्तिभिः ॥ ८ ॥

यत्र च, महादेव इव हिमखण्डपाण्डरे, पुरुषोत्तम इवोत्फुल्लसरसी-रुहलोचने, कमलासन इवोपगतहंसमण्डले, सुरलोक इव सुपर्ववंशाधिष्ठाने, कैलास इव सर्वमङ्गलावासे, वैकुण्ठ इव हरिणाधिष्ठिते, सत्यलोक इव सहिरण्यगर्भे, पुण्डरीकाक्षवक्षस्तट इव वनमालालंकृते, काव्यप्रबन्ध इव नानावर्णधातुविचित्रे, रत्नसानाविव हैमखण्डगण्डोपले, परशुराम इवाधरितराजमण्डले, महाकासार इव सर्वतोमुखविचलत्पुण्डरीके, हिमोत्पत्तिभूमावप्याहिमाहिते, धृतक्षमेऽपि दुरासदे, गङ्गाप्रभवेऽप्यभीष्मे, संततनिष्यन्दमानतुहिनासारधौतरक्तं पदमपश्यतामपि किरातानां नखरायुधनखरन्ध्रमुक्तमुक्ताफलान्येव विभिन्नवनकुम्भिकेसरिपदवीपरिज्ञानहेतवः, सातपश्रृङ्गाश्रयणमेवाधःसानुगतसिद्धानां वृष्टिबाधानिवारणम्, धातुरसन्यस्ताक्षरा भूर्जत्वच एव सुरसुन्दरीणाम-

नङ्गलेखाः, कीचकरन्ध्रेषु दरीमुखोद्गतसमीरणपूरणमेव किंनरगणोपगानम्, कण्डूलवेतण्डकपोलकषणोद्भूतसरलगन्ध एव सानुसुरभीकरणपटुः, वनितासखवनेचराणां ज्योतिर्लता एव सुरतप्रदीपाः, अतिघनजघनपयोधराणामश्वमुखीनां तुहिनदुर्गमेऽपि मार्गे मन्दमेव गमनम्, दिवाभीत इव दिवाकराद्गुहालीनोऽन्धकारः, इतस्ततश्चटुलचञ्चलवालचमरीगणैरेवान्वर्थितो गिरिराजशब्दः, प्रियतमकरकमलापहृतांशुकानां किंपुरुषाङ्गनानां धाराधरा एव तिरस्कारिण्यः, चटुलमृगानुधावनपरिश्रान्तकिरातानां भागीरथीशीकरशीतलदेवदारुवनवातसेवैव श्रमापनोदहेतुः, ऊर्ध्वमुखसूर्यमयूखैरेव शृङ्गाग्रसरःसरसीरुहावबोधः, प्रजापतिरेवाधिष्ठातेति विश्वातिशायिनी गुणसमृद्धिः ॥

पितॄणां मानसीं कन्यामुपयेमे स भूधरः ।
मेनामुत्पादयामास तस्यां मैनाकमात्मजम् ॥ ९ ॥

दक्षावज्ञानमुक्तस्वतनुरथ सती पूर्वपत्नी पुरारे-
रुत्साहेनेह नीताजनि हिमवता श्रीर्यथा मेनकायाम् ।
आसीदाशाप्रसादो ववुरपरजसो वायवः शङ्खशब्दा-
त्पाश्चात्त्या पुष्पवृष्टिर्जननदिनमभूत्प्राणिसौख्याय तस्याः ॥

जाता रत्नशलाकिकेव शुशुभे बन्धूदिता पार्वती-
त्याख्याताभिजनं कला प्रतिदिनं चान्द्रीव लब्धोदया ।

दृष्ट्यासेचनकं दधत्यभिनवं रूपं हिमाद्रेः पितुः
पुत्रित्वेऽप्यपुनादभूषयदपि स्वेन त्रिमार्गेव तम् ॥ ११ ॥

सा सौवर्णधुनीतले सिकतिले देशे सखीभिः समं
क्रीडामन्वभवद्दधार सकलाः प्राग्जन्मविद्या अपि ।
आपादं स्फुरदुत्तरोत्तरसमस्ताङ्गाभिरूप्यं वपु-
स्तस्याः शोभयति स्म धातुरपराशिल्पं वयो यौवनम् ॥ १२ ॥

कन्यां तां पितुरन्तिके सुरमुनौ वीक्ष्यैकदा शंकर-
स्यार्धाङ्गीभवितेयमित्युदितवत्युत्सृष्टवार्तान्तरः ।
देवं चन्द्रकलाधरं निजसुतामभ्यर्थनाभङ्गतो
भीतो ग्राहयितुं शशाक न गिरिर्मानैषिणो ह्युन्नताः ॥ १३ ॥

यदैवोदस्राक्षीत्पितृपरिभवात्पूर्वजनने
शरीरं सत्येतत्प्रभृति गतसङ्गः पशुपतिः ।
तपस्तप्तुं पश्चाद्रुचिरमृगनाभीपरिमले
हिमाद्रेः प्रस्थेऽसाववसदुपगङ्गोक्षिततरौ ॥ १४ ॥

सर्वेषां तपसां श्रुतिस्मृतिवचोनुष्ठानपारंपरी-
गम्यानां फलदायकोऽपि भगवान् श्रीचन्द्रमौलीश्वरः ।
ब्रह्मोपेन्द्रमहेन्द्रवायुवरुणाद्यैश्वर्यदाताऽपि सन्
संकल्पं तपसे चकार मनसा केनापि कामेन सः ॥ १५ ॥

प्राणानायम्य नासाशिखरकलितदृक्सुस्थिरः संवृतास्यो
विष्टभ्योरो निरुद्धाखिलकरणगतिर्योगशास्त्रोदितेन ।
मार्गेणात्मस्वरूपं मनसि कृतसमाधानयोगे विशुद्धे
ध्यायन्ध्येयोऽखिलानामपि विभुरभजद्योगमार्गं पुराणम् ॥

एवं तत्र तपस्यतीन्दुमकुटे विश्वाधिके योगिनां
पूर्वेषामपि वेदबृन्दशिखरैर्लक्ष्ये यथा तत्त्वतः ।
भूर्जत्वग्वसना नमेरुकुसुमोत्तंसा गणाः पर्वते
तस्मिन्गाङ्गपयःपवित्रितशिलारम्येऽवसन्निर्भराः ॥ १७ ॥

महोक्षोऽप्येतस्मिन्हिमघनशिलावज्रकठिनैः
खुराग्रैरुल्लिख्य प्रकटितमदावेशरभसः ।
कथंचिद्दृष्टः सन्गवयमृगबृन्दैर्भयवशा-
द्विनम्रैः सिंहानां ध्वनिषु विननादाक्षमतया ॥ १८ ॥

अथ स गिरिराजः, अखिलजनानन्दकरपश्चर्यालंकर्मीणस्य, समस्त-सुरासुरस्तोमवन्दितचरणारविन्दस्य, अनवरतमन्दाकिनीनिष्यन्दकन्द-लसुन्दरतरेन्दुकलाबन्धुरजटाबन्धस्य, श्रुतिस्मृतीतिहासपुराणागमादि-प्रतिपादितविश्वाधिकभावस्य, अकृतकवचोनिकुरुम्बलक्ष्ययाथात्म्यस्य, तपस्यतो भगवतः पुरारातेः शुश्रूषार्थे प्रयतां निजां तनूजां प्रेषयामास ॥

SRIRANGAM SRI SANKARA GURUKULA SERIES No. 6.

MADRAS GOVERNMENT ORIENTAL MANUSCRIPTS SERIES No. 11.

# ḌAMARUKA

OF

GHANAŚYĀMAPAṆḌITA

(*Alias* ĀRYAKA)

EDITED BY

*Vidyasagara Vidyavacaspati*

**P. P. SUBRAHMANYA SASTRI, B.A. (Oxon), M.A. (Madras),**

*Curator, Government Oriental Manuscripts Library & Professor of Sanskrit & Comparative Philology, Presidency College, Madras.*



—— SRIRANGAM ——

SRI VANI VILAS PRESS.

1939.

# NOTE.

Ghanasyamapandita, also known as Aryaka was a famous writer of the first half of the eighteenth century and flourished under the patronage of the Mahratta King Tukkoji I (1729-1735) at Tanjore. Most of his works are preserved in the Tanjore Palace Library. Besides being a talented writer of repute he was fortunate in possessing two wives Kamala and Sundari who were also equally gifted writers in Sanskrit.

The Damaruka of Ghanasyama is a rare dramatic work, dealing with contemporary social manners complete in ten Alankaras. Our edition is based on the only manuscript of the work available in the Madras Government Oriental Manuscripts Library—D. No. 12519 which is a paper manuscript in Devanagari script.

A detailed Introduction, Table of Contents and critical remarks on the author and the literary circle in which he lived, will be furnished on the completion of the Volume.

PRESIDENCY COLLEGE,
MADRAS.
Dated: 30—3—1939.

*P. P. Subrahmanya Sastri,*
*Curator, Government Oriental Manuscripts Library,*
*Madras.*



# ॥ डमरुकम् ॥

## घनश्यामकविकृतम् ॥



यस्यानङ्गरणोत्सवो न घटते जाग्रत्यपि प्रेयसि
क्रोधे कन्दलितेऽपि यस्य विमुखीभावो न संभाव्यते ।
तस्याश्चर्यगुणाकरस्य महसो रामस्य वाऽन्यस्य वा
पादाब्जस्य पराः परागकणिकाः पावासुरावासतः ॥ १ ॥

अपि च—

अभ्यस्ती नापि दृष्टेत्यहिघटपणकृच्चद्धरत्वाञ्जिषिद्धे
तत्सङ्गे साक्षिसिद्धे सुतनु कुचगिरेः पातयामःस्पृशं माम् ।
यद्वा वेणीकशाभिः प्रहर दलय वा हक्शरैर्मञ्जयाहो
नाभीकूपे चिरायेत्यभिदधदुमया क्रीडितोऽव्यान्मृडो वः ॥ २ ॥

(नान्द्यन्ते)

**निर्वाहकः**— (परिक्रम्य पाण्डुरपटविहितनेपथ्याभिमुखमवलोक्य) मारिष, इतस्तावत् ।

(प्रविश्य)

**पारिपार्श्विकः**— भाव, एषोऽस्मि ।

**सूत्रधारः**— मारिष, 'पुरा कविभिरचुम्बितं नवनवोत्तुङ्गभङ्गीरसोल्लासकल्लोलितं विविधचमत्क्रियानिधानं किमपि निबन्धनं निरूप्यताम्' इति संसदा संभाव्य संदिष्टोऽस्मि ।

**पारिपार्श्विकः**— किमस्ति किमपि तादृक्षम् ?

**सूत्रधारः** -- (स्मृतिमभिनीय) अस्ति डमरुकं नाम ।

**पारिपार्श्विकः**— (सवैलक्ष्यम्) न श्रुतं न श्रूयते न श्रोष्यते च डमरुकमिति ।

**सूत्रधारः**— नूनमेवमेव । परं त्विदमद्भुतम् ।

**पारिपार्श्विकः**— भाव, किं तदद्भुतम् ?

**सूत्रधारः**— यत्किल स्वप्ने पञ्चषान्वारान्परमेश्वरेण डमरुकं ग्रन्थयेति नियुक्तः कश्चन कविः ।

**पारिपार्श्विकः**— (स्वगतम्) स किल कृतार्थः । (प्रकाशम्) आर्य को नाम स कविः ?

**सूत्रधारः**—

यस्येशोऽग्रभवः पिता किल महादेवः स काशी प्रसूः
साधुः श्रेयसि सुन्दरी प्रियतमा शाकम्भरी च स्वसा ।
सप्ताष्टोक्तिलिपिप्रभुर्गुणनिधिश्चौण्डाजिबालाजिनः
पौत्रो यो द्वयवादिपङ्क्तिमिहिरो द्वात्रिंशवर्षान्वितः ॥ ३ ॥

पटुषड्भाषाकाव्यं नाटकभाणौ च सट्टकं चम्पूः ।
अन्यापदेशशतकं प्रहसनमपि येन लीलया ग्रथितम् ॥ ४ ॥

अपि च,

सरस्वती घनश्यामो घनश्यामः सरस्वती ।
इत्येव यं प्रति प्रायः किंवदन्ती प्रवर्तते ॥ ५ ॥

यश्च पुनः,

सुरनीरघनश्यामकविकण्ठीरवप्रभुः ।
स्वभुजार्जितसंपत्तिरुपकर्ता विराजते ॥ ६ ॥

अपि च,

बुद्ध्या वर्धितशैवपक्ष निजदोर्दण्डात्तभाग्योपक्ृ-
त्प्रायो वैदिकलौकिकाध्वगतिमन्नष्टप्रबन्धीकर ।
आनन्दाम्बुनिधे त्रियम्बककुलोद्धारैकहेतो कवे
धीर श्रीसुरनीरपण्डित घनश्याम त्वमन्यादृशः ॥ ७ ॥

इत्यनुकलं वर्ण्यते सकलजनैः । एवं च रोमाञ्चयन्ति सुन्दरीवचनसुधाबिन्दवः ।

तथा हि,

अये सखि गृहे गृहे भुवि पुनर्विवाहश्रुतेः
क्वचाऽपि समं धवैर्विदधते चकोरीदृशः ।
अहं तु कविताश्रिया मृगितलब्धदृष्टोज्झित-
त्रिलोकवरया स्वयंवृतधवाऽपि नन्दाम्यहो ॥ ८ ॥

पारिपार्श्विकः— किं स महाकविः ? यं प्रति खलु—

वल्मीकात्मजराजशेखरकविश्रीभावभूत्याङ्गिरः-
पुत्रव्यासगुणाढ्यबाणसुकविश्रीभर्तृमेण्ठांशभृत् ।
माहाराष्ट्रकुलेन्दुरेष कवने भोजक्षितिक्षित्कवि-
र्दिक्पालाष्टकभागभागिव कविः कण्ठीरवो दृश्यते ॥ ९ ॥

अपि चैतन्महत्कुतुकम् ।

ननु प्राप्तः कण्ठीरव इति सघोषे सदसि दु-
ष्कवीन्द्राः श्वक्षुद्रा इव गवयवच्छान्दिकचयाः ।
श्रुतिज्ञाः सारङ्गा इव गवलवत्तार्किकगणाः
परे मूढाः क्रोडा इव दधति चूडा विमनसः ॥ १० ॥

इति समाकर्ण्यते कर्णपीयूषभूता भणितिः ।

**सूत्रधारः**— आम् ।

**पारिपार्श्विकः**— (सानन्दम्) अपि तत्कृतिः यत्किल डमरुकमिति भणितं भावेन ?

**सूत्रधारः**— को नु खल्वन्यः ?

**पारिपार्श्विकः**— आर्य, स खलु किमिति निर्माति मुहुर्मुहुर्विविधनिबन्धनानि ?

**सूत्रधारः**—

> एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
> कर्तव्या बहवो ग्रन्था यद्येकोऽपि प्रथां व्रजेत् ॥ ११ ॥

**पारिपार्श्विकः**— भाव, काव्यालापांश्च वर्जयेदिति परिभाषन्ते हि मनीषिणः ।

**सूत्रधारः**— (विहस्य) जयति नाम तत्र कुठारः ।

> काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
> शब्दमूर्तिधरस्यैते रूपं विष्णोर्महात्मनः ॥ १२ ॥

इति ।

**पारिपार्श्विकः**— आर्य, को गुणः कवने ?

**सूत्रधारः**—

> शब्दे निर्णयमादधाति तनुते गोष्ठ्यां प्रतिष्ठां परां
> सूते कीर्त्तिमभङ्गुरां रचयति स्वच्छन्दमोदं मनः ।
> मानं कंचन दोग्धि मार्ष्टि दुरितं निर्गन्धयत्यल्पतां
> कल्पक्षोणिरुहीव साधुकवने को वा गुणो दुर्लभः ॥ १३ ॥

**पारिपार्श्विकः**— आर्य, स्पर्धन्ते किलानेन केचन दुष्कविहतकाः ।

**सूत्रधारः**— (सरोषम्) मारिष किमाशुकवनैः, उत सूक्तिविलासैः, किमथवा वश्यवाग्विभवैः, आहोस्विदष्टप्रबन्धीकरत्वेन, केन वा गुणातिशयेन स्पर्धन्ते ?

**पारिपार्श्विकः—** (साश्चर्यम्) आर्य, अज्ञानातिशयेन ।

**सूत्रधारः—** साधु सम्यगुक्तम् ।

**पारिपार्श्विकः—** आर्य, अज्ञाः किमर्थं दूषयन्त्यस्य निबन्धनानि ?

**सूत्रधारः—** (स्वगतम्) सरस्वतीद्रोहार्थम् । (प्रकाशम्)

> निर्गललभ्यसुकवित्वपथेऽधिवान्धो
>
> हा दूषयेत कुकविः सुकविप्रबन्धान् ।
>
> आरोहमङ्गलविधौ मनसः प्रसादं
>
> प्रासादसङ्गमतिनिन्दति नाम पङ्गुः ॥ १४ ॥

**पारिपार्श्विकः—** आर्य, विनिन्दन्ति खलु मुहुरस्य कवनं केऽपि दार्मिकशिरोमणयः छान्दसादयोऽपि ।

**सूत्रधारः—** (विहस्य)

> स्वयं कवित्वाध्वनि गन्तुमन्धो
>
> मन्दो बुधेन्द्रोस्तदिदं विनिन्देत् ।
>
> अपूतशीला परिपूतशीलं
>
> कुलाङ्गनायाः कुलटाङ्गनेव ॥ १५ ॥

**पारिपार्श्विकः—** आर्य, तावदिदमास्ताम् । विलक्षणमिदं डमरुकम् ।

**सूत्रधारः—**

> योऽयमेत्य निशि स्वप्ने यद्दिदेश तदद्भुतम् ।
>
> स जानाति न जानाति न जानाति जनोऽपरः ॥ १६ ॥

अथवा यथा कृतं कविना तथैव लक्षणं देवेनादिष्टमिति स्पष्टमेवैतत् ।

**पारिपार्श्विकः—** आर्य, नूनमेवमेव भवेत् तथापि न खलु विस्रम्भो दुर्जनानां यत्किल स्वप्नमवतीर्णो देव इति ।

**सूत्रधारः**— वर्तते नाम कवेरुक्तिस्तत्रैव विषये ।

**पारिपार्श्विकः**— कथमिव ?

**सूत्रधारः**—

> **भोः सज्जना ननु मृषा कथनैः खलानां**
> **भाग्यानि संप्रति कियन्ति विलुण्ठितानि ।**
> **मन्मानसेन सममत्र शिवोपगूढः**
> **साक्षी शिवो विजयते विजयाधिरूढः ॥ १७ ॥**
>
> इति ।

**पारिपार्श्विकः**— हन्त गर्वोक्तिरपि संशोभते । (विचिन्त्य) आर्य, किमिति न वर्णितस्तेन निजवाङ्मयनिगुम्भविलासः ?

**सूत्रधारः**— श्रूयतां वर्णित एव भानुदत्तादिभिः ।

**पारिपार्श्विकः**— किमिति ?

**सूत्रधारः**—

> **वाग्देवीकरदण्डघातनलिकक्रीडाविनिर्यत्सुधा-**
> **सारासारमहापरीमलझरीमाधुर्यवेगासहः ।**
> **गम्भीरः सरलो विलेखनविलम्बेन क्षणाकूणनः**
> **श्रीमान्भाति रसोर्मिलः कविघनश्यामस्य वाणीभरः ॥ १८ ॥**
>
> इति ।

**पारिपार्श्विकः**— युज्यते ।

**सूत्रधारः**— मारिष, कृतं विलम्बेन । अविलम्बेन कलहंसकलकण्ठयोर्वर्णिकामादाय प्राभिकमानसावर्जनाय **राजानुरञ्जनं** प्रक्रमावहे ।

**पारिपार्श्विकः**— एवमस्तु ।

(इति निष्क्रान्तौ ।)

**इति पात्रसूचना ॥**

SRIRANGAM SRI SANKARA GURUKULA SERIES No. 7.

MADRAS GOVERNMENT ORIENTAL MANUSCRIPTS SERIES No. 12.

# ŚṚṄGĀRAPRAKĀŚA

BY

Maharajadhiraja Śri BHOJA DEVA

EDITED BY

*Vidyasagara Vidyavacaspati*

P. P. SUBRAHMANYA SASTRI, B.A. (Oxon), M.A. (Madras),

*Curator, Government Oriental Manuscripts Library & Professor of Sanskrit & Comparative Philology, Presidency College, Madras.*



—— SRIRANGAM ——

SRI VANI VILAS PRESS.

1939

# NOTE.

The Sringaraprakasa of Maharajadhiraja Sri Bhoja Deva is a standard work on Alankara well known to all rhetoricians. It was discovered in Malabar by the peripatatic party of the Madras Government Oriental Manuscripts Library during their search for rare manuscripts. But till now, no edition of the whole work has appeared. The enthusiastic Orientalist His Holiness Sri Yatirajasvami of Melkote, Mysore, published the three Prakasas 22-23-24 in 1926 as Part I.

Our edition is based on the Paper Manuscript in Devanagari script preserved under R. No. 3252 in the Madras Government Oriental Manuscripts Library. The paper manuscript was transcribed in 1921-22 from a manuscript of the Library, Sanskrit College, Tiruppunithura, Cochin State.

A detailed Introduction, Table of Contents and other critical remarks will be furnished when the Volume is completed.

PRESIDENCY COLLEGE,
MADRAS.
Dated: 31—3—1939.

*P. P. Subrahmanya Sastri,*
*Curator, Government Oriental Manuscripts Library,*
*Madras.*





# ॥ शृङ्गारप्रकाशः ॥

## भोजदेवविरचितः



### प्रथमः प्रकाशः

अच्छिन्नमेखलमलब्धदृढोपगूढ-

मप्राप्तचुम्बनमवीक्षितवक्त्रकान्ति ।

कान्ताविमिश्रवपुषः कृतविप्रलम्भ-

संभोगसख्यमिव पातु वपुः पुरारेः ॥ १ ॥

यत्पादपङ्कजरजःपरिमार्जितेषु

चेतःसु दर्पणतलामलतां गतेषु ।

शब्दार्थसंपद उदारतराः स्फुरन्ति
विघ्नच्छिदेऽस्तु भगवान्स गणाधिनाथः ॥ २ ॥

आत्मस्थितं गुणविशेषमहंकृतस्य
शृङ्गारमाहुरिह जीवितमात्मयोनेः ।
तस्यात्मशक्तिरसनीयतया रसत्वं
युक्तस्य येन रसिकोऽयमिति प्रवादः ॥ ३ ॥

सत्त्वात्मनाममलधर्मविशेषजन्मा
जन्मान्तरानुभवनिर्मितवासनोत्थः ।
सर्वात्मसंपदुदयातिशयैकहेतु-
र्जागर्ति कोऽपि हृदि मानमयो विकारः ॥ ४ ॥

तात्पर्यमेव वचसि ध्वनिरेव काव्ये
सौभाग्यमेव गुणसंपदि वल्लभस्य ।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः
शृङ्गार एव हृदि मानवतो जनस्य ॥ ५ ॥

शृङ्गारवीरकरुणाद्भुतरौद्रहास्य-
बीभत्सवत्सलभयानकशान्तनाम्नः ।
आम्नासिषुर्दश रसान्सुधियो वयं तु
शृङ्गारमेव रसनाद्रसमामनामः ॥ ६ ॥

वीराद्भुतादिषु च येह रसप्रसिद्धिः
सिद्धा कुतोऽपि वटयक्षवदाविभाति ।
लोके गतानुगतिकत्ववशादुपेता-
मेतां निवर्तयितुमेष परिश्रमो नः ॥ ७ ॥

अप्रातिकूलिकतया मनसो मुदादे-
यः संविदोऽनुभवहेतुरिहाभिमानः ।
ज्ञेयो रसः स रसनीयतयाऽऽत्मशक्ते
रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥ ८ ॥

रत्यादयोऽर्धशतमेकविवर्जितानि
भावाः पृथग्विविधभावभुवो भवन्ति ।
शृङ्गारतत्त्वमभितः परिवारयन्तः
सप्तार्चिषं द्युतिचया इव वर्धयन्ति ॥ ९ ॥

आभावनोदयमनन्यधिया जनेन
यो भाव्यते मनसि भावनया स भावः ।
यो भावनापथमतीत्य विवर्तमानः
साहंकृतौ हृदि परं स्वदते रसोऽसौ ॥ १० ॥

रत्यादयो यदि रसाः स्युरतिप्रकर्षे
हर्षादिभिः किमपराद्धमतद्विभिन्नैः ।
अस्थायिनस्त इति चेद्भयहासशोक-
क्रोधादयो वद कियच्चिरमुल्लसन्ति ॥ ११ ॥

स्थायित्वमत्र विषयातिशयान्मतं चे-
च्चिन्तादयः कुत उत प्रकृतेर्वशेन ।
तुल्यैव साऽऽत्मनि भवेदथ वासनायाः
संदीपनात्तदुभयत्र समानमेव ॥ १२ ॥

अतः सिद्धमेतत्— रत्यादयः शृङ्गारप्रभवा एव एकोनपञ्चाशद्भावाः; वीराद्यो मिथ्यारस-प्रवादाः; शृङ्गार एवैकश्चतुर्वर्गैककारणं रस इति। स चानुभवैकगम्यत्वादसर्वविषयत्वाच्च दुरवसेयः, सम्यगभिनयेषु वा विदग्धशैलूषैः प्रदर्श्यमानः सामाजिकैरवधार्यते, प्रबन्धेषु वा महाकविभिर्यथा-

वदाख्यायमानो विदुषां मनीषाविषयमवतरति। तत्र न तथा पदार्थाः प्रत्यक्षेण प्रतीयमानाः स्वदन्ते, यथा वाग्मिनां वचोभिरावेद्यमानाः। तदाह—

'अत्थविसेसा ण हि तह चित्तविआसं कुणन्ति सच्चविआ।
जह उण ते उम्मिळ्ळन्ति सुकइवआहिँ सुसीसन्ता॥'

अतोऽभिनेतृभ्यः कवीनेव बहुमन्यामहे, अभिनयेभ्यश्च काव्यमेवेति। तत्पुनः शब्दार्थयोः साहित्यमामनन्ति; तद्यथा 'शब्दार्थौ सहितौ काव्यम्' इति। कः पुनः शब्दः? येनोच्चारितेनार्थः प्रतीयते। स च द्वादशधा— प्रकृतिः, प्रत्ययः, उपस्कारः, उपपदम्, प्रातिपदिकम्, विभक्तिः, उपसर्जनम्, समासः, पदम्, वाक्यम्, प्रकरणम्, प्रबन्धः, इति। कोऽर्थः? यः शब्देन प्रत्याय्यते। स च द्वादशधा— क्रिया, कालः, कारकम्, पुरुषः, उपाधिः, प्रधानम्, उपस्कारार्थः, प्रातिपदिकार्थः, विभक्त्यर्थः, वृत्त्यर्थः, पदार्थः, वाक्यार्थः, इति। किं साहित्यम्? यः शब्दार्थयोः संबन्धः। स च द्वादशधा— अभिधा, विवक्षा, तात्पर्यम्, प्रविभागः, व्यपेक्षा, सामर्थ्यम्, अन्वयः, एकार्थीभावः, दोषहानम्, गुणोपादानम्, अलंकारयोगः, रसावियोगः, इति।

तत्र यद्यपि 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति प्रयोगनियमः, तथाऽपि धर्मनियमाय शास्त्रप्रक्रियाव्यवहारे प्रकृतिप्रत्ययविभागकल्पनया शब्दार्थभावनायां प्रत्ययात्प्रथमसुपादानकारणमिव योपादीयते तां प्रकृतिरिति व्यपदिशन्ति। सा त्रिधा— धातुरूपा, प्रत्ययरूपा, प्रातिपदिकरूपा च। तत्र धातवः षोढा— परिपठिताः, अपरिपठिताः परिपठितापरिपठिताः, प्रत्ययधातवः, नामधातवः, प्रत्ययनामधातवश्चेति। तेषु परिपठिता भूवादयः; यथा—

भूयात्तेषां कुले जन्म जायन्तां तेषु संपदः।
येषां स्वमिति मन्वानाः स्वीकुर्वन्ति स्वमर्थिनः॥

कविः सृजति काव्यानि हृद्यादधति सज्जनाः।
सूते मुक्ताः पयोराशिर्वहन्ति तरुणीस्तनाः॥

न रुणत्सीन्द्रियग्रामं न शृणोषि गुरोर्वचः।
नोपार्जयसि मित्राणि कथं गृह्णास्यरिश्रियः॥

अपरिपठिताः आन्दोलयत्यादयः ; यथा—

नीपानान्दोलयन्नेव प्रेङ्खोलयति मे मनः ।
पवनो वीजयन्नाशा मानाशामुच्चुलुम्पति ॥

तडित्त्वचयतीवाशा न सन्ते शर्म बर्हिणः ।
पान्थस्त्रीश्वासवैधौर्ण्यं विधमन्त्यब्दवायवः ॥

मिलन्त्याशासु जीमूता विक्लवन्ते दिवि ग्रहाः ।
तापं क्षपयति प्रावृट् क्षीयन्ते कामिविग्रहाः ॥

ये सूत्रेष्वेव पठ्यन्ते न भूवादिषु ते परिपठितापरिपठिताः स्कु इत्यादयः ; यथा—

अनुस्कुनुहि मा मन्तून् वसन्तो मानघस्मरः ।
दूति द्रुतमृतीयस्व जिजावयिषति स्मरः ॥

मुसलक्षेपहुंकारस्तोभैः कलमखण्डिनि ।
कुचविष्कम्भमुत्तम्भन्निष्टभ्नातीव ते स्मरः ॥

पतयालूनि चेष्टासु मनांसि गृहयालवः ।
यूनामेकेन रूपेण योषितो दाह्यसातयाः ॥

सनाद्यन्ताः प्रत्ययधातवः ; यथा—

मीमांससे न शास्त्राणि कृतार्थयसि नार्थिनः ।
गोपायसि न संत्रस्तान् किमुद्धतमटाट्यसे ॥

सूर्यीयति सुधारश्मिं नरकीयति नन्दने ।
कामं कामयमाना त्वां सा जीवन्ती मृतायते ॥

कपोलौ लोहितायेते बाष्पायेते विलोचने ।
प्रियप्रणामकाम्यन्ती कृशाङ्गि कलहायसे ॥

कण्ड्वादयो नामधातवः ; यथा—

कण्डूयति न यो मर्म नर्मणा यो हृणीयते ।
उरुष्यति रुषं यः स राजा राज्यं भिषज्यति ॥

वल्गूयति न योऽसाधुमसूयति न साधवे ।
मन्तूयति न मान्याय महत्सु स महीयते ॥

कमिषुध्यन्तु यज्वानः कं मगध्यन्तु मागधाः ।
कमर्थिनः कुषुभ्यन्तु रामेऽरण्यं सुरण्यति ॥

कथं पुनः कण्ड्वादिर्नामधातुश्च भवति—

'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥'

येभ्यः परिपठितधातुभ्यो नामत्वसिद्धये नामभ्यो वा धातुत्वसिद्धये क्विबादिप्रत्यया लुप्यन्ते, ते प्रत्ययेन नामानि च धातवश्चेति प्रत्ययनामधातवः— होडगल्भक्लीबप्रभृतयः ; यथा—

गिरो गीर्ब्रह्म वामाशीः श्रियः प्रतिभुवौ भ्रुवौ ।
शत्रुशीर्मित्रपूर्बाहुर्युधि ते बन्धना सजूः ॥

होडसे नाभिजातेषु क्लीबसे नाभिमानिषु ।
विदग्धसि न मुग्धेषु नाप्रगल्भेषु गल्भसे ॥

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥

एवं कंसवधमाचष्टे कंसं घातयति, आरात्रि विवासमाचष्टे रात्रिं विवासयति, पुष्यचन्द्रयोगं जानाति पुष्येण चन्द्रं योजयति, उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमं प्राप्नोति माहिष्मत्यां





# ॥ श्रीराजराजेश्वरीमातृकामन्त्रस्तवः ॥

कल्याणायुतपूर्णचन्द्रवदनां प्राणेश्वरानन्दिनीं
पूर्णां पूर्णतरां परेशमहिषीं पूर्णामृतास्वादिनीम् ।
संपूर्णां परमोत्तमामृतकलां विद्यावतीं भारतीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १ ॥

एकारादिसमस्तवर्णविविधाकारैकचिद्रूपिणीं
चैतन्यात्मकचक्रराजनिलयां चन्द्रान्तसंचारिणीम् ।
भावाभावविभाविनीं भवपरां सद्भक्तिचिन्तामणिं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ २ ॥

ईहाधिक्परयोगिबृन्दविदितां स्वानन्दभूतां परां
पश्यन्तीं तनुमध्यमां विलसिनीं श्रीवैखरीरूपिणीम् ।
आत्मानात्मविचारिणीं विवरगां विद्यां त्रिबीजात्मकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ३ ॥

लक्ष्यालक्ष्यनिरीक्षणां निरुपमां रुद्राक्षमालाधरां
त्र्यक्षार्धाकृतिदक्षवंशकलिकां दीर्घाक्षिदीर्घस्वराम् ।
भद्रां भद्रवरप्रदां भगवतीं भद्रेश्वरीं मुद्रिणीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ४ ॥

ह्रींबीजागतनादबिन्दुभरितामोंकारनादात्मिकां
ब्रह्मानन्दघनोदरीं गुणवतीं ज्ञानेश्वरीं ज्ञानदाम् ।
ज्ञानेच्छाकृतिनीं महीं गतवतीं गन्धर्वसंसेवितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ५ ॥

हर्षोन्मत्तसुवर्णपात्रभरितां पीनोन्नताघूर्णितां(?)
हुंकारप्रियशब्दजालनिरतां सारस्वतोल्लासिनीम् ।
सारासारविचारचारुचतुरां वर्णाश्रमाकारिणीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ६ ॥

सर्वेशाङ्गविहारिणीं सकरुणां सन्नादिनीं नादिनीं
संयोगप्रियरूपिणीं प्रियवतीं प्रीतां प्रतापोन्नताम् ।
सर्वान्तर्गतिशालिनीं शिवतनूसंदीपिनीं दीपिनीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ७ ॥

कर्माकर्मविवर्जितां कुलवतीं कर्मप्रदां कौलिनीं
कारुण्याम्बुधिसर्वकामनिरतां सिन्धुप्रियोल्लासिनीम् ।
पञ्चब्रह्मसनातनासनगतां गेयां सुयोगान्वितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ८ ॥

हस्त्युत्कुम्भनिभस्तनद्वितयतः पीनोन्नतादानतां
हाराद्याभरणां सुरेन्द्रविनुतां शृङ्गारपीठालयाम् ।

योन्याकारकयोनिमुद्रितकरां नित्यां नवार्णात्मिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ९ ॥

लक्ष्मीलक्षणपूर्णभक्तवरदां लीलाविनोदस्थितां
लाक्षारञ्जितपादपद्मयुगलां ब्रह्मेन्द्रसंसेविताम् ।
लोकालोकितलोककामजननीं लोकाश्रयाङ्कस्थितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १० ॥

ह्रींकाराश्रितशंकरप्रियतनुं श्रीयोगपीठेश्वरीं
माङ्गल्यायुतपङ्कजाभनयनां माङ्गल्यसिद्धिप्रदाम् ।
तारुण्येन विशेषिताङ्गसुमहालावण्यसंशोभितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरी- ॥ ११ ॥

सर्वज्ञानकलावतीं सकरुणां सर्वेश्वरीं सर्वगां
सत्यां सर्वमयीं सहस्रदलजां सत्त्वार्णवोपस्थिताम् ।
सङ्गासङ्गविवर्जितां सुखकरीं बालार्ककोटिप्रभां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १२ ॥

कादिक्षान्तसुवर्णबिन्दुसुतनुं सर्वाङ्गसंशोभितां
नानावर्णविचित्रचित्रचरितां चातुर्यचिन्तामणिम् ।
चित्तानन्दविधायिनीं सुचपलां कूटत्रयाकारिणीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १३ ॥

लक्ष्मीशानविधीन्द्रचन्द्रमकुटाद्यष्टाङ्गपीठाश्रितां
सूर्येन्द्वग्निमयैकपीठनिलयां त्रिस्थां त्रिकोणेश्वरीम् ।
गोप्त्रीं गर्वनिगर्वितां गगनगां गङ्गागणेशप्रियां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १४ ॥

ह्रींकूटत्रयरूपिणीं समयिनीं संसारिणीं हंसिनीं
वामाचारपरायणीं सुकुलजां बीजावतीं मुद्रिणीम् ।
कामाक्षीं करुणार्द्रचित्तसहितां श्रीं श्रीत्रिमूर्त्यम्बिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १५ ॥

या विद्या शिवकेशवादिजननी या वै जगन्मोहिनी
या ब्रह्मादिपिपीलिकान्तजगदानन्दैकसंदायिनी ।
या पञ्चप्रणवद्विरेफनलिनी या चित्कलामालिनी
सा पायात्परदेवता भगवती श्रीराजराजेश्वरी ॥ १६ ॥

इति श्रीशाक्तमतसिद्धान्तसंस्थापनवामाचारपरमाचार्यवर्य-
वावदूकविद्वच्छंकरानन्दविरचितः
श्रीराजराजेश्वरीमातृकामन्त्रस्तवः संपूर्णः ॥

---

# ॥ पार्वत्यष्टकम् ॥

महारजतचेलया महितमल्लिकामालया
तुलारहितफालया तुलितवारिभृज्जालया ।
शिवाभिमतशीलया शिशिरभानुचूडालया
महीध्रवरबालया मम हृतं मनो लीलया ॥ १ ॥

नमज्जनभवान्तया नलिनशोभिनेत्रान्तया
निरीतिकृदुदन्तया निजनिवासवेदान्तया ।
लसच्छुकशकुन्तया ललितकुन्दजिद्दन्तया
मनो मम हृतं तया मनसिजान्तकृत्कान्तया ॥ २ ॥

सुवर्णसुमनाभया सुरमहीधरावासया
शशाङ्करुचिहासया शरविपक्कबाणासया ।
कृपाकलितदासया कृतजगत्त्रयोल्लासया
विभिन्नपुरशासया विवशितोऽहमत्रासया ॥ ३ ॥

कचालिजितभृङ्ग्या कमलजित्वरापाङ्ग्या
कुतूहलिकुरङ्ग्या कुचयुगे महातुङ्ग्या ।
कनद्रुचितरङ्ग्या कलितविद्विषद्भङ्ग्या
प्रसक्तहरसङ्ग्या परवशोऽस्मि वामाङ्ग्या ॥ ४ ॥

वतंसितकदम्बया वदनलोभिलोलम्बया
कराहृतकलम्बया क्रमविधूतकादम्बया ।
प्रणम्रधृतशम्बया प्रकटिताखिलालम्बया
हृतोऽस्मि जगदम्बया हृतशशाङ्कभृद्बिम्बया ॥ ५ ॥

जनीलसदहार्यया जनिमतां मनोधार्यया
सुरारिवधकार्यया सुकृतिवेदितौदार्यया ।
परित्रयि विचार्यया प्रियकवृक्षभूचर्यया
प्रकाशितहृदार्यया पशुपतेरहं भार्यया ॥ ६ ॥

प्रणम्रसुरवर्गया प्रकटितात्मभूसर्गया
स्तुवानमुनिनिर्गया स्तुतिकृदर्पितस्वर्गया ।
हिमाद्रिकुलनिर्गया हिततरत्रयीमार्गया
मदाकुलितभर्गया मनसि मे स्थितं दुर्गया ॥ ७ ॥

पुरो नटितरम्भया पुरहरे स्थितारम्भया
समग्रकुचकुम्भया सकलवन्द्यवाग्गुम्भया ।

शराहतनिसुम्भया शमितदुर्जनोज्जृम्भया
भवाम्यहमदम्भया परवशो गणेड्डिम्भया ॥ ८ ॥

इति पार्वत्यष्टकं संपूर्णम् ।

---

# ॥ हरिस्तुतिः ॥

यमकं वा प्रासं वा विदुषां दृष्टिर्न गोचरीकुरुते ।
रसविमुखस्तद्द्रष्टा जनः कलौ मान्यतां मुधाकुशलः ॥

यमकप्रासन्यसनं स्वप्ने चाहं न किंचिदपि गणये ।
यद्यपि हरिहरविनुतौ परिहृतमेतत्सुखं सतां दिशताम् ॥



यदि वाक्सामग्री वस्तथाऽपि दिशतां मतिं हयग्रीवः ।
मोहलतामूलहरी यदीयहेषारवोत्थिता लहरी ॥ १ ॥

सुखमनुसंधातारं नाभौ दधतं सुमेधसं धातारम् ।
खगतुरगं गायामो यस्य पदतलाद्बभूव गङ्गायामः ॥ २ ॥

रचिता हि दशावतारमायाः प्रभुणा येन दशावता रमायाः ।
तममुं कलयामहे शरण्यं निजयावत्कलया महेशरण्यम् ॥ ३ ॥

पदपङ्करुहो मरन्दधारा भुवनं यस्य समस्तमुद्दधार ।
न किमृच्छति तत्कटाक्षमाला कलनीया स्मरणार्थमक्षमाला ॥ ४ ॥

अपि सन्ति विरिञ्चनादिदेवा महिमैषां न हि किंचनादिदेव ।
अयमेव हि भक्तकार्यरक्षी भुवनं येन समन्वकार्यरक्षि ॥ ५ ॥

मूर्तिर्नीपश्यामा यस्य रमा हृदि निवासमाप श्यामा ।
देवं तमपश्यामास्माकमतः श्रमकरी बहुतपस्या मा ॥ ६ ॥

त्यक्त्वा दुष्कृतमायां हरिपदभक्तिं यदा नियतमायाम् ।
संपदि पुण्यतमायां स्थितोऽस्मि साक्षादकामयत मा याम् ॥ ७ ॥

यः सर्वदाऽप्यवनतः परस्तवनतोषसंविभावनतः ।
तस्य ज्ञानमुदयते हरिश्च दयते रमाऽपि मोदयते ॥ ८ ॥

शेषाद्रिं प्रविशेयं देवं द्रक्ष्यामि पीतकौशेयम् ।
मम सुचिरादाशेयं तत्र च कवितां कदा प्रतिदिशेयम् ॥ ९ ॥

यस्तु हरिं पूजयति स्वमहिम्ना तं हरिर्नियोजयति ।
इह च सुखं भोजयति स्वर्गे यद्वत्सुरर्षभो जयति ॥ १० ॥

इति श्रीनिवासविरचिता हरिस्तुतिः संपूर्णा ॥

---

# ॥ हरस्तुतिः ॥

प्राग्दयतां गणनाथो विद्यां वितरितुमुदारकालीनाम् ।
आद्रियतां गणनाऽथो बहुधा बृन्दारकालीनाम् ॥ १ ॥

हिमकरकलिकोत्तंसः शमयति तापं हृदि प्रवृत्तं सः ।
शुचमनिराकुर्वाणैर्मितनिर्वाणैः किमन्यगीर्वाणैः ॥ २ ॥

श्रुतिशास्त्रगीयमानं निष्परिमाणं तथा निरुपमानम् ।
शंभो तव महिमानं कस्तुष्टूषुर्लभेत सीमानम् ॥ ३ ॥

सत्यां तव हि कृपायां तव पदभक्तिं गिरीश समुपायाम् ।
स्थितिमथ सौख्योपायां कलयेयं सद्गतिं च निरपायाम् ॥ ४ ॥

विमलपयोदाभसितं स्फुरति यदङ्गेषु सर्वदा भसितम् ।
कण्ठशिरःश्रुतिभुजगाः स्फुरन्ति फणमणिमरीचिभिर्भुजगाः ॥ ५ ॥

यद्यपि चर्म वसानो दृष्टोऽसि त्वं शुभा हि दिवसा नः ।
अवतु दया तव सा नः फलति सुखाब्धिर्यया निरवसानः ॥ ६ ॥

श्रुतिशास्त्रदुर्निरूपो वपुरर्धाकलितवरतनूरूपः ।
अपि चक्षुषा विरूपो वितरसि भजतामभीष्टमनुरूपः ॥ ७ ॥

गङ्गा बहुकल्लोला जटासु चलितुं न सा शकल्लोला ।
भक्तजनैः स्नपितो यं बहु मनुषे कलुषमल्पमपि तोयम् ॥ ८ ॥

शैलदुहित्रा तारं समुपदिशसि यो भवाम्बुधित्रातारम् ।
गतकिल्बिषभारोऽहं हृदये त्वां भावयामि वृषभारोहम् ॥ ९ ॥

समधिष्ठितकैलासो दीनोद्धारैकनिश्चितविलासः ।
उमया सदा विहरसे ममापि चिन्तां त्वमेव परिहरसे ॥ १० ॥

इति श्रीनिवासविरचिता हरस्तुतिः संपूर्णा ॥





श्रीरङ्गस्थ श्रीशंकरालये श्रीशंकरजयन्तीमहोत्सवकाले

श्रीमदाचार्यपादानां मूर्तिः ।

दानेन क्रयतो जयेन च निजायत्तां स्वभुक्तां धरा-
मन्याय्येन पथा हठात्परवशां कुर्वंस्त्वदुःशासनैः ।
स्वत्वोत्पत्तिकरैश्च कर्षकमतप्रामाण्यकैर्दुर्धिया
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥ ३ ॥

स्त्रीस्वातन्त्र्यविधानतः कुलसतीधर्मौघविध्वंसकं
बाह्यास्पर्शहृतेः सुरद्विजविधिव्रातैकनिर्मूलकम् ।
स्वाभिप्रेतनयक्रमाननुसृतार्याचारविभ्रंशकं
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥ ४ ॥

विप्राद्यन्त्यजनान्तभूतसमता स्वच्छन्दचारो नृणां
धर्माधर्मभिदा न न स्वपरकीयत्वप्रभेदोऽपि वा ।
भिन्नं दैवमिहात्मनो न भवतीत्यद्वैतसिद्धिप्रदं
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥ ५ ॥

विद्याहारविहारपानशयनस्थानासनालंक्रियो-
द्वाहाराधनवेषभाषणमुखे पाश्चात्यतादात्म्यभाक् ।
तत्सालोक्यमुखात्ममुक्तिफलकं स्त्रीपुंसयोः सर्वथा
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥ ६ ॥

आर्यस्त्रीगृहवासहानपरितःसंचारविद्यान्तरा-
भ्यासोद्योगयथेष्टवेषचरणस्वातन्त्र्यसंधानतः ।
पुंभिर्दायविधेः समं कुलसतीसद्धर्मनिर्मूलकं
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥ ७ ॥

न्यायो यत्र च सङ्घमात्रविहितः सङ्घोऽपि संख्याधिकः
संख्या सा जनतागता बहुजनास्त कार्मिकाः कर्षकाः ।

निर्णीता समभोग्यता स्थिरचरद्रव्येषु शास्त्रात्ययो
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥ ८ ॥

वेदाः शास्त्रचयाः पुराणनिवहा नो शासका नः परं
मिथ्याभूतचरित्रवर्णनपरा मन्दात्मसंमोहकाः ।
प्राचीनै रचिता यशोर्थिभिरविश्वस्या इति ख्यापकं
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥ ९ ॥

अद्वैतं मतमार्यमौपनिषदं वर्णाश्रमाः कल्पिता-
स्तत्कर्माणि च पूर्वकाण्डविहितान्यज्ञप्रताराय तु ।
हिंसाद्युत्कटदोषदुःखबहुलानीति स्वधर्मापहं
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥१०॥

न स्थाप्यो नृपतिर्न शासनमिहादर्तव्यमन्यप्रभो
राजानः सकलाः प्रजाः स्वयमिह स्वान्पालयेयुः सदा ।
संघीभूय नियोजनादिविधिभिः स्वैरं त्वितीदृग्विधं
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥११॥

जातिश्च म्रियते मतं च सहजो मानः परिभ्रश्यति
स्वीयं स्थावरजङ्गमात्मकधनं सर्वं परान्गच्छति ।
अत्यागे त्वसवो हठात्तु विलयं यत्रोपयायुर्ध्रुवं
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥१२॥

धर्मार्थागमगार्यसूत्रविहितन्यायागमोत्सादनात्
संख्याधिक्यगमूढसंमतिकृतन्यायागमोत्पादनात् ।
धर्मस्वत्वविनाशनस्थिरचरद्रव्यात्ययोत्पादकं
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥१३॥

रष्यादीतरदेशसर्वसमतासिद्धान्तमार्गानुग-
स्वैरोच्छृङ्खलदुष्प्रभुत्वविदधद्दुष्टाध्वसंस्थापकम् ।
श्रीमद्भारतदेवधर्मिधनिकव्रातैकनिर्मूलकं
हा लोको लषति स्वराज्यमहितं त्यक्त्वा हितं धार्मिकम् ॥१४॥

आत्मानः संस्क्रियन्तामुभयसुखकरेणार्षमार्गेण दीर्घा-
युर्दायारोग्यसंपन्निजमहिमसुसन्तानसौभाग्यकामाः ।
न स्वैरेणात्मनाशप्रदबहुलविधाधर्मबद्धेन बाह्या-
चारव्यामोहजेन स्वमतविधिविरुद्धेन मार्गेण लोकाः ॥ १५ ॥

मान्याः पुल्य उमामहेश्वरसुधीस्तत्त्वं प्रवक्तीह भो
स्त्रीस्वातन्त्र्यविधानमागमनृपाज्ञोल्लङ्घने स्वैरिता ।
सर्वेषां प्रतिधर्मशासनसभं सभ्यान्नियोक्तुं प्रति-
व्यक्ति स्वैरमधिक्रियेति नियताः पश्चार्यताश्रेशकाः ॥ १६ ॥

---

## धार्मिकस्वराज्यप्रशंसा ॥

आत्मीयाखिलधर्मवर्धकमशेषैश्वर्यसंधायकं
स्वाम्नायागमधर्मबद्धमखिलाभीष्टार्थसंसाधकम् ।
लोकद्वन्द्वसुखप्रदं निजपुमर्थाधानतो निर्विप-
न्निर्दोषं भजत स्वराज्यमिह भोः सद्यत्नतो धार्मिकम् ॥ १ ॥

आम्नायैर्विहितं महर्षिनिवहैः सम्यक्तथाऽनूदितं
स्वीयार्थागमसूत्रबद्धमितिहासाद्यैः सुविस्तारितम् ।
अद्यावध्यखिलार्यमस्तकधृतं सृष्ट्यादितो भारते
लष्यन्त्वार्यजनाः स्वराज्यमनिशं सत्सौख्यदं धार्मिकम् ॥ २ ॥

जातिर्न म्रियते न नश्यति मतं मानो न वा भज्यते
द्रव्यं न स्वकमन्यगं न भवति प्राणात्ययो रक्ष्यते ।
देवागारमुखं पुमर्थनिवहः संसाध्यते रक्ष्यते
साधुत्वं* लषत स्वराज्यमनिशं चेदृग्विधं धार्मिकम् ॥ ३ ॥

मान्याः पण्डितपुण्डरीकगुरवो धर्मैकधुर्या नृपाः
सभ्या धार्मिकपुंगवाः सुधनिनः शृण्वन्त्विदं सादरम् ।
झञ्झावातनिहन्यमानतरिवद्धर्मद्वीरमाः
क्षुभ्यन्तीह कलेर्भिया समवत क्षिप्रं समुत्तिष्ठत ॥ ४ ॥

आचाराः स्वमतानुगा निजमताचार्यैः सुशिक्ष्या निज-
स्वत्वानि स्वकधर्मशास्त्रविधिगान्यर्थागमात्तानि च ।
दण्डाश्चैव सुसाङ्घिकाशयगता लोकक्रिया यत्र त-
ल्लष्यन्त्वार्यजनाः स्वराज्यमखिलाभीष्टार्थदं धार्मिकम् ॥ ५ ॥

श्रीराजप्रतिनिध्यधिष्ठितसभा न्यायार्थनिर्णायिका
तिस्रः शासनसंसदोऽत्र गदिता आद्या तु सर्वावनी ।
दण्डस्वत्वसुरक्षिणी निगदिता मध्याऽपरा लौकिकी
लष्यन्त्वार्यजनाः स्वराज्यमखिलाभीष्टार्थदं धार्मिकम् ॥ ६ ॥

आद्यैकाऽखिलभारतस्य गदिता सा न्यायनिर्णायिका
त्वेकैका तु महामतस्य कथिता अर्थादिनिर्णायिका ।
एकैकाः प्रतिराष्ट्रमार्थिकसभा न न्यायनिर्णायिकाः
यत्रैतल्लषत स्वराज्यमखिलाभीष्टार्थदं धार्मिकम् ॥ ७ ॥

जातिं वृत्तिमुपेत्य च प्रतिजनावासं पृथङ्मानुषाः
सङ्घाः स्युस्तदधीश्वरा इह पुना राष्ट्रीयसभ्यान्वयम् ।

*साध्वीभावः ।

तांस्ते ते मनुजाः स्वयं त्विह नियुञ्जीरञ्जनावासगा
यत्रेद्दग्लषत स्वराज्यमनिशं धर्म्यं स्वरक्षाकरम् ॥ ८ ॥

यद्देशीयमहासभानिगदितं श्रीमत्कराचीपुरे
मुम्बय्यां तु पुनः स्वराज्यमखिलैः सभ्यैर्निरुक्तं तदा ।
तत्तत्त्वं प्रविचार्य विप्लवकरं निश्चित्य देशोचितं
निर्बाधं निजधर्म्यराज्यविषयप्रस्तावमादित्सत ॥ ९ ॥

आर्षन्यायपथावनेन जनताभिप्रायमात्रानुग-
स्वैरोच्छृङ्खलदुष्प्रभुत्वविदधन्नव्याध्वनिर्मूलकम् ।
स्वस्वस्थावरजङ्गमात्मकधनस्वत्वादिसंरक्षकम्
धर्मोद्धारकमाश्रयन्तु सुजना राज्यं स्वकं धार्मिकम् ॥ १० ॥

---

इति विद्वत्कविरत्नं यो वैयाकरणधर्मवाङ्मुखिषु ।
केसरिपदं च धत्ते धर्मस्थापकपदं च बुधविदितः ॥ १ ॥

श्रीपुल्यकुल्यजान्ध्रः प्राग्गोदामण्डलस्थमुनिखण्डे ।
कृतवसातिर्विशदयति श्रीमान्स उमामहेश्वरसुधीन्द्रः ॥ २ ॥





# ॥ अध्यक्षभाषणम् ॥

श्रीविजयवाडानगरे श्रीतिरुमलै श्रीनिवासत्रिलिङ्गमहाविद्यापीठस्थापकानां श्री अमृतानन्दनाथस्वामिनां जयन्तीमहोत्सवसभायां आध्यक्षिकपदवीमलंकृतवता श्री 'गुरुभक्तशिखामणि' 'शास्त्रप्रसारभूषण' इत्यादि बिरुदभाजा श्रीबालसुब्रह्मण्यार्येण कृतम् ॥



विदितं हि नामेदं विद्वद्वराणां यदिह वैरिञ्चे प्रपञ्चे भूलोक एव सर्वतः प्रशस्यतमः; तत्रापि भारतभूमिरेव सर्वतो वरीयसी च वरीवर्तीति। तदेवाऽऽह कविकुलतिलकः श्रीहर्षः—

'वर्षेषु यद्भारतमार्यधुर्या वदन्ति गार्हस्थ्यमिवाश्रमेषु।
तत्रास्मि पत्युर्वरिवस्ययाऽहं शर्मोर्मिकिर्मीरितधर्मलिप्सुः॥' इति।

दमयन्तीं वरयितुकामेन हि पुरंदरेण तस्याः समावर्जनाय प्रेषितया स्वदूत्या इन्द्रलोकगतवैभवातिशयवर्णनपुरःसरं तल्लोकस्य प्राशस्त्ये समुद्घोषिते सति तन्निराकृत्य भोगभूम्यात्मकस्वर्गलोकापेक्षया कर्मभूमिभूतधरित्र्या एव सर्वतः समर्हणीयत्वम्, तत्रापि भारतवर्षस्यैव सर्ववर्षापेक्षया प्रशस्यतमत्वं चेति सप्रपञ्चं प्रपञ्चयन्त्या खलु दमयन्त्या स्पष्टीकृत एवायमर्थः सयुक्तिकम्। तत्र च भारतवर्षस्यैव महत्त्वे तत्रकृतपतिसेवाधर्मस्यैव सुतरामाशंसनीयत्वे च समुचितोऽयं हेतुरुपनिबद्धोऽन्तिमे चरणे 'शर्मोर्मिकिर्मीरितधर्मलिप्सुः' इति॥

तथाहि पारलौकिकसुखं हि भूलोककृतपुण्यपुञ्जपरिपाकोपनतमेवेति पुण्यक्षये तादृशसौवर्गसुखविशेषाणामपि नियतमनिवार्य एव नाशः स्यात्, 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्यादि भगवद्गीताप्रामाण्यात्। पुण्यक्षये सति पुनः पुण्यसंचयद्वारा स्वर्गसुखलाभप्रत्याशा तु

सुतरामसंभविनी, पुण्यसंपादनेच्छायां पुनरपि भूलोकमवतीर्यैव तस्य साधनीयत्वात्। अत एव भूलोकस्य कर्मभूमित्वव्यपदेशः, स्वर्गादिस्थानविशेषाणां च फलभूमित्वप्रवादः । यद्यपि कर्मभूम्यपेक्षया फलभूमेरेव सुखाधिक्यप्रापकत्वम् , तथाऽपि तादृशसुखविशेषाणां क्षयिष्णुताप्रयुक्तदुःखपारवश्यस्य अवश्यंभावितया न तावदेकान्ततः सुखरूपता, प्रत्युत पुनरपि सुखलिप्सायां तत्साधककर्मविशेषस्य तत्रैवानुष्ठातुमशक्यतया केवलभोगभूम्यात्मकानां स्वर्गादीनामन्नविक्रयस्थानसमानतैवान्ततः समापतति । भूलोके तु पुनः प्राक्तनपुण्योपगमितसुखानुभवपूर्वकं आगामिसुखसाधनीभूतकर्मणामप्यनुष्ठातुं शक्यतया सुखस्य तत्साधनीभूतकर्माचरणस्य च मिश्रणमत्रैव सुसंपादं नान्यत्र । तदेवाह श्रीहर्षः— 'शर्मोर्मिकिर्मीरितधर्मलिप्सुः' इति वाक्येन । शर्मणामूर्मिः सुखपरंपरा तया किर्मीरितस्य सहकृतस्य धर्मस्य विषये लिप्सुः अभिलाषवत्यस्मीति दमयन्तीवाक्यस्यार्थः । तथा च द्वयोरपि मिश्रणस्य भारतभूमिभाजामेव सुलभतया भारतभूमेरस्या महिमा कथमिव वर्णितः कविवरेणेति तद्वाक्यगतनिगूढार्थनिर्मथनचतुरतराः सूरिवरा एव सुनिभृतमालोचयन्तु ॥

तदेवमीदृश्यां पुण्यतमायां भारतभूमावेव लब्धजनुषामस्माकमद्यतनदेशकालानुसारेण किं कर्तव्यम्? भारतीयानां विदेशीयपुरुषापेक्षया किं वैशिष्ट्यम्? कीदृशं च तारतम्यमुभयेषाम्? कतमश्चेदानीं धर्ममर्यादारक्षणोपायः? इत्येव संप्रति विवेचनीयत्वेनावसरप्राप्तम् । तत्र प्रवृत्तिनिवृत्त्यादिविषये सर्वप्रमाणमूर्धन्योऽपौरुषेयो वेदः तादृशवेदप्रतिपाद्य ईश्वरश्च यथा भारतीयैरङ्गीक्रियते, न तथा पाश्चात्यविपश्चितः कचिदप्युररीकुर्वन्ति । ते खलु 'बैबिल्' 'कुरान्' आदि पुरुषप्रणीतप्रबन्धानेव प्रायशः प्रमाणत्वेनाध्यवस्यन्ति । अत एव पुरुषमतिवैश्वरूप्यात्तन्मतीयानामनवस्थैव सर्वतो दरीदृश्यते । कथं हि नाम पुरुषाभ्यूहमात्रत्वेन शङ्कितदोषाणां श्रेयःसाधनताप्रतिपादकप्रबन्धविशेषाणां व्यवस्थितरीत्या प्रामाण्यवार्ता सुवचा स्यात्? 'तर्काप्रतिष्ठानात्' इति बादरायणीयं सूत्रमप्यमुमेवार्थमुपोद्बलयति । भारतीयैः प्रमाणत्वेनाङ्गीकृतो वेदस्तु न तथाऽप्रामाण्यशङ्काकलङ्कितो भवति, तस्यापौरुषेयत्वेन निरस्तसमस्तपुंदोषतया तत्प्रामाण्यस्याव्याहतत्वात् । यद्यपि यन्त्रतन्त्रादिनिर्माणे वैज्ञानिकप्रपञ्चे च पाश्चात्या भारतीयानप्यतिशेरते, तथाऽपि तत्सर्वमैहिकभोगौपयिकमात्रमिति न तत्पारत्रिकसुखसंपादने पर्याप्तं साधनं स्यात् । वस्तुतस्त्वैहिकसुखमपि ततो नैकान्ततः समुदेति । यन्त्रादिनिर्माणपाटवातिशयस्यापि पारस्परिकसमरकोलाहल एव परिणममानतया भूयसा दृष्टचरत्वात् । यतो ह्यद्यत्वे वैज्ञानिकमूर्धन्यतया प्रसिद्धानामप्याङ्गलानां शर्मण्यानां चानिवार्या समजनि समराभिमुखी चित्तवृत्तिः । भारतीयानां चित्तवृत्तिस्तु केवलं पारलौकिकसुखमभिलक्ष्यैव प्रवर्तते । अत एवोक्तं श्रीमद्भागवते—

'ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ।
इह क्लेशाय महते प्रेत्यानन्तसुखाय च ॥' इति ।

न ह्यैहिकभोगैकप्रवणानां मांसदृशां पाश्चात्यानामिव शास्त्रैकचक्षुष्काणां भारतीयानां चित्तवृत्तिः कुहचिदैहिकसुखाभिमुखी स्यात् । अहो पश्यत कियदन्तरं नो भारतीयानां पाश्चात्यानां च । वेदैकप्रमाणानामेषामध्यात्मविषयावगाहिनी चित्तवृत्तिः क; क च तेषां मांसदृशां प्रतिभामात्रप्रमाणानां बाह्यविषयैकप्रवणा कलहाभिमुखी च चेतोवृत्तिः? कैतेषां नित्यनिरन्तरमोक्षसुखैकसमभिलाषिणां प्रशान्तचित्तता; क च तेषामैहिकवैषयिकसुखैकपरिनिष्ठितानामशान्तचपलचित्तता? कैतेषां दानधर्मादिपराणां पारलौकिकसुखस्पृहयालुता; क च तेषां तिर्यक्सधर्मणामधर्मैकपरवशता? क नु खलु भारतीयानां मैत्रीकरुणामुदितोपेक्षादिसद्वासनासमासादनलालसता; क च तेषामीर्ष्याद्वेषव्यतिषङ्गविक्षिप्तचेतसां दुर्वासनापरतन्त्रता? कैतेषां धर्मसंचयलोलुपता; क च तेषामर्थसंचयलालसता? क चैषां श्रौतमार्गेष्वकुतोभयसंचाराणां विश्रान्तचित्तता; क च तेषामश्रान्तकलहयोगिनामविश्रान्तचित्तता? सर्वथा सर्वदेशीयसंस्कृत्यपेक्षया भारतीयसंस्कृतेरौत्कृष्ट्यमवचनसिद्धमेवेति नात्र स्तोकोऽपि संशयः ॥

तदेवमेतादृशीं भारतभुवमासादितवतामस्माकं विद्यमानेऽपि सर्वातिशायिनि सौभाग्ये, पाश्चात्यशिक्षाप्रमुषितशेमुषीकाणां नवमतवादिनां केषांचित्पञ्चमदेवालयप्रवेशनादिदुर्व्यवसायशतेन धार्मिककृत्येष्वास्माकीनेषु पदेपदे योऽयमाघातः समुदेति, स तु धर्मैकप्राणानामस्मादृशां संघटनेनैव निवर्तयितुं शक्यते, नान्यथा प्रकारशतेनापि । न चायं तेषां धार्मिकहस्तक्षेपो ध्यानपूजनादिमात्रेण निवर्तेत, न च भगवत्प्रार्थनामात्रमपि तत्र प्रभवेत्, भगवतोऽपि पुरुषप्रयत्नानुसारितया पुरुषप्रयत्नाभावे तस्याप्यकिंचित्करत्वात् । अत एवोक्तं वार्तिककारैः—

'अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम् ।
कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ॥' इति ।

अतो भगवानेवावतरिष्यति, किं नः प्रयासेन? इति नोदासितव्यम् । पारतन्त्र्यशृङ्खलानिगडितानामस्माकं सांप्रतमुपनता सेयं विपत्तिपरंपरा स्वकीयसर्वशक्तिव्ययीकरणेनापि सद्य एव यदि न परिह्रियते, तर्हि सर्वैरस्माभिरस्मत्प्राक्तनानां विषये कृतघ्नतैव नूनमाविष्कृता स्यात् ॥

आस्माकीनाः खलु प्राक्तनाः पुरुषाः कति कति धार्मिकपद्धतीरस्मदभ्युदयार्थमाविरकार्षुः; कति वा ग्रन्थविशेषानलेखिषुः; कति कति आध्यात्मिकपद्धतीः प्रादीदृशन्; कतिविधांश्च सर्व-

वेदसारमयानुपदेशानन्वगृह्णन्; कतिधा च धर्ममर्यादामपीपलन्; कतिधा च सर्वश्रुतिसामरस्यं समुपापीपदन्; तदेवमियतीमुपकारपरंपरामादृतवतां हि तेषां उपकारभरान् यदि वयं कांचिदपि न स्मरिष्यामः, कथं तर्हि नः कृतज्ञता नाम स्यात्? कथं वा किंचिदपि पुरुषकारमकुर्वाणाः सुषुप्तवदवतिष्ठमाना वयमीश्वरानुग्रहपात्रतामश्नुवीमहि? कथंतरां च तदभावे स्वसमीहितानि साधयेमहि? कथंतमां च कार्यसिद्धिमुपलभेमहि?

अतो ब्रवीमि, अयि भोः सभासदः! नायमस्माकं स्वापकालः, न चायं विश्रान्तिसमयः। यदि हि भारतीयं रक्तमस्मद्धमनीषु संचरति, यदि च परमार्थतो वयं भारतभूमेरेव पुत्रभूताः, तर्हि तामेनां म्लेच्छहस्तनिगृहीतां सद्य एव विमोचयितुं संनह्यध्वम्, झटित्येव प्रबुद्ध्यध्वम्, सनातन-धर्मसमुद्धरणाय यथाशक्ति प्रयतध्वम्, सात्त्विकशक्तिं संपादयध्वम्, दैष्टिकतां दूरतो निराकुरुध्वम्, भारतीयतां सांप्रतमाविष्कुरुध्वम्, अनुगृह्णीध्वं च मां वत्सम्, क्षमध्वं च मामकानपराधान्। इममेवार्थमुपश्लोकयति भगवती श्रुतिरपि--

**उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत** ॥ इति ॥

**शुभं भूयात्** ॥





# ॥ गद्यरामचरितम् ॥

'साहित्यभूषण' 'व्याकरणस्थापक' विरुदालंकृतैः रामेश्वरसंस्कृतपाठशाला-प्रधानाध्यापकैः ब्रह्मश्री कृष्णमूर्तिशास्त्रिभिर्विरचितम् ॥

## प्रथमः स्तबकः ॥

श्रीगद्यरामचरितं भक्त्या निर्मित्सतो मम ।
विघ्नं विहन्तु विघ्नेशो वाणी दत्तां शुभां गिरम् ॥ १ ॥

अनुगृह्णातु वाल्मीकिर्भगवानृषिसत्तमः ।
यः श्रीरामकथाम्भोधिं कुम्भोद्भववदाचमीत् ॥ २ ॥

भारद्वाजकुलाब्धिशीतकिरणः श्रीकृष्णमूर्तिः कविः
श्रीमद्वेङ्कटसुब्बरामतनुभूर्विद्वान् श्रुतीनां शिरः ।
मान्यश्रीयुतदण्डपाणिमखिराट्छात्रश्च शिष्यान्वितः
भक्त्युन्मेषवशात्स्वयं वितनुते श्रीगद्यरामायणम् ॥ ३ ॥

श्रीकरुङ्गुळकृष्णाख्यपण्डिताखण्डलादहम् ।
अध्यगीषि सह न्यायैस्त्रिपुरे श्रुतिमस्तकम् ॥ ४ ॥

व्याकरणस्थापक इत्यभिधां साहित्यभूषणाख्यां च ।
अन्वर्थयामि मान्यैर्दत्तामध्यापनाच्च कृतिरचनात् ॥ ५ ॥

भक्तो वेङ्कटनाथस्य सोऽहं दासः पतञ्जलेः ।
प्रपद्ये शरणं श्रीमच्चन्द्रशेखरभारतीम् ॥ ६ ॥



## ॥ साकेतराजवर्णनम् ॥

स्ति समस्तवस्तुसमुल्लसितमस्तोकविभवसमुन्मेषदिविपत्पुरमप्यवधीरयदिव निरुपमनिःसीमात्मसंपद्विलासैः, शतमखमुखानप्यसूययद्भिरिव बर्हिर्मुखानस्तिमद्भिरुपशोभितम , रथगजतुरगसमारोहधुरंधरैः सततमनम्रीकृतकंधरैः प्रतिवरूथिनीनाथशतसहस्रखर्वेतरगर्वभरनिर्वापणपरायणपराक्रमैकधामभिः, असमचारिमरुक्मवर्मप्रत्नप्रत्युप्तरत्नप्रभाकन्दलकबलितसंग्रामाङ्गणदुर्दिनबहलान्धकारैः, संग्रामशब्दश्रवणमात्रसमुपजातकौतूहलैः, विपक्षकुलहालाहलैः, आदधद्भिः कामपि समस्तसामन्तभूमिकान्तसीमन्तिनीवदनपुण्डरीकेषु मिहिकामयूखप्रक्रियाम्, युगविगमसमयशमनरसनकरालकरवालमात्रसहायेन हेलयैव संपादयद्भिः शात्रवीं राज्यलक्ष्मीं निजस्वामिशयकुशेशयमात्रशरणान , जीवितमप्यविगणय्य स्वामिकार्यप्रसाधकैः, कल्पान्तदुरन्तकृतान्तप्रतिभटैः विकटाट्टहासविद्रावितप्रत्यर्थिकरटिघटैः निरसितस्वपक्षसंकटैः समराङ्गणरङ्गस्थलीनटनलंपटैरप्रतिभटैः, दिव्यास्त्रशस्त्रग्रामकोविदैः प्रतापैरिव मूर्तैरोजोभिरिव पुञ्जीभूतैः प्रकम्पनवदप्रकम्प्यैः अचलवदचलैः धनंजयवत्समितस्वीकारबद्धश्रद्धैः वीरभटपटलैरभिरक्षितम्, विशालतररसालमृदुलकिसलयसमास्वादानन्दतुन्दिलपरभृतमिथुनप्रोद्गीयमानपञ्चमस्वरश्रवणमात्रेण शृङ्गारिणामन्तःकरणेषु समुद्दीपयन्तीभिः कामपि व्यथां मान्मथीम्, मन्दमन्दमरविन्देषु सुन्दरस्पन्दनेन हंसमिथुनानां विगलितैः परागैः सुगन्धीनि दधद्वारीणि सहस्रं विहारदीर्घिकानामावहन्तीभिः, ऋतुनियममन्तराऽपि पुष्पिताभिर्लताभिः फलितैः पादपैश्च सुखसंदर्शनाभिः, वासरावसानवेलायामुपचीयमानसुषमाविशेषाभिः, अश्रान्तसुरतान्तनितान्ततान्तकान्तान्तरङ्गमालिन्यहारिणि नीलनीरजराजिविकासकारिणि भगवति सुधांशावुदयमाने चन्द्रिकाधवलैर्लवलीमण्टपैः नददलिपुञ्जमञ्जुलसंगीतभङ्गीमुखरितहरिदन्तरालैः रणन्मणिमेखलाभिर्महिलाभिः रिरंसूनां यूनां निकुरुम्बैश्च सचेतसां चेतांस्याकर्षन्तीभिः, सहजरामणीयकचैत्ररथलक्ष्मीदूरीकरणपटीयसीभिरुद्यानवाटीभिरभिलसितम , अनल्परत्नतल्पैः वैडूर्यमणिमण्टपैः इन्दुकान्तोपलकुट्टिमैः, मरकतमणिस्तम्भैः स्निग्धमसृणमाणिक्यवेदिभिः गारुत्मतरत्नसोपानसंतानैः विद्रुमध्वजस्तम्भैः प्रवालमृदुलकम्बलास्तरणमञ्जुलमरालतूलिकोपकल्पितमञ्चप्रपञ्चैः मरकतमयमधुरतरमधुभाजनैः चोष्यलेह्यभोज्यपेयादिभक्ष्यसंपूर्णसुवर्णपात्रैः शातकुम्भस्तम्भाग्रमणिप्रदीपैः मदोद्धताभ्रमातङ्गाभिनवदन्तकृत्रिमपुत्रिकाकरतलकलितवासवनीलदृषन्मयकुलायनिलयशुकशारिकालापमुखरितप्राङ्गणगणैः कालागरुधूपधूपितैः मृगमदवासनावासितैः पृथुतरकार्तस्वरपात्रकृत्रिमालवालपरिवर्धितकुसुमितमल्लीमतल्लिकावासन्तिकास्थलकमलिन्यादिविविधवल्लीवितानसंतानैः संक्रन्दननन्दनवनविहरणपरायणगीर्वाणवारव-

रवर्गिनीनां जयिनीभिः प्रतिक्षणविजृम्भमाणवक्षोजकुम्भविदारिताभिनवचीनपट्टकञ्चुकोल्लासिनीभिः कृतसुकृतसंभुज्यमाननवयौवनोन्मेषशालिनीभिः शम्बरवैरितन्त्ररहस्यमुपदिदिक्षतेवाक्षिकोणेन कामिनाममन्दानन्दसंदायिनीभिः वीणावेणुमृदङ्गादिराजवाद्यसंवादिनीभिः सरसकाव्यालापविनोदिनीभिः वासनावदासवताम्बूलरससेविनीभिः श्रवणसुभगरागग्रामालापिनीभिः तरुणतररमणकृतवक्षोजशिखरिसंमर्दसंमोदिनीभिः संततसंतन्यमानदृढतरपरीरम्भसंरम्भानुमोदिनीभिः वात्स्यायनतन्त्रप्रसिद्धसमुचितबन्धप्रबन्धसमुल्लेखिनीभिः स्वैरं कामरसास्वादिनीभिः अस्तोकामोघविब्बोकानुविधायिनीभिर्हसन्तीभिर्नृत्यन्तीभिर्गायन्तीभिर्दीव्यन्तीभिरुपहसन्तीभिर्विलज्जन्तीभिर्विलासिनीभिरानन्दवैचित्र्यमुत्पादयद्भिः, इन्द्रनीलशिखरिशिखरानुकारिभिर्हरिहयमणिमयसौधसहस्रैरलंकृतमभ्रंकषैः, तरुणतरणिकिरणसंपर्केण समुद्वमद्भिः स्फुलिङ्गाग्निशिखिना परीतमिवात्मानं संदर्शयद्भिर्हरिदश्मकान्तरत्नप्राकारैः, कुमुद्वतीरमणकिरणप्रथमप्रसरणाधिकरणैः निरर्गलनिर्गलदम्भःप्रसरणैः प्रालेयशिखरिकूटप्रतिभटैः चन्द्रकान्तोपलमयैर्गोपुरैः, अञ्जनमहीधरसहोदराद्विरदबृन्दारकगण्डस्थलविनिर्गलद्दानसलिलार्णवेषु निपत्य सान्द्रीभवद्भिः खरतरतुरगखुरसमुत्थितैः सुवर्णरजोनिकरैः पङ्किलतामापाद्यमानाभिर्हैमीभी रथ्याभिः, विमलस्फाटिकसालभञ्जिकापुञ्जपरिरञ्जितवैद्रुमसोपानपरंपरामनोहरैः सरोवरैः दुर्वर्णविहारभूमिधरैः, नवरत्नसुन्दरैर्देवतामन्दिरैः वाजिगजगवोष्ट्रशालाभिः विशालाभिर्विद्याशालाभिः विपुलाभिः पण्यवीथिकाभिः नटविटचेटगायकपीठमर्दविदूषकसंकुलाभिर्नाट्यशालाभिः अतिगम्भीरैरायुधागारैर्गरिष्ठगोष्ठीबन्धागारैर्यन्त्रागारैः प्रबन्धागारैश्च सर्वा अपि राजधानीरतिवर्तमानम्, श्रीरङ्गशायिनेव कमलाशयोल्लसितपादमूलेन धूर्जटिनेव परिगृहीतचन्द्रिरेण, नर्तकेनेव निजबहुलास्यदरीदृश्यमानजीवलोकेन, समासविशेषेणेव विभाषावरुद्धेन पाणिनिसूत्रेणेव निपातितबहुलशब्देन, प्राकृतव्याकरणेनेव व्यक्तधातुवर्णव्यत्यासेन, त्रिविष्टपेनेव हरिहयसमाक्रान्तेन, वैशेषिकदर्शनेनेव सद्द्रव्यविशेषसमवायेन, कापिलतन्त्रेणेव प्रकृतिरमणीयेन, जीमूतवाहनेनेव नागानन्दाय परिकल्पितनिजकलेबरसमर्पणेन, आखण्डलेनेव समाहृतचित्रशिखण्डिजमधुरवचनेन, दुष्यन्तेनेव समनूदितनिजासक्तशकुन्तलालभ्यमानवचनेन, यूपस्तम्भेनेवाजगरसंबद्धेन, महीध्राणां शतेन परिवृताभिः, पटीरतरुकोटरोदरक्रूरफणाधरजिघृक्षया व्योमन्युड्डयमानानां वैनतेयानां कलरवेण मुखरीकृताशावकाशाभिः, क्षितिधरभीकरगह्वरोदरमन्दिराणां कण्ठीरवाणां श्रवणभयंकरैर्गर्जितैरिव तर्जयन्तीभिः, भैरवरवैः कण्ठीरवैः, बलावलेपिभिर्द्वीपिभिः मदोत्कटैः करटिभिः, उदग्रक्षुद्भिस्तरक्षुभिः, अप्रतिममल्लैर्मल्लूकैः, नामितनमेरुवानीरैर्वानरैः, क्षुभ्यमाणकासारैः कासरैः, अतिगभीरसंनदैर्बलीवर्दैः, करालदंष्ट्रैर्दंष्ट्राभिः, राष्ट्रोचितैर्महोष्ट्रैः, दुःसहविषैराशीविषैः, कलितमनोहरणैर्हरिणैः, खरतरखुरैः खरैः, हृदयंगमैस्तुरंगमैः, ग्रहीतुमसुलभैः कलभैः, इतस्ततः संपतद्भिः पतत्रिभिः, सुभृतैः परभृतैः उत्कण्ठितैर्नीलकण्ठैः, क्रीडद्भिश्चक्रोडैः, सदारैर्भूदारैः समाकीर्णाभिः, विस-

लहरिम्मणिश्यामलकोमलमृदुलशाद्वलशबलकूलतालतमालतक्कोलाङ्कोलतिलकामलकबकुलवञ्जुलकुरवक-मरुवकखर्जूरनागपुन्नागवेतसपनसनिम्बकदम्बसालरसालसप्तच्छददेवदारुमन्दारपारिजातादिवन-स्पतिराजराजिविराजिनीः कूलकुलायद्रुमपरिसरपरिलसत्कुसुमपरिमलमिलदलिकुलकोलाहलमुखरायमाणमञ्जुलवल्लीनिकुञ्जेषु स्वैरमभ्यस्यद्भी रोमन्थं हरिणार्भकैः, अभिनवरसालकिसलयास्वादजनितपञ्च-मस्वरालापशीलैः कोकिलैः, नृत्यन्तीभिर्मयूरीभिः विकचकुटजमणीचकसुरभिलैरुटजैर्मुनीनाम् , मलयानिलोद्धूतशतपत्रविगलितपरागजालसुगन्धिभिरच्छस्फटिकसंकाशैः शिशिरसलिलकल्लोलैर्मन्दं मन्दं चरद्भिर्मरुद्भिर्वाचामगोचरं हर्षभरं सहृदयानामुद्भावयन्तीर्बह्वीः स्रोतस्विनीर्बिभ्राणाभिररण्यानीभि-राक्रान्तम् , परीतं परिघाजलैः क्रूरतरनक्रचक्रतिमितिमिङ्गिलराजिलसंकुलैः, परिवृतमत्युच्छ्रायं गमितैः प्राकारैः, मरुगिरिवनदुर्गवर्गैररिवर्गैर्मनसाप्यनभिभवनीयं महनीयं सारव(=सरयूभव)सारवतुङ्गतरत-रङ्गभङ्गसङ्गपवित्रीकृतम्, अखिलभुवनमण्डलैकमण्डनायितम् , अशेषलक्ष्मीमङ्गलनर्तनरङ्गस्थलम् , बाह्यसाधनसामग्रीनैरपेक्ष्येण ब्रह्मणः संकल्पमात्रेणेव विनिर्मितमुत्तरकोसलेषु प्रथितमक्षुद्रभद्रैकनिधानं साकेताभिधानं नगरम् ॥

तत्र पुरंदर इव वृन्दारकाणाम्, वासुकिरिव फणाधराणाम्, हर्यक्ष इव मृगाणाम, तार्क्ष्य इव पक्षिणाम् , मन्दार इव द्रुमाणाम् , मेरुरिव महीध्राणाम , ऐरावत इव सिन्धुराणाम , उच्चैःश्रवा इव तुरङ्गमाणाम् , चिन्तामणिरिव रत्नानाम् , वसन्त इवर्तूनाम्, राजसूय इव यज्ञानाम् , प्रणव इव च्छन्दसाम्, वैकुण्ठ इव लोकानाम्, वाल्मीकिरिव कवीनाम्, परिणूतगुणगणानां नृपाणामग्रगण्यः, कर्ता शतहयमेधानाम , हर्ता शत्रुसंपदाम , हन्ता प्रत्यनीकानाम् , मन्ता शास्त्रार्थो-नाम , जेता विवदमानानाम्, भोक्ता वैषयिकानन्दानाम्, विवेक्ता सारासाराणाम्, अवाप्ता समस्तकामानाम् , प्रबन्धा प्रबन्धानाम् , होताऽग्नीनाम् , यष्टा देवानाम् , शासिता दुर्विनीतानाम् , रक्षिता जीवलोकानाम् , वेद इव समर्थवादो ब्राह्मणभक्तिमांश्च, निष्ठितशब्द इव प्रकृतिसन्निहित-प्रत्ययः, तद्धित इव समर्थप्रकृतिकः, सुपर्ण इव खण्डितानेकभुजङ्गः, वामन इव विक्रमाक्रान्त-भुवनो नियमितबलिपराक्रमश्च, वारण इव दानार्द्रकरः, प्रत्ययविशेष इव परतामापन्नः, सुनीति-भाजोऽप्यनीतिभाजः प्रजाः रञ्जयन् , अत्रासोऽपि सत्रासः स्वप्रभावेण सदा विराजमानः, मोह-विहीनोऽपि मोहाविहीनः, अरोगोऽपि सरोगो विलासिनीभिर्विजिहीर्षुः, आर्यलक्षणोऽप्यनार्य-लक्षणः, दूरीकृतक्षुद्रसंपर्कोऽपि ऊरीकृतक्षुद्रसाहितभोजनः, शिष्टपरिग्रहोऽपि विशिष्टपरिग्रहः, वितरणशूरोऽप्यवितरणशूरः, विदेशाभिमानोऽपि सदेशाभिमानः प्रभातप्रबोधोऽपि विप्रभात-प्रबोधः, पिनाकिनामासादितानन्दोऽप्यपिनाकिनामासादितानन्दः, अमार्गमदहार्यपि सन्मार्ग-मदहारी, विस्मिताभाषणोऽपि सस्मिताभाषणः, अविपर्यस्तगोत्राचारोऽपि विपर्यस्तगोत्राचारः, वासवश्रीसंपन्नोऽपि नवासवश्रीसंपन्नः रत्नवलयानन्दकृदपि कुवलयानन्दकृत् , महामान्यपि

विमानी, एकपरमोऽप्यनेकपरमः, गर्वितान्तःपुरपरिग्रहोऽपि अगर्वितान्तःपुरपरिग्रहः, सकलत्रोऽपि विकलत्रः, सर्वातिशायिस्वशयकुशेशयशायिपरावसायिचन्द्रहासविलाससमसमयस्वीभवत्समस्तसामन्तभूमिकान्तलक्ष्मीविलासः, अविकलबाहाबलसकलमहीपालकुलमौलिकोटीरमाणिक्यमणिकिरणनीराजितचरणकमलः बाधितावोधविबोधान्यथाबोधः, पारदृश्वा विद्यानां सकलकलाकुशलः कल्याणगुणमणिगणार्णवः करुणाशेवधिः, वनीपकजनमनीषितवितरणचिन्तामणिः, विफले च वासवकुलिशकौशले विनिर्जित्य बृन्दारकारीन् पुरंदरपुरपुरन्ध्रिनिकरकरसरोरुहसादरसमर्प्यमाणमन्देतरमकरन्दसुगन्धिमन्दारमालिकोपशोभितोन्नतग्रीवाभोगः, रम्भादिमरम्भोरुवदनाम्भोरुहजेगीयमानविमलापदानः, संक्रन्दनोपकल्पितसिंहासनार्धमलंकुर्वाणः, बिभ्राणश्चतुःसागराम्बराया भुवो मण्डलमिव नाकमण्डलमपि, दशस्वपि दिक्ष्वप्रतिहतरथप्रचारः हरिदङ्गनाङ्गदुकूलायमानयशःप्रचारः मनागप्यनुल्लङ्घितराघवकुलाचारः, दिनमणिकुलमणिप्रदीपः, अनल्पदर्पकन्दर्पावलेपलोपिरूपधेयः परिणतभागधेयः दशरथनामधेयः क्षितिमण्डलाखण्डलः चक्रवर्तिशिखामणिः सुप्रजसः प्रजा रञ्जयन्नासांबभूवान् ॥

आभिवर्धयांबभूव स राष्ट्राङ्गषट्कमजस्रमात्मानमनुज्जिहानैर्धृतिदानज्ञानोत्साहैः विद्यावैनिद्र्यपौरुषैश्च प्रधानपार्थिवगुणैः । अध्ययनयजनदानेभ्यः साधारणेभ्यः, धनुर्वेदाद्यभ्यासनिग्रहानुग्रहेभ्यश्च विशेषधर्मेभ्यः स्वमप्रच्यावयन्प्रत्यरुन्ध प्रयत्नेन स्वस्मिन्जनेषु च संभाव्यमानमप्यधर्मसंबन्धम् । वैरिनिग्रहकरसंग्रहराज्याभिवर्धनादिसंपत्त्यभ्यागमप्रकारानुद्भावयन्, चौरादिभ्यश्च प्रयत्नेनार्जितं परिरक्षन्, दैवतब्राह्मणवनीपकेभ्यः कीर्तये च धर्मकामनया, रथगजतुरगपदातिदुर्गजनेभ्यः परपक्षीयविश्लेषायात्मपक्षीयाविश्लेषाय चार्थकामनया, वापीकूपतटाकाराममण्टपविहारशैलादिभ्यः कामकामनया च विभजन्विन्ययुङ्क्त यथायथम् ॥

नयलिप्सया धनीयया वाऽन्तिकमासेदुषां सुलभदर्शनः स्मितपूर्वमवोचत मधुरं वचनम् । अभ्यमन्यत विशेषतश्च चक्षुषी इव गणितव्याकरणे सर्वविद्योपकरणे । अर्थकामावन्वभूयेतां धर्माविरोधेन । बहुभ्यो बहुधा बहुश्रवणपरायणाय नैवारोचताभ्यवहारोऽपि । विषयगुणदोषज्ञतया निरुन्धानः स्वाभाविकीं मनःप्रवृत्तिं प्रावर्तयच्चेतः सत्स्वेव विषयेषु सूत इव समर्थो वाहम् । प्रतिक्षणविपर्यासलक्षणानां गुणानां च त्रयाणां सर्वप्राणिसाधारण्येन, पुमर्थं शत्रुमुखाद्विपरीतं सुहृन्मुखाच्छ्रावितोऽपि न्यक्कृत्य वक्तृगुणदोषौ विषयगतावेव तौ पर्यालोच्याहेयं स्व्यकार्षीद्धेयं निरस्यन् । बिभयांबभूव चावश्यभेतव्येभ्यः धृतिमानपि पापापवादादिभ्यः । नोदसहत परस्य दोषमवगन्तुमप्यात्मगतं तमनपनुद्य । यावदन्तःशत्रून्कामादीन्व्यरुन्ध तावन्न बाह्यान् । नातिसमधीयत कपटैः प्रत्यवस्थातॄणां यन्निगूढैवात्मकामनां समन्वबुभूषत्समग्रं काम्यम् । व्यद्योतत

समुच्छ्रायपरिपन्थिनो विकत्थनस्य महान्परिपन्थी। अनणुद्रविणवितरणादिना बहुसंमानितैः ज्ञानशीलवयोवृद्धैः, उत्पातैर्दैवीः परगुणेङ्गिताकारचेष्टाभिर्मानुषीश्च विपदः पूर्वमेव विबोध्यमानः शान्तिभिराद्याश्चतुर्भिरुपायैरन्त्याश्च पर्यहार्षीत्। पर्यह्रियत च तेन सुदूरतः नटविटधूर्तनास्तिकानां संसर्गः। निसर्गनैर्मल्यशालीन्यपि सलिलानि सक्षारक्षितिसंसर्गमात्रेणैव हि स्वभावात्प्रच्याव्यन्ते। व्यापप्रे न कदाचिदपि सहसा गुरुषु कार्यारम्भेषु ऊहापोहकुशलोऽप्यनभिमन्त्र्य गरिष्ठैः गोष्ठीषु तदवश्यकर्तव्याकरणमकर्तव्यकरणं मध्ये व्यामुह्य विरमणं समारब्धे कर्मण्यभिमन्त्रणं स्तोकफलार्थमतिमहदारम्भणमेवमादयो दोषाः प्रहास्यतापादकाः नैवाजनिषत। आत्मनः कर्मणः वैरिणः सहकारिणां च संप्रधार्यैव बलाबलं समभिषेणयांबभूवुषा सहस्रकृत्वः समन्वभावि विजयलक्ष्मीस्वयंग्रहाश्लेषः समराङ्गणे। स्वसुखमनभिलष्य निजभुजबलासादितेन संग्रामफलेन समग्रेणाप्यन्ततः प्रजाभिप्रायेणैव (गामिना) बभूवे। धनायापीडितेषु दानम्, शीतकेषु परैर्नियुध्य श्रान्तेषु च साम, बलवत्सहायसंपन्नेषु स्वपक्षेण कथमप्यसंयोज्यमानेषु भेदम्, एभिरजय्येषु च दण्डं प्रायुङ्क्त। आयापेक्षया नाधिकमवकाशं ददौ व्ययस्य। अल्पाये हि व्यये राज्ञां संपन्मूलाया राज्यस्थितेः क्रमशो नाशे वचसामविषया विपत्तयः प्रादुःष्युः। अभिषिषेणयिषंश्च देशकालौ विशेषतः प्रतीक्षांचक्रे। तयोर्विरोधे हि पराक्रमोऽप्यमेयो नियतमश्नुवीत वैफल्यम्। जीयन्ते हि बलिनोऽप्युलूका मतङ्गजाश्च दुर्बलैः काकैर्नक्रैश्चाहनि सलिले च। परीक्ष्यैव प्रमाणैः, कामादिभिः षड्भिः आलस्यविस्मरणप्रमादैश्च दोषैरस्पृष्टान्ह्रीणांश्च निषिद्धाचरणेषु बहुश्रुतान्वर्षीयसः बान्धवानेव मन्त्रिणोऽवृणीत; न त्वतादृशान्पुरस्कृत्य केवलं मैत्रीम्। अकुलस्पर्शिनो ह्यपजिहीर्षन्तः राज्यतन्त्रेषु भृशमुदासीनाः लोकापवादादभीरवः क्रमेण निर्मथ्नीयुरपि राष्ट्रम्। विश्वसिति स्म काममात्मना समाधिकृतान्। अशोधितस्याधिकारादपि जनयेदनर्थबहुलं समाधिकृतेष्वविश्वासः प्रभूणाम्। न्ययुज्यन्त च स्वस्वोचितेषु कर्मस्वधिकार्याः विमर्शनपुरःसरं अनेनायमिदं कुर्यादिति। निर्व्याजप्रेमसंपन्नानजस्रमनुरञ्जयांबभूव त्यागेन मधुरवचनेन च बान्धवजनान्। यदैश्वर्यमसंभुज्यमानं बन्धुभिरुच्छिन्नकूलकासारनीरवत्प्रणश्यति। अकारणेन पूर्वं विश्लिष्य पुनः संश्लिष्यन्तमपरीक्ष्य न स्व्यकरोद्बान्धवमपि। जातुचिन्न प्रसस्मार (प्रस्मरतिर्विस्मरणार्थः) कृत्यमैश्वर्यमदेन वैषयिकानन्दभूम्ना वा। सर्वसाधारणी हि विस्मृतिर्विहन्ति कीर्तिं याञ्चेव प्रज्ञाम्। विस्मरणशीलस्य राज्ञः संपदा किं प्रयोजनं वनगिरिदुर्गवर्गैरिव भीरोः। तुलादण्डवत्प्रतिपन्नः साम्यावस्थाम्, विचार्य न्यायं यथापराधमदण्डयद्दण्ड्यान्। अवध्यस्य वधे हि सह नृपेण राष्ट्रमुच्छिद्येत। वध्यस्यावधे तु मल्लिकाभिवृद्धिः स्नुहिनेव प्रजाक्षेमस्तेन प्रतिरुध्येत। नृशंसादपि सहस्रगुणं निकृष्यते धनाय यानयमुज्जिहानो नरपतिः। नयव्यतिक्रमे राज्ञां गावो न दुहीरन्, जह्युर्द्विजातयः कर्मषट्कम्, हूयेरन्न हवींष्युषर्बुधे। अतर्पिताश्च देवा न वर्षेयुः, अनावृष्ट्या चौरादिना च

राष्ट्रस्य महान्प्रादुःष्यादवसायः । समूलघातं निघ्नन्ति व्यथितसज्जनाश्रुशस्त्राणि दुर्नृपतिम् । मित्राणां वचनं न न्यषेधीत् । वेदानां स्वरसंपत्तिरिव राज्ञां दाक्षिण्यसंपत्तिरावश्यिकी । कालविपर्ययेण स्वविषये सुहृद्भिराचरितमाज्ञानिकमपराधमक्षमत । मित्रैर्दीयमानमुपभुज्यापि विषं पुनस्तत्प्रीतिमेव संपिपादयिषन्तो महान्तो ह्यनर्घशीला महीयन्ते । तत्र तत्र विप्रवणिग्वेषेण, दुष्प्रवेशप्रदेशेषु यतिवेषेण च प्रविश्य, द्वेष्योदासीनमित्रबान्धवानां साध्वसाधुचरितं वचनं च विजानताम्, संदिहानैः परैर्निपीडितानामप्यात्मानं कथमप्यप्रकाशयतां चाराणां मुखेन प्रत्यहमबोधि वार्ताः सर्वाः । चारा अपि यथासामर्थ्यं एकान्त एव सममान्यन्त न प्रकाशम् । चारचक्षुरवगतसमग्रवृत्तान्तः कर्मस्वशिथिलमनाः समुदयुङ्क्त तत्कालकर्तव्येषु । नाजीगणदाफलोत्पादमुद्युञ्जानः प्रत्यूहपरंपरामान्तरालिकीम् । हन्तुमुद्यतो हि माद्यन्द्विपः सोढ्वापि सुतीक्ष्णशराभिघातवेदनामरिष्वपराक्रममाणो न निवर्तते ॥

शक्त्या मत्या धृत्या श्रिया वाऽन्यैः किं फलमुद्योगविरहे ? अपेक्ष्य सर्वसत्त्वान्समधिकशारीरबलसंपन्नोऽपि, समुज्ज्वलन्नपि तीक्ष्णतरदन्ताभ्यामनुद्युञ्जानो मतङ्गजः शार्दूलाद्बिभेति । यावानुद्योगस्तावानुच्छ्रायः । नीरानुसारी हि पङ्कजदलानां द्राघिमा भवति । तिरश्चकार कीर्तिप्रदीपिकानिर्वापकमालस्याख्यमन्धं तमः सुदूरतः । हन्त ! स्वयं मरणशीला अपि अचिरान्मुमूर्षेव इवालस्यं दीर्घसूत्रतां विस्मरणं निद्रां चाद्रियन्ते मर्त्याः । उष्णक एव प्रभवति कुलपौरुषगतमपनेतुं कलङ्कम् । अनलसो हि नरपालस्त्रिविक्रमाक्रान्तमखिलमपि भुवनतलं भर्तुमीष्टेतरामनायासेन ॥

अस्यैवमगणितकल्याणगुणैकनिकेतनस्य साकेतनाथस्य, समुचितसाधनसमयोपायापायनिरसनविशिष्टकर्मस्वरूपाभिज्ञाः कर्माचरणेषु व्यवस्थिताः प्रजारक्षणे जागरूकाः नयदर्शनोक्तविधिनिषेधेषु परिणतप्रज्ञाः अनारतमशिथिलप्रयत्नाः सन्धिविग्रहयोः कुशलाः विविधोपायेषु सुशकानुष्ठानमेकं निर्धार्य कार्यनिर्वर्तनप्रकारमभिजानन्तः, सन्धिविग्रहयोः पात्रविशेषमवधार्य ईदृशेषु सन्धिरीदृशेषु विग्रह इति निष्कृष्य राज्ञे निवेदयन्तः, नैसर्गिकप्रतिभासहकृतसकलदर्शनार्थज्ञानसंपन्नाः लोकयात्राऽविरोधेनैव कर्म शास्त्रीयमपि प्रवर्तयन्तः, वचनमनादृत्य परमार्थविदाम्, मोहाद्विपरीतवादिनमप्यसंत्यज्य स्वामिनं पुमर्थमेव तस्य क्रियासमभिहारेण प्रतिपिपादयिषन्तः, निःसंख्यानां राज्ञो विपदां निदानं स्वप्रमादं कथमपि परिजिहीर्षन्तः, मधुराभिभाषणेन जगदखिलमपि स्वायत्तीकुर्वाणाः, असकृच्छ्रावितानामप्यभिजनयत्पौनःपुन्येन शुश्रूषाम्, आवर्जयच्छत्रूणामपि चेतांसि, शब्ददोषैरस्पृष्टं कदाऽप्यबाधितं सत्प्रतिपक्षादिभिः सूत्रप्रायं फलवदनेकार्थप्रत्यायनसमर्थं श्रवणमनोहरं च वचनं प्रयुञ्जानाः, सन्तमपि परोक्तिषु दोषमविगणय्य फलमेव समाददानाः, कीर्त्या सह पुरुषार्थमजनयद्भ्यः कर्मभ्यः प्रयत्नेन निवर्तमानाः, पश्चात्तापदायिनीः

क्रियाः कथमप्यनारभमाणाः, मनागप्यनाकलय्य शारीरमायासं निरस्य प्रत्यूहपरंपरां मनोदार्ढ्येन कर्मसु समुचितेषु प्रवर्तमानाः, अर्थोपकरणकालदेशकर्मणां स्वपरपक्षसाधारणानां निश्चित्यैव बलाबलं कर्म प्रारिप्समानाः, दुर्बलेषु दण्डं त्रीनुपायानितरेषु च प्रयुयुक्षमाणाः, गजेन गजान्तरमिवैकैककर्मसमाचरणेन कृत्यान्तरफलमप्यादित्समानाः, भीत्या व्याकुलीभवन्त्यां प्रकृतौ बलिभिरभिषेणयद्भिर्मानवन्तोऽपि सन्धित्सवः मन्त्रिशिरोमणयः समासांचक्रिरे ॥

मन्त्रिसत्तमाश्चैते राजानमत्यभिगन्तारोऽनभिगन्तारश्च न बभूवुः । अभिगमे हि सार्वदिके विविधकृत्यविक्षिप्तचेतस्कतया राज्ञाऽवज्ञायेरन् । अनभिगमे च न प्रसिद्ध्येत्फलम् । अभीप्सितं राज्ञो यद्व्यजहुस्तत्र लिप्साम् । राज्ञः समक्षं परकर्णान्तिके भाषणं परमुखावलोकेन हासं च पर्यहार्षुः । विज्ञाय समयामिङ्गितं च राज्ञः अद्वेष्यमनल्पफलं च करणीयं श्रवणमधुरेण, अभिधेयेन गुरुणा, लघुना चाभिधानेन वचनेन व्यजिज्ञपन् । अपर्यनुयुक्ता अपि राज्ञे हितान्यब्रुवत न तु विपरीतानि निर्बन्धिता अपि । बहुमानिता अपि राज्ञा, संस्तुता अपि चिरस्य, तदनभिमते कर्मण्यात्मनोऽनुचिते नितरां जिह्मयां बभूवुः । प्रथन्तेतरां स्म पारिषद्यहृदयानुरञ्जने भावगभीरैर्विशुद्धशब्दैर्वचोविलासैः । नैव बिभयांबभूवुः प्रत्याययितुमभिमतमर्थं सामाजिकेभ्यः ॥

सन्धिविग्रहार्थं राजान्तरोपगामिनो द्विविधा अपि दूताः बन्धुषु दधानाः प्रेम निर्व्याजं जन्मना साचिव्योचितमलंकुर्वाणाः कुलममलं, स्पृहणीयतरया प्रकृत्या भूपानामभिमताः अक्षीणस्वामिपक्षविश्वासाः संततमान्विच्छन्तः स्वामिने हितं वाच्यावाच्ये बुद्ध्या विनिश्चित्य प्रतीपभूपसन्निधावावश्यकमाभिधातुं धैर्येण पटीयांसः समुदलसन् ॥

तत्र स्वैराभिधायिनस्तु दूताः सचिवानपेक्ष्य नीतिशास्त्रेषु नदीष्णाः शतगुणम्, नैसर्गिक्या प्रतिभया, सकलवशीकरणनिपुणेन रूपेण, मीमांसितसमग्रसद्दर्शनार्थतत्त्वविज्ञानेन, बहुभ्यो बहुधा बहुश्रवणेन च बहु माननीयाः, प्रतिनृपतिषु कारणमुखेनैव कार्यजातं प्रतिपादयन्तः तदनभिमतमपि कृत्यमभिमतमिव निजोक्तिचतुरिम्णा ग्राहयित्वा स्वाभिलषितं साधयन्तः, क्रूरदृष्टीनपि तानविगणय्य तत्तत्कालदेशसमुचितकृत्यनिर्वर्तनव्यग्राः तेषामवस्थाम्, कालदेशौ च वक्तव्यांशसमुचितौ विशेषतः प्रसमीक्षमाणा व्यराजन्त ॥

अभिहितान्वभिधायिनस्तु दूताः अर्थकामाभ्यामविपर्यसनीयस्वभावाः, परेषां साचिवैर्मैत्रीमाकलयन्तः, हृदयदार्ढ्यमतितरामाबिभ्रतः, भीत्या प्रत्यर्थिभूपेष्वप्रयुञ्जानाः कथमपि नीचां वाचम्, तृणीकृत्यापि जीवितापायं स्वामिकार्यनिर्वहणप्रवणा बभूवुस्तराम् ॥

---

अपि द्वंद्वसहिष्णुः स्यात्कन्थां शीतनिवारिणीम् ।
अशक्तश्चेत्प्रगृह्णीयाच्छक्तश्चेत्तामपि त्यजेत् ॥ ३१ ॥

स्नानं त्रिषवणं कुर्यात्तत्र शीतादिकं सहेत् ।
अशनायां पिपासां वा सुखं वा दुःखमेव वा ॥ ३२ ॥

दुःखे बहुतरे भिक्षुर्नैव प्राणात्ययं चरेत् ।
आत्महत्या भवेत्तस्य स जीवन्नेव मुक्तिभाक् ॥ ३३ ॥

वृथावाक्यं हि न वदेद्यतिर्वाचः श्रमावहम् ।
नानुध्यायादिति तथा श्रुतिर्वक्ति ह्यरुन्मुखान् ॥३४॥

शालावृकेभ्यस्तान्प्रादात्तस्माद्वाचा न विग्लपेत् ।
तमेवैकं जानथेति अन्या वाचो विमुञ्चथ ।
श्रुतिर्वक्ति हितं युष्मांस्तस्मान्मौनं समाचरेत् ॥ ३५ ॥

एवं स्थितो ब्रह्मणि यः सत्यं श‍ृणुत वत्सकाः ।
अतः परं तु यत्कृत्यं तद्वक्ष्याम्यहमादरात् ॥ ३६ ॥

तुरीयश्लोकरत्ने तु तुर्यावस्थैव बोधिता ।
लक्षणं परहंसानामधुना स्थितिरुच्यते ॥ ३७ ॥

भगवच्छंकरकृते तुरीये रत्नके परः ।
तुरीयः शंकरस्तेन तुष्यतां मयि सर्वदा ॥

इति चतुर्थः श्लोकः ।

---

एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥

अयमुपसंहारः—

बहिर्मुखजनैः सङ्गं त्यक्त्वैकान्ते वसेन्मुनिः ।
व्यावृत्तेन्द्रियसंचारस्तत्र ब्रह्मानुचिन्तयेत् ॥ १ ॥

विश्ववैश्वानरादिभ्यः परं परतरं भवेत् ।
मायाऽथ वा परा प्रोक्ता तस्याः पारेऽथ वा भवेत् ॥२॥

जाग्रदादित्रयापेक्षा परं वा ब्रह्म उच्यते ।
परत्वं चेन्द्रियादिभ्यः पुरुषान्तं विदुर्बुधाः ॥ ३ ॥

तस्मात्परतरं नास्ति सा काष्ठा सा परा गतिः ।
तत्र चित्तं समाधाय तदेवास्मीति चिन्तयेत् ॥ ४ ॥

न तस्य प्रतिमाऽस्तीति दृष्टान्तार्हं न तद्भवेत् ।
मनोवाचामगम्यं तत्पदं विष्णोस्तु केवलम् ॥ ५ ॥

यस्मान्न पुनरावृत्तिः कल्पकोटिशतैरपि ।
मुमुक्षूणामेव गम्यं न चान्येषां कथंचन ॥ ६ ॥

विक्षिप्तं हि पुनर्न स्यात्तादृक् सम्यग्विधारयेत् ।
एवं धारणया भिक्षुर्ब्रह्मान्यन्न समीक्षते ॥ ७ ॥

ब्रह्मैवेदमिति ज्ञात्वा पूर्णात्मा जायते स्वयम् ।
रुचकादि यथा कार्यं सुवर्णान्नातिरिच्यते ॥ ८ ॥

तथा जगद्ब्रह्मरूपं बाधाधिकरणत्वतः ।
ततोऽभिन्नं जगत्सर्वं जीवेशादि पुरेरितम् ॥ ९ ॥

स्वप्नमायोपमं तत्तु जानीयादेव निश्चितम् ।
तथेदं ब्रह्मणोऽभिन्नं जगन्नानात्वलक्षणम् ॥ १० ॥

यथा महाम्भसोऽभिन्नं तरङ्गादि न वस्तुतः ।
सर्वं खल्विति च प्राह तज्जलानिति चापरा ॥ ११ ॥

वाचाऽऽरम्भणशास्त्रात्तु नामरूपक्रियात्मकम् ।
जगत्सर्वं तु मिथ्यैव बाधितं चावलोकयेत् ॥ १२ ॥

मिथ्या तु द्विविधं दृष्टं शशशृङ्गादिकं यथा ।
द्वितीयं भयदं रज्जुसर्पादिकमथापि वा ॥ १३ ॥

मायायास्त्रिविधं सत्त्वं पारमार्थिकसत्तथा ।
द्वितीयं व्यवहारस्थं तृतीयं प्रातिभासिकम् ॥ १४ ॥

वेदान्तश्रवणेनैव प्रथमं नश्यति क्षणात् ।
अपरोक्षान्नश्यति तत्सत्त्वं तु व्यावहारिकम् ॥ १५ ॥

प्रारब्धस्य क्षयान्नश्येत्प्रातिभासिकमप्युत ।
एवं मायासतत्त्वानां नाशाद्ब्रह्मविदुत्तमाम् ॥ १६ ॥

शान्तिमाप्नोति स यथा त्वङ्निर्मुक्तः पदोदरः ।
यथा पादोदर इति भाष्यकृद्भिरुदाहृतम् ॥ १७ ॥

प्रश्नोपनिषदि स्पष्टं जीवन्मुक्तस्य लक्षणम् ।
अथान्यत्पुनराहेदमहिनिर्ल्वयिनीति च ॥ १८ ॥

एवं ह वै सर्व इति श्रुत्यन्तरमथाब्रवीत् ।
एष नित्य इति प्राह महिमानं तु योगिनः ॥ १९ ॥

नैनं कृताकृत इति श्रुतिर्वक्ति च सादरम् ।
एवं सिद्धमपि ब्रह्म न जानन्ति कुबुद्धयः ॥ २० ॥

सुरेश्वरोऽपि प्राहेदं वचः सार्थकमञ्जसा ।
अध्यात्मादिपदार्थेभ्यो विविक्तं स्वात्मनि स्थितम् ॥

तं न पश्यन्त्यहो कष्टं दौर्भाग्यं दुष्टचेतसाम् ।
प्रत्यक्षगोचरं देवं लोकं चातिप्रमादिनम् ।
दृष्ट्वा श्रुतिः शिरस्ताडमनुक्रोशति दुःखिता ॥ २२ ॥

प्रत्यक्षतममप्येनं विरजस्कं स्वयं स्थितम् ।
अहो कष्टं न पश्यन्ति कं यामः शरणं वयम् ॥ २३ ॥

आयासस्तावदत्यल्पः फलं मुक्तिरिहैव तु ।
तथाऽपि परमाद्वैतं नैव वाञ्छन्ति मानवाः ॥ २४ ॥

परीक्ष्य यो न गृह्णाति गृह्णाति च विपर्ययात् ।
दृढं पूर्वश्रुतत्वाच्च प्रमादाच्चापि लौकिकात् ॥ २५ ॥

चतुर्भिः कारणैरेतैर्याथातथ्यं न विन्दति ।
मुमुक्षुमेवं दिशति श्रुतिः साक्षान्महार्थवत् ॥ २६ ॥

तस्मादिदं वचो ग्राह्यं श्रद्धापूर्वं मुमुक्षुभिः ।
अशेषजन्मनां मूलं सबीजं कर्म नश्यति ॥ २७ ॥

अकर्तृत्वावबोधेन ब्राह्मणस्य विजानतः ।
क्रियमाणं हि यत्कर्म जन्मारम्भेन तत्क्षयम् ॥ २८ ॥

यतः कर्तृत्वविरहाज्ज्ञानिनः कर्हिचित्क्वचित् ।
प्रारब्धं सुखदुःखादिभोगेनापक्षयं व्रजेत् ॥ २९ ॥

तत्तु नाशं न व्रजति ज्ञानमात्रात्प्रसिद्धितः ।
ज्ञानप्रारब्धयोर्भिन्नो विषयो नैव नाशकम् ॥ ३० ॥

प्रारब्धस्य यतो ज्ञानमज्ञानस्यैव नाशकम् ।
आरब्धसुखदुःखादिभोगो यस्तत्र साक्षिता ॥ ३१ ॥

तदेव ज्ञानमित्युक्तं तत्तु तन्नाशकं न हि ।
केचिद्योगबलेनैव विनाशं कल्पयन्ति हि ॥ ३२ ॥

न तैः सह बुधो वादं कुर्यान्मतिमतां वरः ।
नात्यन्तिको विनाशः स्याद्योगेनान्येन वा पुनः ॥३३॥

अज्ञाननाशाद्यो बाधः स एवात्र सतां मतः ।
दुःखादिविनिवृत्तिर्या योगेनैव यदा भवेत् ॥ ३४ ॥

तदा सुषुप्तेर्योगस्य किमाधिक्यं भवेदिह ।
दुःखाभावोऽपि तत्रैव लक्ष्यते निद्रितैः सदा ॥ ३५ ॥

तस्माद्योगेनैव नाशः प्रारब्धस्य न संशयः ।
अपान्तरतमादीनां प्रारब्धं यद्द्विजन्मकम् ॥ ३६ ॥

वेगेनैव तदारब्धं तत्र नो विवदेत्सुधीः ।
वसिष्ठस्यापि यज्जन्म भावि हैरण्यगर्भकम् ॥ ३७ ॥

तत्रापि तादृशं ज्ञेयं वेगवत्कर्म नान्यथा ।
वामदेवस्य चोष्ट्रत्वं पार्वतीशापतः किल ॥ ३८ ॥

बभूव तच्च प्रारब्धं वेगवत्परिकीर्त्तितम् ।
यथा चेषुधिगो बाणो संवेगाद्वाहुनिःसृतः ॥ ३९ ॥

यावद्वेगं पतेदेव नान्तरे वर्तते हि सः ।
यथा कुलालचक्रं हि घटं निर्माय चासकृत् ॥ ४० ॥

भ्रमते तत्र दण्डादिर्वेग एव हि कारणम् ।
तस्य तावदेव चिरं स्मृतिर्ज्ञानाग्निरित्यपि ॥ ४१ ॥

अनुभूतिरपीहास्ति मम प्रारब्धमस्ति हि ।
स्वामिदर्शनजं सप्तजन्मारम्भकमस्ति यत् ॥ ४२ ॥

तदार्थवादिकं ज्ञेयमन्यथा ज्ञानदूषणम् ।
यत्तु सर्वान्तरत्वादि शुके दृष्टं हि योगजम् ॥ ४३ ॥

न तज्ज्ञानफलं क्वापि ज्ञानं त्वज्ञाननाशकम् ।
पूर्वसिद्धं हि कर्तृत्वं भोक्तृत्वमपि नास्ति तत् ॥४४॥

अकर्तृ च तथाऽभोक्तृ परं ब्रह्मास्मीति नेतरत् ।
कालत्रयेऽपि कर्ता वा भोक्ता वा न भवाम्यहम् ॥

इति ज्ञानाग्निना दग्धकर्माऽसौ ब्राह्मणोत्तमः ।
अस्मिन् जन्मनि बोधाद्यपूर्वमेव कृतं भवेत् ॥ ४६ ॥

जन्मान्तरे च यद्वृत्तं तत्सर्वं नश्यति ध्रुवम् ।
संस्कारलेशतो मिथ्याऽप्यनुवर्त्तेत चक्रवत् ॥ ४७ ॥

प्रारब्धस्यापि नाशश्चेत्स्थितिर्ब्रह्मविदः कथम् ।
संप्रदायस्य चोच्छित्तिर्भवेदिति विनिश्चयः ॥ ४८ ॥

यस्तु संस्कारलेशोऽयं यावत्संपातमस्ति चेत् ।
पश्चात्स न भवेत्किं वा न निमित्ताद्यभावतः ॥ ४९ ॥

कर्माशयेनापरेण नैव जन्मादिकं भवेत् ।
तस्य ज्ञानाग्निदग्धत्वात्सबीजस्य तदेव हि ॥ ५० ॥

यदश्लेषवचः श्रौतं तत्पापविषयं भवेत् ।
धर्मस्य त्वविरोधित्वान्नाशो नास्तीति चेन्मतम् ॥

उभे ह्येवेति च श्रुत्या तराति ब्रह्मवित्क्षणात् ।
पापशब्दस्तु धर्मेऽपि क्वचिदस्ति श्रुतौ मतः ॥ ५२ ॥

नैनं सेतुमहोरात्रे तरतो ब्रह्मविद्वरम् ।
इत्युपक्रम्य सर्वे हि पाप्मानोऽतो महात्मनः ॥ ५३ ॥

निवर्तन्ते विशेषेण पुण्यपापे तरत्ययम् ।
विद्याबलाद्ब्रह्मविदो मुक्तिरात्यन्तिकी भवेत् ॥ ५४ ॥

अत्र गन्तव्यता नास्ति ब्रह्मनिष्ठस्य कुत्रचित् ।
भूमिस्थः कश्चिदेवात्र यथाऽन्यं देशमाव्रजेत् ॥ ५५ ॥

तत्रान्यस्यानुगमनमन्यद्भूम्यन्तरं प्रति ।
अनन्यत्वेऽपि बालस्य कालान्तरभवे भवेत् ॥ ५६ ॥

वार्द्धके गमनं तद्वद्ब्रह्मनिष्ठस्य नास्ति तत् ।
भूप्रदेशो वयोवस्थाविशिष्टानां गतिर्भवेत् ॥ ५७ ॥

तत्र सावयवत्वाद्धि वर्ततेऽत्र तु निष्कलम् ।
निष्क्रियं शान्तमित्यादि न तस्येत्यवदच्छ्रुतिः ॥ ५८ ॥

सम्यग्विध्वस्ततमसामनावृत्तिः परा मता ।
इमं मानवमित्यादावुपासनपरं विदुः ॥ ५९ ॥

न स पुनरावर्तत इति श्रौतं वचोऽब्रवीत् ।
मामुपेत्येति भगवानर्जुनायाह सादरम् ॥ ६० ॥

भवदृष्ट्या तु गर्भेऽहं वामदेवो यदब्रवीत् ।
अहं मनुस्तथा सूर्य इति व्याप्तिर्विदो भवेत् ॥ ६१ ॥

तस्माद्ब्रह्मविदो नास्ति गमनं कुत्रचित्क्वचित् ।
गीतास्वपि तथा चोक्तं विशते तदनन्तरम् ॥ ६२ ॥

विदेहमुक्तौ बद्धो हि श्रुतयः स्मृतयस्तथा ।
जीवन्मुक्तिस्तु त्विद्वैव शरीरास्थितिधारिणी ॥ ६३ ॥

इति प्रोक्तं मुमुक्षूणामुपदेशनमादरात् ।
आचार्यैः पञ्चरत्नाख्यं श्लोकपञ्चकमुत्तमम् ॥ ६४ ॥

देहावसानसमये प्रार्थितं त्वधिकारिभिः ।
सूत्रभाष्यादिकं श्रोतुमशक्तानां कथं भवेत् ॥ ६५ ॥

ज्ञानं यद्भगवत्प्रोक्तं स्थूलबुद्धिमतां हि नः ।
तदा स भगवाञ्शर्वः साक्षाच्छंकररूपधृक् ॥ ६६ ॥

प्राहान्ते पञ्चरत्नाख्यं स्तोत्रं ज्ञानप्रदायकम् ।
पञ्चरत्नमयीं मालां यः कण्ठे धारयेन्नरः ॥ ६७ ॥

तस्यान्यद्भूषणं तुच्छं भवेन्निश्चितमेव हि ।
अनेन पञ्चरत्नस्य व्याख्यानेन सदाशिवः ।
श्रद्धां वाणीं तथा बुद्धिमकरोन्मुक्तिसिद्धये ॥ ६८ ॥

श्रीमद्रामेन्द्रकृपया शिवस्तुलसिवंशजः ।
कारिकाः पञ्चरत्नानामकरोद्धरितुष्टये ॥ ५ ॥

इति पञ्चरत्नकारिकाः समाप्ताः ॥

श्रीसदाशिवार्पणमस्तु ॥

मा तात्पर्यं भवतु विधिषु द्वारभूतेऽर्थजाते
तैस्तत्सिद्धिस्तदपि घटते बाधसिद्ध्योरभावे ।
सिद्धार्थानामपि च विदितैवार्थवादैर्व्यवस्था
तद्देवानामपि न विकलो मोक्षविद्याधिकारः ॥ १६ ॥

(मन्दाक्रान्ता)

९. अपशूद्राधिकरणम् ॥

## शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

सन्तु तर्ह्यवरवर्णजा अपि
ब्रह्मबोधकलनाधिकारिणः ।
कर्मणीव खलु नाधिकारिणा-
मभिराहित इहाप्यपेक्षितः ॥ १७ ॥

वक्तुमध्ययनशालिजन्मनां
वेदपूर्वमधिकारमीश्महे ।
तेषु नाध्ययनमस्ति नापि च
प्राग्भवाधिगतवेदसंस्मृतिः ॥ १८ ॥

(रथोद्धता)

१०. कम्पनाधिकरणम् ॥

## कम्पनात् ॥ ३९ ॥

असवोऽशनयश्च यस्य रूपं
यदिदं किं च मनूदितः स वायुः ।
इतरं प्रतिबोधयेत्स्वशक्त्या
न खलु प्राणपदं स्वतन्त्रशब्दम् ॥ १९ ॥

प्रकृतं परपूर्वमन्त्रयोश्च
प्रमितं ब्रह्म जगत्प्रकम्पनं च ।
तदसावुपमानमत्र वज्रं
भयदे प्राणपदं च गौणमस्मिन् ॥ २० ॥

(औपच्छन्दसिकम्)

११. ज्योतिरधिकरणम् ॥

## ज्योतिर्दर्शनात् ॥ ४० ॥

देहात्समुत्थाय यज्ज्योतिराप्यं
सूर्योऽर्चिराद्यध्वमध्यास्थितोऽयम् ।
न ब्रह्म तच्चेदमुख्यार्थता स्यात्
ज्योतिःसमुत्थानसंपत्तिवाचाम् ॥ २१ ॥

वैयर्थ्यतो निर्गुणब्रह्मभावे

ज्योतिः परं ब्रह्म मुक्तस्वरूपम् ।

गौणौ समुत्थानसंपत्तिशब्दौ

*..........................................

(प[illegible])

१२. अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

द्यौराकाशस्तन्निर्वाह्या

ये नामार्थास्ते वाग्वाच्याः ।

.........................................

......यद्योगस्तस्मिन् ॥ २३ ॥

ब्रह्मण्यात्मश्रुत्यादीनां

रूपं नामेत्युक्तथाऽशेषे ।

ग्राह्ये तत्संकोचायोगाद्

ब्रह्मैवासावाकाशोऽपि ॥ २४ ॥

(विद्युन्माला)

१३. सुषुप्त्युत्क्रान्त्यधिकरणम् ॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

प्रकरणमिदमादिमध्यावसानेषु जीवं ननु

प्रथयति कतमोऽयमात्मेति यज्जीवपृच्छोत्तरम् ।

* तुरीयपादो न दृश्यते

प्रकटनमिह तत्र तत्रास्ति यद्ब्रह्मतद्धर्मयो-

स्तदखिलमपि जीव एवोपचारेण योज्यं बुधैः ॥ २५ ॥

प्रथममिह विविच्य तं प्राणमुख्यादनात्मव्रजा-

त्तदनु समुपदर्श्य च स्वप्नसुप्त्योरतद्धर्मताम् ।

उपदिशति परेण तस्यैक्यमन्ते तदन्यार्थिका

तदनु गतिरियं न भक्तिप्रक्लृप्त्यै परोक्तेरलम् ॥ २६ ॥

(निशा)

इति श्रीमदप्पय्यदीक्षितेन्द्रविरचिते चतुर्मतसारे नयमञ्जर्याख्ये

चतुर्थपरिच्छेदे प्रथमस्याध्यायस्य

तृतीयः पादः ॥



॥ प्रथमाध्यायस्य चतुर्थः पादः ॥

१. आनुमानिकाधिकरणम् ॥

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

योगरूढितोऽपि कापिलस्मृतिक्रमादतो-

ऽव्यक्तशब्दबोधितं प्रधानमेव काठके ।

पूर्वमत्र यद्रथस्वरूपणेन धीस्थितं

व्यक्तमस्य तच्छरीरमश्नुते न शक्यताम् ॥ १ ॥

रूढिरस्य सांख्यमात्रकल्पिता न साधिका

योगतस्तु सूक्ष्ममत्र किंचन प्रतीयते ।

तेन सूक्ष्मकारणोद्भवं शरीरमेव तत्

प्रस्तुतं च तद्धि पूरुषान्वयव्यपेक्षि च ॥ २ ॥

(शान्विः)

२. चमसाधिकरणम् ॥

## चमसवदविशेषात् ॥ ८ ॥

प्रकृतिरजोचिताऽजनितया च तथैकतया

त्रिगुणमयी च सा भवति लोहितकृष्णसिता ।

कपिलमुनिस्मृता विविधजीववचोऽनुगुणा
न तदनुरोधिनी तदितरोपनिषत्प्रथिता ॥ ३ ॥

बलि खलु योगतोऽपि पदरूढ्यपरित्यजना-
द्गुणमुखवर्तनं ननु निरूढिरतोऽप्यधिका ।
तदियमजाप्रक्लृप्तिरिह बर्हिरवन्नगुणे
तदनुविधायिनी प्रथितजीवभिदानुकृतिः ॥ ४ ॥

( नर्कुटकम् )

३. संख्योपसंग्रहाधिकरणम् ॥

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥

पञ्चपञ्चजनकीर्तनं यदिह...मानुषपरं भवे-
त्स्यान्निराशयहतं वचो यदि तु वाक्यशेषपठितार्थकम् ।
भिन्नशाखिपठितार्थभेदकथनाद्भवेत्तदनवस्थितं
पञ्च पञ्च कपिलोक्ततत्त्वगुणपञ्चविंशतिरतो भवेत् ॥

संख्यया न खलु सैति योगमुपसर्जनेन न च तद्गता
काङ्क्षया विरहितेन तेन कपिलस्मृतिक्रमविवर्जनात् ।
प्राणनेत्रमुखपञ्चकस्य गगनस्य चाश्रय इहेरितो
ज्योतिरन्नपठनाद्विकल्पपरिकल्पना तु तदुपासने ॥ ६ ॥

(रत्नभूषणम्)

४. कारणत्वाधिकरणम् ॥

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥

सदसत्प्रभवं स्वकर्तृकं
जगदेतत्प्रतिपादयत्कथम्
निगमान्तकदम्बकं जग-
त्प्रभवे ब्रह्मणि मानतां भजेत् ॥ ७ ॥

तदसत्कथयन्ति सौक्ष्म्यतः
सुकरत्वात्तु जगत्स्वकर्तृकम्
निगमान्तवचांसि नान्यथा
तदसद्वाद्यसनादि युज्यते ॥ ८ ॥

(योगिनी)

५. बालाक्यधिकरणम् ॥

## जगद्वाचित्वात् ॥ १६ ॥

पुरुषो योऽयमजातशत्रुकथितः प्राणः स जीवोऽथ वा
चलनं कर्म भवत्यदृष्टमथ वा रूढ्या निरूढ्या च यत् ।
प्रतिपन्नं यदुपक्रमेऽस्ति वचनं ब्रह्म ब्रवाणीति तद्
विदितं भ्रान्तवचस्तथा ह्यनुपदं न ब्रह्मता सा कथम् ॥

भ्रमवान् गर्गकुलोद्भवो हि मनुतामब्रह्मणि ब्रह्मतां
तदुपक्रान्तिपदे तु नास्ति विमतिः श्रोत्राऽपि च श्लाघिते ।
तदिहोक्तं तमपोह्य यत् क्षितिभुजा तद्ब्रह्म नो चेद्भवेत्
पदगुम्भोऽयमसङ्गतस्तदिह नः कर्मेति कार्यं मतम् ॥

(मत्तेभविक्रीडितम्)

६. वाक्यान्वयाधिकरणम् ॥

## वाक्यान्वयात् ॥ १९ ॥

पतिसुतमुखसूचितस्य भोक्तुः
कथममृतोक्त्युदितेन याज्ञवल्क्यः ।
उपदिशति परेण केवलैक्यं
यदयमनूद्य विधिर्विशेषकाङ्क्षी ॥ ११ ॥

व्यवहृतिविषयादसत्यभेदा-
दियमनुवाद्यविभेदतोपपन्ना ।
यदि भवति स सत्य एव मोक्षे
न खलु भवेदवभेदतो निवृत्तिः ॥ १२ ॥

(पुष्पिताग्रा)

७. प्रकृत्यधिकरणम् ॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

ब्रह्म कर्तृ जगतोऽस्य नियन्तृ
स्पर्शरूपरसगन्धविहीनम् ।

प्रामाण्यम्। एवं मन्त्राणामपि स्वाध्यायाध्ययनविधिवशादेव प्रयोजनवत्त्वावगमाद्विधिस्तुत्योश्च द्वितीयेऽध्याये निराकरणात्प्रकरणादिवशेन प्रधानाङ्गभूतानां दृष्टमदृष्टं वा प्रयोजनं कल्प्यत इति नाप्रामाण्यम्। नन्वेवमप्यङ्गत्वे प्रयोजनं लभ्यते न तु प्रामाण्यम्। नैष दोषः, पदार्थानां वाक्यार्थे प्रामाण्याभ्युपगमात्। उक्तं हि 'पदार्थास्तत्स्मृतिर्वा स्यात्' इति। तेन मन्त्रविशिष्टमर्थं बोधयतः प्रधानवाक्यस्यार्थे मन्त्राणामपि प्रामाण्यं संभवति।

---

पर्यवसानमभ्युपेयम्। तद्विशेषनिर्णयस्तु मन्त्राधिकरणे भविष्यतीति मन्त्रेषु प्रथमविचारापेक्षितं सिद्धान्तमाह— **मन्त्राणामपीति। विधिस्तुत्योरिति।** 'देवांश्च याभिर्यजते ददाति च' इत्यादिमन्त्राणाम् 'यजति ददाति'[1]इति शब्दयोगे यच्छब्दादिनाऽनुवादकत्वाद्विधायकता विधिमन्त्राधिकरणे निराकृता। 'आज्यैः स्तुवते; प्र उगं शंसति' इत्यादिभिः प्रगीताप्रगीतमन्त्रसाध्यगुणाभिधानरूपस्तोत्रशस्त्रविनियुक्ता मन्त्राः स्तुतिद्वारा सोमयागाङ्गदेवताप्रकाशनार्था न भवन्ति; किं तु स्वातन्त्र्येणादृष्टजनकस्तुत्यर्था इति तेषां द्वारभूतस्तुत्यर्थत्वं स्तुतशस्त्राधिकरणे निराकृतमित्यर्थः। **नन्विति।** नन्विदानीं द्वारविशेषनिर्धारणाभावादर्थवादानां स्तुतिवद्विध्येकवाक्यतोपयुक्तस्यापि द्वारविशेषस्य संभवात्कथं प्रामाण्यासंभवसंभवशङ्का? उच्यते— अर्थवादानामिव विध्येकवाक्यताप्रयोजकं द्वारमन्यत्र पठितानां मन्त्राणां न संभवतीति प्रधानाङ्गताप्रयोजकदृष्टादृष्टान्यतरोपकाररूपद्वारं भवदपि भवेत्, तत्तु न प्रामाण्यप्रयोजकमिति भावः। **पदार्था इति।** नन्वस्त्वाचार्याणां मतेन शाब्दज्ञाने पदार्थः करणमित्यपि पक्षः [2]पदोपस्थिता एव तु पदार्थास्तत्र करणम्। मन्त्राश्च प्रत्यक्षोपस्थिताः करणं भवन्तश्च क शाब्दप्रमितौ करणं भवेयुः? अन्यत्र विहितानां द्रव्यदेवतादीनामनुवादका हि मन्त्रा इत्याशङ्क्याह— **तेन मन्त्रविशिष्टमिति।** साङ्गप्रधानविषयप्रयोगविधि[3]वाक्यपदजन्यप्रमितावङ्गान्तरवन्मन्त्रा अपि शब्दोपस्थिताः करणतामश्नुवत इति भावः॥

प्राभाकरास्तु भूतभव्यसमुच्चारणे 'भूतं भव्यायोपदिश्यते' इति न्यायात् 'मलिनः स्नायात्क्षुधितोऽश्नीयात्' इत्यादिलौकिकव्यवहारे भूतार्थस्य मालिन्यादेः कार्ये स्नानादौ [4]हेतुत्वान्वयदर्शनाच्च भूतार्थानामर्थवादानां चोदनार्थे हेतुसमर्पकतयाऽन्वयः। तथा च चोदनानां हेतुसापेक्षत्वलक्षणमप्रामाण्यमिति चोदनाप्रामाण्याक्षेपपर्यन्तं पूर्वपक्षं कुर्वन्ति। तन्मतं दूषयति— [5]हेतुत्वान्वयस्येति। 'हेतुर्वा स्यात्' इति व्यवहितानन्तराधिकरणे 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' [6]इति हेत्वर्थ[7]योग्यहिशब्दयोगेऽपि नास्ति हेतुत्वान्वय इति निर्णेष्यते। अतो यत्र हिशब्दादियोगो नास्ति तत्र हेतुतयाऽन्वयः कैमुतिकन्यायेन निहितो भवतीति तेन गतार्थत्वान्नात्र पूर्वपक्षो युक्तः। यद्युच्येत— हेत्वधिकरणे हिशब्दप्रयोगप्रयुक्तविधेयहेत्वन्वयपूर्वपक्षे हि

---

1. इत्यादिशब्दयोगेऽपि यज्याद्यनु० 2. अ. पदोपस्थापिता 3. विधिना शब्दजन्यप्रमिता० 4. म. हेतुत्वेनान्वय 5. हेतुत्वेनान्वयस्येति 6. इति वाक्ये 7. योगि

तेन मन्त्राणामपि प्रयोजनवत्त्वात्प्रामाण्यमस्तीत्येतावत्सिद्धम् । प्रयोजनविशेषस्तु प्रकृतमर्थवादाधिकरणं परिसमाप्य पश्चाद्वक्ष्यते । तथा नामधेयस्यापीति सिद्धं सकलस्य वेदस्य प्रामाण्यम् ॥

शब्दप्रसिद्धिस्तुतिरूपार्थान्तरसंभवात् निराकृतेऽप्यर्थवादानामर्थान्तरादर्शनादनन्यगतिकतया भूतभव्यन्यायप्राप्तहेतुत्वान्वयशङ्काऽवतिष्ठेत[1] । सा तेषां स्तुतिरूपार्थान्तरसद्भावव्युत्पादनेन निराकरणीया । अतस्तद्व्युत्पादनार्थमर्थवादाधिकरणमप्यर्थवदिति । तदा हेत्वधिकरणमनेन गतार्थं स्यात् । तथा हि— स्तुतिरूपार्थान्तरसंभवेऽपि न्यायप्राप्तो हेतुतयाऽन्वयः कथमिह निराकरणीयः ? निरपेक्षप्रमाणभूते वेदान्ते हेतुत्वान्वयो न योग्य इति निराकरणीय इति चेत्, [2]तस्यायोग्यत्वादेव हिशब्दोऽपि हेत्वर्थं परित्यज्य [3]लोकप्रसिद्ध्यर्थमेवावलम्बत इति किं तेनाधिकरणेन? तस्मादन्यतरस्य गतार्थत्वं स्यादिति भावः ॥

---

औदुम्बराधिकरणम् ॥ २ ॥

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥ लोकवदिति चेत् ॥ २० ॥ न पूर्वत्वात् ॥ २१ ॥ उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥ विधिश्चानर्थकः क्वचित्, तस्मात्स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥ प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥ विधौ च वाक्यभेदः स्यात् ॥ २५ ॥**

---

॥ जैमिनीयन्यायमाला ॥

ऊर्जोऽवरुध्या इत्येष विधिवन्निगदो न किम् ।
यूपौदुम्बरतां स्तौति स्तौति वा तद्विधित्सया ॥ ५ ॥

चतुर्थ्या फलतालाभाद्यूपौदुम्बरता फलम् ।
ऊर्जोऽवरोधं कथयन्कथं स्तुतिपरो भवेत् ॥ ६ ॥

---

1. म. अवतिष्ठते 2. तर्हि अयोग्यत्वादेव 3. लोकविख्याता०

अस्तुतौदुम्बरत्वस्याविधानात्कस्य तत्फलम् ।
अर्थद्वैधे वाक्यभेदस्तेन स्तावक एव सः ॥ ७ ॥

आप्नोतीति विधित्वस्य वादत्वस्याप्यनिर्णयात् ।
न प्रमा चोदनेत्यत्र वादो ह्येकवाक्यतः ॥ ८ ॥

---

पूर्वोक्ताक्षेपेण त्विदमारभ्यते । यदुक्तम्— नानर्थक्यमर्थवादानामिति, तद्ब्रूमः । स्तुत्यर्थत्वं तु केषुचिन्न मृष्यामहे । यथा— 'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मादूर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्यै' इत्येवमादिषु विधिसंभवादित्येवमाक्षिप्यते । अतैवं विचार्यते । किमौदुम्बरो यूपो भवतीत्यौदुम्बरताया 'ऊर्जोऽवरुद्ध्यै' इति फलम् , उत सर्वोऽयमर्थ-

---

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥

पूर्वाधिकरणेनाक्षेपकीं संगतिं दर्शयति— पूर्वोक्तेति । अविशेषेण सर्वेषामर्थवादानां स्तुत्यर्थत्व[1]प्रतिपादनेनानर्थक्यं[2] पूर्वाधिकरणे परिहृतम् । तेषां मध्ये केषुचिदर्थवादेषु विधिसंभवान्न स्तुत्यर्थतेत्याक्षिप्यत इत्यर्थः । [3]नन्वर्थवादत्वमभ्युपगम्य स्तुत्यर्थत्वमिह नाक्षिप्यते; किं तु 'ऊर्जोऽवरुद्ध्यै' इत्यादयः फलसमर्पकतया 'औदुम्बरो यूपो भवति' इत्यादिविध्यन्तर्गता न त्वर्थवादा इति कथ्यते[4] । अतो नेहाक्षेपकी संगतिर्युक्तेति चेत् , उच्यते— पूर्वाधिकरणे 'शोभतेऽस्य मुखं य एवं वेद' इत्यस्य सिद्धान्तिना विधिसरूपार्थवादत्वमुक्तम् । तेनान्येषामपि विध्युद्देशे क्रियाकारकभावनान्वये सति पश्चात्प्रवृत्तानां तत्समभिव्याहृतानां [5]फलसमर्पकवदवभासमानानां फलविधिसरूपार्थवादत्वमेव सिद्धान्ती मन्यते । तन्न संभवति, केषांचित्फलविधिसंभवादित्याक्षिप्य 'ऊर्जोऽवरुद्ध्यै' इति फलमिति ऊर्जोऽवरुद्ध्यै इत्येतत्फलसमर्पकतया विध्युद्देशान्तर्गतमित्यर्थः । उत सर्वोऽयमिति । 'ऊर्ग्वा' इत्यादिराप्नोत्यन्तः पशूदुम्बरयोरूर्क्पदवाच्यान्नरूपतया साजात्यात्साध्यसाधनभावो युक्त इत्यौचित्येन स्तुत्यर्थः । यथा 'वायुर्वै' इत्यादि क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति फलफलिभावौचित्येन स्तुत्यर्थ इत्याप्नोत्यन्तोऽर्थवाद एवेति पूर्वपक्षिणाऽप्यभिमतः । [6]पूर्वपक्षात्सिद्धान्तस्य [7]भेदप्रदर्शनाय सर्वोऽयमिति विशेषणम् । एवं च आप्नोत्यन्तः पूर्वपक्षे पश्वादुदुम्बरफलफलिभावौचित्यरूपोपपत्तिसमर्पकार्थवादतया 'ऊर्जोवरुद्ध्यै' इत्यस्य फलविधेः शेषः । सिद्धान्ते [8]तथैव फलविधिसरूपार्थवादस्य तस्यैव शेष इत्येतावान् भेदः । एवंजातीयकेनेत्यस्य विवरणम्—

---

1. म. प्रस्तावनेनार्थवादत्वेनाभ्युपगम्य 2. म. आनर्थक्यमित्यारभ्य अभ्युपगम्येत्येतत्पर्यन्तं नास्ति 3. अ. नन्वर्थवादत्वेनाभ्युपगम्य तस्य स्तुत्यर्थत्वं 4. कथ्यन्ते 5. म. फलसमर्पकपदवद॰ 6. अ. अतः पूर्वं 7. फलविधेः भेद॰ 8. तथैवेति नास्ति

वाद इति । तदर्थं च किमेवंजातीयकेन विधिविभक्तिरहितेन साधनत्वमौदुम्बरतायाः शक्यते प्रतिपादयितुं न वेति । तत्र पूर्वः पक्षः— 'ऊर्जं पशूनामोत्यूर्जोऽवरुद्ध्यै' इत्यनेन पशूनां साध्यत्वं गम्यते श्रुत्या, लक्षणया तु प्राशस्त्यम् । फलविधौ चार्थवत्त्वम्, आनर्थक्यमर्थवादत्वे । साध्यस्य च साधनापेक्षत्वात्तत्संनिधावुच्चरितमौदुम्बरत्वमसत्यपि विधौ साधनत्वेनावगम्यते । साधनत्वावगमादेव च प्रवृत्तिसिद्धेर्नार्थो विधिनेति । सिद्धान्तस्तु— विधावसति भावनाया

---

विधिविभक्तिरहितेनेति । 'औदुम्बरो यूपो भवति' इति विधिविभक्तिरहितं फलार्थवादसहितं च 'बैल्वो यूपो भवति[1]' इत्यसौ 'आदित्यो यतो जायते ततो बिल्व उदतिष्ठत्सयोन्येव ब्रह्मवर्चसमवरुन्द्धे' इत्यादिकमन्यदपि वाक्यमुदाहरणमिति सूचितम् । एवं [2]चौदुम्बरताया इति वाक्यान्तरविधेयबैल्वत्वादिगुणानामप्युपलक्षणम् । शक्यते प्रतिपादयितुं न वेति ; विचार्यत इत्यनुषङ्गः । यदि विधिं [3]विनाऽप्यौदुम्बरतायाः फलसाधनत्वं शक्यं प्रतिपादयितुं तदा 'ऊर्जोऽवरुद्ध्यै' 'औदुम्बरो यूपो भवति' इति समभिव्याहारात्साध्यसाधनभावो लभ्यत इति ऊर्गवरोधवचनं फलसमर्पकं भवति । यदा न शक्यं तदा साध्यसाधनभावाभावेन फलसमर्पकभावात् प्रच्युतं तदपि वचनमर्थवादो भवतीति संशययोः फलफलिभावः । एवं च विध्युपयोगचिन्ताया नार्थवादविचारप्रस्तावे संगतिरिति शङ्काया अनवकाशः । [4]अर्थवादसिद्ध्यौपयिकतया तस्यास्तदर्थचिन्तात्वेन निवेशात् स्वातन्त्र्येण न संगतिः । ऊर्जमित्याप्रोत्यन्तस्य अर्थवादान्तर्गतत्वेऽपि फलसमर्पकवाक्ये चतुर्थ्येव तत्रापि द्वितीयाश्रुत्या साध्यत्वप्रतीतिरस्तीति 'ऊर्जं पशून्' इत्युदाहरणमनर्थकम् । अर्थवादत्व इति । ननु कथं स्तुत्यर्थत्वेनैव ह्यानर्थक्यं परिहृतम् । पूर्वाधिकरणेऽप्युक्ताधिकरणे [5]यदुक्तं 'नानर्थक्यमर्थवादानाम्' इति तद्ब्रूहीम इति चेत्— सत्यम्; पशुफलविधिरन्यतो न सिध्यति । स्तुतिस्तु विध्युद्देशादपि सिध्यति । निरर्थवादेषु 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इत्युक्तत्वादिहाप्रोत्यन्तस्य स्तुत्यर्थस्य श्रवणाच्च । अतो निरर्थकप्रायस्तुतिपरत्वकल्पनमिति तात्पर्यम् । नार्थो विधिनेति । ननु प्रागेवमादिषु विधिसंभवादिति पूर्वपक्षे विध्यभ्युपगमेन पूर्वाधिकरणाक्षेपो दर्शितः । कथमिह तदभ्युपगमेन पूर्वपक्षः क्रियते ?— उच्यते । तत्र विधिशब्देनौदुम्बरतायाः समीहितसाधनता विवक्षिता । सैव हि ग्रन्थकारमते लिङाद्यर्थः शब्दभावनारूपो विधिः[6] फलवचनसमभिव्याहारलभ्या संभवतीति स्तुत्यर्थत्वाक्षेपः कृतः । इह तु विधिशब्देन पञ्चमलकारादिरूपा विधिविभक्तिर्विवक्षिता । तां विनैव समभिव्याहारात्प्रवर्तकसमीहितसाधनबोधसंभवे किं तयेत्यर्थः । सिद्धान्तस्त्विति । औदुम्बरो यूपो भवतीत्यत्र भवनं यूपस्वरूपेण न संबध्यते, तद्भवनस्य चोदकतः प्राप्तेः । किं त्वप्राप्तौदुम्बरतया । ततश्च औदुम्बरताभवनेनाक्षिप्ता तद्भावना समीहितसाधनताबोधकविध्यभावे[7] भाव्यमात्रमपेक्षमाणा तामेवौदुम्बरतां गृह्णीयादित्यर्थः । ननूर्गवरोधं भाव्यत्वेन

---

1. भवत्यसौ वा आदित्यो 2. च इति नास्ति 3. म. अपीति नास्ति 4. अर्थवादत्व० 5. इहाप्युक्तमधिकरणारम्भे 6. विधिरित्यत उत्तरं सा तु इत्यधिकः पाठः । 7 विध्यभावेन

औदुम्बरताभावनाक्षिप्तायाः सैव भाव्या स्यान्न फलम्। संनिहिता च सा, विप्रकृष्टं तु फलम्। अतो न फलसंबन्धः। तेन यद्यपि तावत् 'ऊर्जं पशूनाम्नोत्यूर्जोवरुद्ध्यै' इत्यनेन फलमभिधातुं शक्यते, तथाऽप्यविहितस्यौदुम्बरत्वस्य फलवचनमनर्थकमित्यर्थवादत एवात्र विधिरुन्नेतव्यः॥

न च स्तुतित्वेन विधिशक्तिमुपजनय्य पुनस्तेनैव फलकल्पना संभवति, वाक्यभेदप्रसङ्गात्। तस्मादर्थवादः॥

न चैवंविधेन कामशब्दरहितेन शक्यते फलं प्रतिपादयितुमिति पर्णमय्यधिकरणे वक्ष्यामः। अत्र तु साधनांशविचारमुखेनार्थवादत्वमुक्तम्। तत्र तु साध्यांशविचार

किमिति न गृह्णीयादित्याशङ्क्य विनिगमकमाह— संनिहिता चेति। चकारेण भवनकर्तृत्वेन श्रुताया औदुम्बरताया भावनाकर्मत्वनियमः समुच्चीयते। नन्वेवं सत्यूर्गवरोधसाध्यत्वश्रवणमनर्थकं स्यात्। न च तत्साधनान्तरसाध्यत्वविषयं वक्तुं शक्यम्। [1]साधनान्तरश्रवणाभावादाप्नोत्यन्तोपपत्त्यर्थवादेन [2]तस्यौदुम्बरताफलवचनत्वावसायाच्चेत्याशङ्क्याह— तेन यद्यपीति। [3]औदुम्बरताफलवचनं स्वानर्थक्यपरिहाराय। उदुम्बरताभावनयाऽन्वयमाकाङ्क्षमाणमपि तदाकाङ्क्षामनुत्थाप्य तया नान्वेति। समीहितसाधनताबोधकविध्यभावे संनिहितभावनाकर्मभूतौदुम्बरत्वमेव भाव्यमासाद्य निर्वृत्तायास्तस्या नाकाङ्क्षोत्थापयितुं शक्येति तदाकाङ्क्षोत्थापनाय स्वयमेवार्थवादतामवलम्ब्य विधिं कल्पयतीति वक्तव्यम्। न चार्थवादतया विधिं कल्पयित्वा पश्चात्फलसमर्पकतयाऽप्यन्वेतुमर्हति; आवृत्तिलक्षणवाक्यभेदप्रसङ्गादित्यर्थः। तेन यद्यपीत्यादिग्रन्थे यद्यपीत्युक्त्या वस्तुतः फलम् 'ऊर्जोऽवरुद्ध्यै' इत्यनेन वक्तुं न शक्यत इति ध्वनितम्। तदुद्घाटयति— न चैवंविधेनेति। चतुर्थे 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इत्यधिकरणे यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति' 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानूयाजा इज्यन्ते, वर्मैव तद्यज्ञाय क्रियते, वर्म यजमानाय भ्रातृव्याभिभूत्यै' इत्याद्युदाहरणेषु तत्तद्वाक्यशेषाणां फलसमर्पकत्वं नास्ति, अपापश्लोकश्रवणादिगतसाध्यत्वप्रतिपादकशब्दाभावादिति वक्ष्यत इत्यर्थः। इहापि तर्हि [4]तदेव वाक्यशेषस्य साध्यत्वप्रतिपादनसामर्थ्याभावात् फलविधिनिराकरणसिद्धेः किमनेनाधिकरणेनेत्याशङ्क्याह— अत्र त्विति। अधिकरणद्वयेऽपि साध्यसाधनसंबन्धबोधासंभवे[5] एक एव न्यायः फलविधित्वनिराकरणाय व्युत्पादनीयः। इह [6]साध्यांशबोधसंभवमभ्युपेत्य [7]साधनांशबोधासंभवाद्व्युत्पादितः। तत्र साधनांशबोधसंभवमभ्युपेत्य साध्यांशबोधासंभवादित्येवं मुखभेदान्नास्ति द्वयोरपि गतार्थतेत्यर्थः॥

1. अ. साधनान्तराश्रवणात् 2. तस्य इति नास्ति 3. उदुम्बरता० 4. अ. तथैव 5. ०बोधकासंभव एव 6. साध्यांशे बोधसंभवं 7. साधनांशे बोधासंभवो व्युत्पादितः।

इत्यपौनरुक्त्यम् । अथ वा साध्यांशेऽप्यत्रैव विचारिते रात्रिसत्रन्यायेन फलपरत्वमप्यपापश्लोकश्रवणादीनामाशङ्क्य निराकरिष्यते चतुर्थे ॥

न चौदुम्बरतायाः फले विधीयमानायाः प्रकरणादाश्रयो लभ्यते, तत्रास्मादेव वाक्यादाश्रयकल्पनायां वाक्यभेदः । पशुयागो हि प्रकृतः, स तावदयोग्यः । यत्र हि गुणः कारकतामापद्यते स आश्रयः । यथा— होमो दध्नः, न चौदुम्बरता शक्नोति यागे कारकीभवितुम् । तदाश्रयत्वे च यूपग्रहणानर्थक्यमनुवादासंभवात् ॥

ननु साध्यांशनिराकरणमप्यस्मिन्नेवाधिकरणे साधनांशनिराकरणोपयोगित्वेनापेक्षितम् । अन्यथा फलवचनमेव [1]विधिनियतत्वादिविशेषात् स्वानर्थक्यपरिहाराय विधिं कल्पयितुं किमर्थमर्थवादरूपमवलम्ब्य विधिं कल्पयित्वा पश्चात्फलं समर्पणीयमिति वाक्यभेददूषणाप्रसरणे वाक्यभेदोक्त्या साधनांशनिराकरणालाभात्[2] । न चार्थवादाभावे विधिरवसीदेदित्यर्थवादत्वकल्पनमावश्यकमिति वाच्यम् । 'ऊर्जोऽवरुद्ध्यै' 'औदुम्बरं यूपं कुर्यात्' इति फलवचनकल्पिते विधौ पशूदुम्बरफलफलिभावौचित्यरूपोपपत्तिसमर्पकेणाप्रोतीत्यन्तेनार्थवादाकाङ्क्षोपशमात् । अतः साधनांशसाध्यांशरूपमुखभेदेनापौनरुक्त्योक्तिरयुक्ता । विनिगमनाविरहादप्ययुक्ता । अत्र साध्यांशविचारः, तत्र साधनांशविचार इति वैपरीत्येन विभागेऽपि सूत्राणां योजयितुं शक्यत्वादित्यस्वरसादाह— **अथ वेति** । 'प्रतितिष्ठन्ति ह वा एता रात्रीरुपयन्ति' इति रात्रिसत्रार्थवादस्य स्तुतिसमर्पकस्यैव फलसमर्पकत्वमप्यङ्गीकृतम्, तथाऽत्रापि किं न स्यादिति शङ्कान्तरनिरासार्थं[3] पर्णमयाधिकरणम् । तथा चोर्गवरोधापापश्लोकश्रवणादिकं परप्रकरणाम्नातं फलविधिसरूपार्थवादजातं सर्वमुभयत्राप्युदाहरणम् । तस्य सर्वस्यापि पर्णमयाधिकरणे प्रधानफलेन फलवत्त्वसंभवात्फलाकाङ्क्षाविरहेण रात्रिसत्रन्यायवैषम्यं दर्शयिष्यते । रात्रिसत्रस्य हि प्रधानस्य फलाकाङ्क्षायामगत्या [4]स्तुत्यर्थस्यैवार्थवादस्य विपरिणामेन फलपरत्वमप्याश्रितम् । किं च गुणफलविधिपक्षे विधीयमानौदुम्बरतायाः सिद्धरूपत्वात्तदनुष्ठेयत्वसिद्ध्यर्थं साध्यरूपाश्रयानुरागमपेक्षते । न चेह तदाश्रयत्वयोग्यं किंचित्साध्यं प्रकरणाल्लभ्यत इति वाक्यादेवाश्रयसंबन्ध एष्टव्यः; तेनैव फलसंबन्धोऽपि बोध्यः; तथा च वाक्यभेदः स्यादित्याह— **न चौदुम्बरताया इति** । ननु 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र दध्नो होम इव प्रकृतपशुयागः प्रकरणादाश्रयो लभ्यत इत्याशङ्क्य स नाश्रयत्वयोग्य इत्याह— **पशुयाग इति** । अयोग्यत्वे हेतुमाह— **यत्र हीति** । [5]ननूदुम्बरस्त्यक्तद्रव्यतया यागस्य कारकीभवत्वित्याशङ्क्याह— **न चेति** । क्रत्वर्थपशुद्रव्यावरोधादिति भावः । ननु क्रत्वर्थस्य पशोः पुरुषार्थेनोदुम्बरेण बाधो [6]भवति; चमसस्य गोदोहनेनेवेत्याशङ्क्याह— **तदाश्रयत्वे चेति** । न च

1. अ. विधिनियतत्वाविशेषात् 2. निराकरणासंभवात् 3. अ. निराकरणार्थं 4. स्तुत्यर्थवादस्य 5. अ. ननु उदुम्बरस्य द्रव्यतया 6. भविष्यति

यत्तु पशुनियोजनं यूपद्वारेण योग्यं तदपि सह यूपेनैवाप्रकृतम्। न च प्रकृतिवच्छब्देन तस्य संनिधिसंभवः। स हि प्राकृतमित्थंभावं सामान्येन संनिधापयति। तत्र न यूपस्य स्वरूपेण विपरिवृत्तिरस्ति। अविपरिवर्तमानं च न शक्नोत्याश्रयाकाङ्क्षां पूरयितुम्। तादृशी च विपरिवृत्तिर्जुह्वादीनामप्यस्तीति तेषामप्याश्रयत्वं स्यात्। तत्र तथैव यूपग्रहणा-

प्रकरणादाश्रयत्वेनान्विते यागे यूपशब्दस्य लक्षणासंभवान्नानर्थक्यमिति वक्तुं शक्यम्, सति गत्यन्तरे लक्षणानौचित्यात्। औदुम्बर इति विकारार्थतद्धितेनोदुम्बरविकारत्वयोग्यद्रव्यविशेषसमर्पणार्थतया तत्समभिव्याहृतस्य यूपशब्दस्य लक्षणयाऽपि यागक्रियामासाद्य निर्वृत्त्यसंभवाच्च। औदुम्बर इत्यत्र कथंचित् संबन्धसामान्यतद्धिताश्रयणेन यूपशब्दस्य लक्षणया यागक्रियार्थत्वोपपादनसंभवेऽपि तद्धितेनोपस्थितस्यौदुम्बरसंबन्धिसामान्यस्य यागरूपविशेषात्मना प्रकरणादेवावगतिसंभवेन यूपग्रहणस्य सर्वथैवानर्थक्याच्च। 'साकं प्रस्थाय हि दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानशे' इत्येतदनन्तरम् औदुम्बरं भवतीत्येतावदेव श्रूयते, प्रकृतस्य दारुपात्रस्यान्वयसंभवात्। एवं तर्हि यूप एव तदाश्रयोऽस्तु। तत्र विकारत्वस्य संभवेन विकारार्थतद्धितस्वारस्याभङ्गान्नियोजकरूपक्रियाविशिष्टतया साध्यत्वस्यापि संभवात् इत्याशङ्क्याह— **यत्त्विति**। पशुनियोजनद्वारा यूपो योग्य इति व्यवधानकल्पनाऽऽश्रयणीया। यद्वा नियोजनं तदाश्रयोऽस्तु। तस्य स्वतः साध्यत्वाद्विशेषणयूपद्वारोदुम्बरत्वोपपत्तेश्चेत्याशङ्कायामिदमुत्तरम्— यूपस्य नियोजनस्य च प्रकरणान्नाश्रयसंबन्धः, अग्नीषोमीयधर्मयोस्तयोस्तद्विकृतौ सौमापौष्णपशावाम्नानाभावादिति दूषिते चोदकप्राप्तस्य तदाश्रयताऽस्त्वित्याशङ्क्याह— **न च प्रकृतिवच्छब्देनेति**। चोदको हि विकृत्यपेक्षी [1]तमखण्डोपकारमतिदिशन् तन्निवर्तकं प्राकृतमङ्गकलापमप्यखण्डोपकारविशेषणतया सामान्यरूपेणातिदिशति; न विशेषरूपेण [2]यूपत्वादिरित्यनेनेति स्वरूपतो यूपादिपरामर्शोऽस्तीति। अतो न चोदकेनाश्रयसंबन्धलाभ इत्यर्थः। ननु विकृतिषु प्राकृतपदार्थानां स्वस्वशास्त्रतो विशिष्याप्युपस्थितिरस्ति। उपकारजनकतया उपकारविशेषणत्वेन पदार्थानामिव पदार्थबोधकतया [3]यूपपदार्थविशेषणत्वेन तत्तच्छास्त्राणामप्यतिदेशस्य सप्तमे विध्यन्तराधिकरणे स्थापितत्वात्। तत्र 'समिदादिशास्त्रं सौर्यशास्त्रस्य वाक्यशेषः संपद्यते' इति तन्त्ररत्नवचनात्पौरोडाशिकं ब्राह्मणं सौर्यादीनां वाक्यशेष इत्यध्याहारात् व्यवहितकल्पना ज्यायसीति च भाष्यकारवचनाच्च दशमे[4] शास्त्रनिर्देशप्रत्याख्यानस्य पदार्थविशेषणतां विना स्वतन्त्रशास्त्रातिदेशविषयत्वस्य तत्रैवोक्तत्वाच्च। एवं चोदकतो विशिष्य प्राप्तस्यैव यूपस्य केवलगुणविधिपक्षेऽप्यनुवादत्वात्। अतश्चोदकप्राप्तस्य यूपस्याश्रयत्वं भविष्यतीत्याशङ्क्याह— **तादृशी चेति**। यादृशी यूपस्य चोदकतो यूपस्योपस्थितिः तादृशी जुह्वादीनाम-

1. प्राकृतं खण्डोपकारकमतिदेशं तन्निवर्तकं 2. यूपाद्यात्मनेति न 3. यूपेति नास्ति। 4. दशमाध्याये शास्त्रातिदेश० 5. यादृशी इत्येतदुत्तरं यूपस्य चोदकतो यूपस्योपस्थितिः इत्यस्य स्थाने चोदकतो यूपस्य स्मृतिः इति पाठः।

नर्थक्यम्। तत्र वाक्येनैवाश्रयसंबन्धे फलसंबन्धे च विधीयमाने वाक्यभेदः। एकदेशिनां तु वाक्येनैवाश्रयसंबन्धं फलसंबन्धं च गुणाधिकारेऽभ्युपगच्छतामिहापि तथैव संभवाद्येक-

प्यस्ति, तेषामुदुम्बरविकारत्वयोग्यताऽप्यस्तीति तेषामप्याश्रयत्वं स्यात्। चोदकस्यैवाश्रयसंबन्धप्रापकत्वेन [1]उच्यमानत्वात्, तस्य जुह्वादिष्वप्यविशिष्टत्वादित्यर्थः। अस्तु को दोषः? न्यायप्राप्तस्य जुह्वादिसाधारण्यस्य प्रत्याख्येयत्वादित्याशङ्क्याह— **तथैवेति**। तथा सति विशिष्य यूपग्रहणमनर्थकम्; यूपशब्दस्य दारुपात्रसामान्ये लक्षणाश्रयणे स एव दोषः, दारुपात्रसामान्यस्याश्रयत्वेनान्वयेऽभिमते व्यावर्तनीयाभावात्। [2]उदुम्बरविकारत्वयोग्यतया तस्य सर्वस्यापि चोदकत एवाश्रयत्वेनान्वयसंभवादौदुम्बरो भवतीत्येतदेव पर्याप्तमिति यज्ञपात्रसामान्यलक्षणयाऽपि यूपग्रहणमनर्थकमिति भावः। [3]औदुम्बरो यूपो भवतीत्यत्र केवलगुणविधावपि चोदकादेव यूपस्य प्राप्तिर्वाच्या। सा गुणफलविधावपि स्यात्, अविशेषादिति चेन्न; केवलगुणविधौ चोदकाद्यूपप्राप्तिमात्रमपेक्ष्य तस्य गुणसंबन्धोऽनेन विधिना बोधनीयः। गुणफलविधिपक्षेऽपि तथाऽभ्युपगमे वाक्यभेदः स्यात्। गुणाश्रयसंबन्धगुणफलसंबन्धरूपबोध्यभेदादिति पूर्वोक्तं स्मारयति— **वाक्येनैवेति**। [4]नन्वेवं च सति दध्नेन्द्रियकामस्येत्यत्रापि वाक्यभेदः स्यात्। न च तत्र प्रकरणेन गुणाश्रयसंबन्धः, विधेस्तु फलसंबन्धमात्रे[5] व्यापार इति वाच्यम्; [6]संनिधापकत्वेन गुणे[7] तत्संबन्धस्यैव वाक्येनैव [8]बोध्यत्वात् इति चेन्मैवम्— प्रकरणस्याश्रय[9]समर्पकत्वेऽपि विनैव वाक्यभेदं तत्संबन्धलाभात्। तथा हि— दध्नेति तृतीयानिर्दिष्टं दधि करणकारकतामापन्नं फलाय विधीयते, न दधिमात्ररूपम्। कारकत्वं च क्रियानिर्वर्तकत्वमिति सिद्धस्तस्य क्रियासामान्यसंबन्धः। अतस्तत्सिद्धक्रियासामान्याकाङ्क्षितविशेषतया प्रकरणेन होममात्रसमर्पणेऽपि [10]सिध्यति तत्र विधिव्यापारं विनैव गुणाश्रयसंबन्धः। अयमर्थो दध्नेन्द्रियकामाधिकरणे स्पष्टं निरूपयिष्यते॥

प्राभाकरास्तु [11]दध्नेन्द्रियकामस्येत्यादौ वाक्येनैव गुणाश्रयसंबन्धस्यापि बोधनं मन्यन्ते। तेषामिहापि तथा स्यात्। तथा च [12]यदस्मिन्नधिकरणे यस्मादुदुम्बरेण पशवो भवन्ति तस्मादौदुम्बरं यूपं कुर्यादित्येवं सस्तुतिकविधिरूपार्थैक्येनैकवाक्यत्वं भवति, आप्नोत्याख्यातद्वयावगम्ययूपोदुम्बरसंबन्धोदुम्बरफलसंबन्धरूपार्थभेदेन [13]वाक्यभेदोऽपि भाति। अनयोर्बलाबलानध्यवसायादप्रामाण्यमिति पूर्वपक्षं कृत्वा यथाविनियोगं नियोग इति संभूयकारित्वस्य बलीयस्त्वसमर्थनेन 'ऊर्ग्वा उदुम्बर' इत्यादेः [14]स्तुत्यर्थत्वाय संबन्धद्वयबोधनं निरस्य सिद्धान्तितम्। दध्नेन्द्रियकामवाक्येनैकेनैव तन्मते संबन्धद्वयबोधनस्याङ्गीकृततया अत्रापि तथा संभवेन पूर्वपक्षानुदयादिति दूषणमाह— **एकदेशिनां त्विति**। अत्र तन्मतानुसारिणः कस्यचित्पूर्वपक्षसंभवोपपादनं दूषयितुमनुवदति— **कश्चि-**

1. गुणविधिवादिनापि उच्यमान० 2. उदुम्बरविकारत्वान्वय० 3. ननु इत्यधिकः 4. अ. नन्वेवमपि 5. फलमात्रे; मात्रं 6. प्रकरणस्याश्रयमात्रसंनिधापकत्वेन 7. गुणेन; गुणेऽपि 8. साध्यत्वात् 9. आश्रयमात्र० 10. समर्पणेन सिद्ध्यति 11. अ. दध्नेन्द्रियकामस्य जुहुयात् इत्यादौ 12. यत् इति नास्ति 13. वाक्यभेदो भावी। 14. स्तुत्यर्थतया

अथेति । अथाभिलाषाविर्भावानन्तरम् । स इत्यध्याहार्यम् । सः शंतनुरदीनां प्रहृष्टामनदीं गङ्गामब्रवीदुक्तवान् । 'ब्रूञ् व्यक्तायां वाचि' इत्यस्माद्धातोर्लङ् । 'ब्रुव ईट्' इतीडागमः । किमित्याह— शोभने भ्रुवौ यस्यास्तस्याः संबुद्धिर्हे सुभ्रु । सुभ्रूशब्दस्य संबुद्धौ ह्रस्वत्वं केचिदिच्छन्ति । तथा कालिदासेनाप्युक्तम्— 'विमानना सुभ्रु कुतः पितुर्गृहे' इति । तथा च भट्टिकाव्येऽप्युक्तम्— 'हापितः कासि हे सुभ्रु' इति । अन्यस्य परस्य पुंसः परिग्रहः पत्नी । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । नासि न भवसि चेत् तर्हि मम राज्यं शरीरं जीवितं च, किं बहुना सर्वं समस्तं त्वदायत्तं त्वदधीनमवेहि जानीहि । अवपूर्वस्य 'इण् गतौ' इत्यस्य धातोर्लोटि 'सेर्ह्यपिच्च' इति ङित्त्वेन गुणाभावादवेहीति रूपम् । कथंचिदाङ्प्रश्लेषेऽपि 'ओमाङोश्च' इति पररूपमेव ॥ २० ॥

**श्रुत्वा वचस्तस्य सुरस्रवन्ती**
**शुचिस्मिता व्याहरति स्म वाचम् ।**
**सुजातदन्तांशुचयच्छलेन**
**प्रकाशयन्ती पयसामिवौघम् ॥ २१ ॥**

श्रुत्वेति । सुरस्रवन्ती सुरापगा गङ्गा तस्य शंतनोर्वचो वचनं श्रुत्वा निशम्य शुचिस्मिता शुभ्रहासा सती सुजातदन्तांशुचयच्छलेन सुन्दरदन्तकिरणसमूहव्याजेन पयसामम्भसामोघम् । 'ओघो वृन्दोऽम्भसां रयः' इत्यमरः । प्रकाशयन्ती प्रकटीकुर्वन्तीव । वाचं व्याहरति स्म उक्तवती । 'व्याहार उक्तिर्लपितम्' इत्यमरः । 'लट् स्मे' इति भूतार्थे लट् ॥ २१ ॥

**प्राप्ता महाराज गृहं त्वदीयं**
**ज्ञेया कदाचिद्भवताऽपि नाहम् ।**
**यत्कर्म कुर्यामसकृद्विरुद्धं**
**तत्रापि नैवास्मि निषेधनीया[1] ॥ २२ ॥**

प्राप्तेति । हे महाराज हे भूपते । 'राजाहःसखिभ्यष्टच्' इति टच् समासान्तः । अहं त्वदीयं त्वत्संबन्धि । 'त्यदादीनि च' इति वृद्धसंज्ञायाम् 'वृद्धाच्छः' इति छः । 'प्रत्ययोत्तरपदयोश्च' इति त्वादेशः । गृहं भवनं प्राप्ता सती भवता त्वया कदाचिदपि न ज्ञेया नावगन्तव्या ।

1. निवारणीया

'का त्वम्' इति त्वया न वक्तव्येत्यर्थः। विरुद्धं लोकवेदविपरीतं यत्कर्म व्यापारमसकृद्बहुशः कुर्यां करवाणि। 'ये च' इत्युकारलोपः। तत्र कर्माणि निषेधनीया निवारणीया नैवास्मि न भविष्यामि 'इदं कर्म मा कुरु' इति त्वया नाहं वक्तव्येत्यर्थः। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यदर्थे लट्॥ २२॥

संविन्ममेयं यदि रोचते ते
यावत्सकाशे निवसामि हृष्टा।
न चेद्भवन्तं चिरसंस्तुताऽपि
त्यक्ष्यामि लक्ष्मीरिव दुर्विनीतम्॥ २३॥

संविदिति। हे महाराज। ममेयं पूर्वोक्ता संवित्प्रतिज्ञा। 'संविदागूः प्रतिज्ञानम्' इत्यमरः। ते तुभ्यम्। 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानसंज्ञायां चतुर्थी। रोचते यदि स्वदते चेत् सकाशे भवत्समीपे यावन्निवसामि निवासं करिष्यामि। 'यावत्पुरा' इत्यादिना भविष्यति लट्। न चेत्, प्रतिज्ञा न रोचते चेदित्यर्थः। चिरं बहुकालं संस्तुता परिचिताऽपि 'संस्तवः स्यात्परिचयः' इत्यमरः। अहं भवन्तं त्वां लक्ष्मीर्दुर्विनीतं दुष्टमिव त्यक्ष्यामि हास्यामि। 'त्यज हानौ' इत्यस्माद्धातोर्लृट्॥ २३॥

ततः प्रतिज्ञाय तथेति राजा
मूर्तामिवाज्ञां मकरध्वजस्य।
रथं नताङ्गीमधिरोप्य हृष्टः
पुरीमगात्पूरुकुलप्रदीपः॥ २४॥

तत इति। ततोऽनन्तरं पूरुकुलप्रदीपः पुरुवंशप्रकाशः शंतनुस्तथेति बाढमिति प्रतिज्ञाय प्रतिश्रुत्य मकरध्वजस्य मदनस्य मूर्तां साकारामाज्ञामिव स्थितां नताङ्गीं गङ्गाम्। 'अङ्गगात्र' इति ङीप्। रथं स्यन्दनमधिरोप्य प्रापय्य हृष्टः सन् पुरीं हास्तिननगरीमगात् प्रापत्। 'इणो गा लुङि' इति गादेशः॥ २४॥

अन्तः प्रसर्पन्मृगनाभिगन्धे-
ष्वनर्घरत्नद्युतिरञ्जितेषु।

हर्म्येषु चिक्रीड सराजहंसा
गङ्गा हिमाद्रेरिव गह्वरेषु[1] ॥ २५ ॥

अन्तरिति । राजहंसेन राजश्रेष्ठेन राजहंसैः कलहंसैश्च सह वर्तत इति सराजहंसा । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सहशब्दस्य सभावः । 'राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोः' इति शाश्वतः । गङ्गा भागीरथी अन्तर्मध्ये प्रसर्पन् प्रसरन् मृगनाभिगन्धः कस्तूरीपरिमलो येषां तेषु । 'मृगनाभिर्मृगमदः कस्तूरी च' इत्यमरः । अनर्घाणाममूल्यानां रत्नानां मणीनां द्युतिभिर्दीप्तिभिः रञ्जितेषु रूपितेषु हर्म्येषु सौधेषु । 'हर्म्यादि धनिनां वासः' इत्यमरः । हिमाद्रेर्हिमवतो गह्वरेषु गुहास्विव । 'देवखातबिले गुहा गह्वरम्' इत्यमरः । चिक्रीड क्रीडितवती । हर्म्यविशेषणद्वयं गह्वरपक्षेऽपि योज्यम् । 'क्रीड विहारे' इत्यस्माद्धातोर्लिट् ॥ २५ ॥

अस्याः स्वभावैर्मधुरैर्हृतात्मा
न जातु सस्मार निजावरोधान् ।
सा चास्य भेदैरुपलालनानां
संप्रीयमाणा सरितामधीशम् ॥ २६ ॥

अस्या इति । शंतनुरस्या गङ्गायाः मधुरैर्हृद्यैः स्वभावैः शीलैः सद्वृत्तैरित्यर्थः । हृतात्मा हृतचित्तः सन् निजावरोधान् निजाः स्वकीया येऽवरोधाः ; लक्षणया अन्तःपुरस्त्रिय इत्यर्थः । 'अवरोधो राजगृहे शुद्धान्तेऽप्यवरोधने' इति रत्नमालायाम् । तान् जातु कदाचिन्न सस्मार, न स्मृतवान् । सा च गङ्गा अस्य राज्ञ उपलालनानामाश्वासनानां भेदैः प्रकारैः संप्रीयमाणा संतुष्यन्ती । प्रीयतेर्दैवादिकाच्छानच् । सरितां नदीनामधीशमधिपतिं न सस्मार । 'अधीगर्थ' इति शेषे षष्ठीविधानादत्र न भवति । 'स्मृ चिन्तायाम्' इत्यस्माल्लिट् । जलधिः सर्वनिम्नगाभर्तृत्वात् गङ्गाया अपि पतिर्भवति । एतेनानयोरत्यन्तानुरागः कथितः ॥ २६ ॥

क्रमेण [2]तान्सप्त नवेन्दुकल्पा-
न्सूत्वा सुतानप्सु समुत्सृजन्तीम् ।
स्निग्धः परित्यागभयात्स तूष्णी-
मपारयन्वारयितुं बभूव ॥ २७ ॥

---

1 कन्दरेषु 2 तां

क्रमेणेति । नवेन्दुकल्पान् अभिनवचन्द्रसदृशान् । 'ईषदसमाप्तौ' इति कल्पप्प्रत्ययः । सप्त सप्तसंख्याकान् सुतान् पुत्रान् क्रमेण पर्यायेण सूत्वा प्रसूय तान् सुतानप्सु वारिषु समुत्सृजन्तीं विमुञ्चन्तीं गङ्गां परित्यागभयाद्धेतोर्वारयितुं निरोद्धुमपारयन्नशक्नुवन् स्निग्धो वत्सलः । 'श्रीमान् स्निग्धस्तु वत्सलः' इत्यमरः । स राजा तूष्णीं बभूव जोषमास्थितः ॥ २७ ॥

**अथाष्टमं पुत्रमसौ प्रसूतं**
**निहन्तुकामा किल वत्सलेन ।**
**संत्यज्य तत्प्रेम च संविदं च**
**निवार्यमाणा जगदे नृपेण ॥ २८ ॥**

अथेति । अथानन्तरमसौ गङ्गा प्रसूतं जातमष्टममष्टानां पूरणम् । 'तस्य पूरणे डट्' 'नान्तादसंख्यादेर्मट्' इति मडागमः । पुत्रं निहन्तुं कामो यस्याः सा निहन्तुकामा हिंसितुमनाः सती । किलेत्यलीके । 'समानकर्तृकेषु तुमुन्' 'लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि' इति मकारलोपः । वत्सलेन प्रेमवता । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । नृपेण राज्ञा तत्तादृशं प्रेम स्नेहं च संविदं प्रतिज्ञां च संत्यज्य त्यक्त्वा निवार्यमाणा निरुध्यमाना सती जगदे उक्ता । कर्मणि लिट् ॥

**का त्वं नृशंसाऽसि शिशुं किमर्थं**
**हन्तुं प्रवृत्ता कुलतन्तुमेनम् ।**
**सुतेषु सप्तस्वपि तादृशेषु**
**हतेषु ते हन्त न तृप्तिरासीत् ॥ २९ ॥**

का त्वमिति । त्वं का का वा नृशंसा घातुकाऽसि । 'नृशंसो घातुकः क्रूरः' इत्यमरः । कुलतन्तुं कुलाङ्कुरमेनं शिशुं हन्तुं हिंसितुं किमर्थं प्रवृत्ता उद्युक्ताऽसि । तादृशेषु तथाविधेषु अतिसुन्दरेष्वित्यर्थः । 'त्यदादिषु दृशोऽनालोचने कञ्च' इति कञ्प्रत्ययः । 'आ सर्वनाम्नः' इत्याकारः । सप्तस्वपि सुतेषु हतेषु निबर्हितेषु सत्सु ते तव तृप्तिर्नासीत् । नेत्यत्र काकुः । हन्तेति खेदे ॥

**[1]अमुं [2]कुमारं कृपयाऽऽर्द्रचेता**
**ददासि मे यद्यनवद्यमूर्तिम् ।**

---

1 इमं 2 दययाऽऽर्द्रचेता

[1]श्रेयश्च ते साध्वि विनैव यत्नं
कुलं कुरूणां च भवेद्गरीयः ॥ ३० ॥

अमुमिति । हे साध्वि हे साधुवृत्ते । 'साधुर्वार्धुषिके चारौ सज्जने चापि चान्यवत्' इत्यमरः । कृपया दयया आर्द्रचेताः सरसचित्ता सती अनवद्या निर्दोषा मूर्तिर्यस्य तथोक्तममुं कुमारं मे मह्यम् । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानसंज्ञायां चतुर्थी । ददासि यदि यच्छसि चेत्तर्हि यत्नं विनैव यत्नाभावेनेत्यर्थः । 'पृथग्विना' इत्यादिना तृतीयाया वैकल्पिकत्वादत्र द्वितीया । ते तव श्रेयश्च सुकृतं च स्यात् । कुरूणां कुरुवंश्यानाम् 'कुरुनादिभ्यो ण्यः' इति विहितस्य तद्राजप्रत्ययस्य 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति लुक् । कुलं च गरीयो गुरुतरं भवेत् । गुरुशब्दादीयसुन्प्रत्यये 'प्रियस्थिर' इत्यादिना गुरुशब्दस्य गरादेशः ॥ ३० ॥

स्मित्वा ततः सा निजगाद भूपं
नृसिंह नैवास्मि नृशंसवृत्तिः ।
जानीहि शुद्धिं जगतां दिशन्तीं
भागीरथीं मां भवमौलिभूषाम् ॥ ३१ ॥

स्मित्वेति । ततोऽनन्तरं सा गङ्गा स्मित्वा ईषद्धासं कृत्वा भूपं भूपतिं निजगाद । किमित्याह— सिंह इव ना नृसिंहः ; उपमितसमासः ; तस्य संबुद्धिः हे नृसिंह हे नरश्रेष्ठ, अहं नृशंसवृत्तिर्घातुकवृत्तिर्नैवास्मि । किं तु मां जगतां लोकानां शुद्धिं दिशन्तीं यच्छन्तीम् । 'स्मृता जन्मशतं पापं हन्ति गङ्गा कलौ युगे' इति स्मरणात् । भवमौलिभूषां शंभुशिरोभूषणभूतां भागीरथीं गङ्गां जानीहि अवगच्छ । 'ज्ञा अवबोधने' इत्यस्य क्रैयादिकस्य धातोर्लोट् । 'ज्ञाजनोर्जा' इति जादेशः ॥

गङ्गा चेत् त्वमत्र मानुषरूपं किमर्थमुपगताऽसीत्यत्राह—

वसुः कदाचिद्विधिचोदितायाः
कश्चिन्निदेशान्निजधर्मपत्न्याः ।
सहेतरैः सप्तभिराश्रमस्थां
मुनेर्वसिष्ठस्य जहार धेनुम् ॥ ३२ ॥

---

1 विनैव यत्नं सुकृतं हि ते स्यात्

वसुरिति । कदाचिज्जातुचित् कश्चिद्वसुः देवताविशेषः । 'देवभेदे रवौ रश्मौ वसुः' इत्यमरः । विधिचोदितायाः दैवप्रेरितायाः निजधर्मपत्न्याः स्वगृहिण्या नियोगाद्धेतोः । धर्मपत्न्या इत्यत्राश्वघासादिवत्तादर्थ्ये षष्ठीसमासः, प्रकृतिविकारभावाभावात् । इतरैरन्यैः सप्तभिर्वसुभिः सह तैः सहित इत्यर्थः । 'सहयुक्तेऽप्रधाने' इति तृतीया । वसिष्ठस्य मुनेर्महर्षेराश्रमे तिष्ठतीत्याश्रमस्था । 'सुपि स्थः' इति कप्रत्ययः । 'स्थे च भाषायाम्' इत्यलुको निवृत्तिः । तां धेनुं कामधेनुं जहार अपहृतवान् ॥ ३२ ॥

महर्षिणा दिव्यदृशा निरीक्ष्य
क्रुद्धेन मर्त्या भवतेति शप्ताः ।
शापान्तमेनं प्रणतिप्रशान्त-
मप्राक्षुरष्टौ स च ताञ्शशास ॥ ३३ ॥

महर्षिणेति । दिव्यदृशा दिव्यदृष्ट्या निरीक्ष्य ; वसवो मे धेनुमपहृतवन्त इति ज्ञात्वेत्यर्थः । क्रुद्धेन कुपितेन महर्षिणा वसिष्ठेन मर्त्या मनुष्या भवत मनुष्यलोके जायध्वमिति शप्ता अष्टौ वसवः । 'अष्टाभ्य औश्' इति जस औशादेशः । प्रणतिः प्रणामस्तया प्रशान्तं शमोपेतं त्यक्तकोपमित्यर्थः । एनं वसिष्ठं शापान्तं शापावधिम् अप्राक्षुः पृष्टवन्तः । पृच्छेर्लुङ् । दुह्यादिपाठाद्द्विकर्मकत्वम् । स च मुनिः तान् वसून् शशास आदिदेश ॥ ३३ ॥

किमादिष्टवानित्यत्राह—

मा भैष्ट यूयं भुवि जातमात्रा
निन्द्यं वपुस्त्यक्ष्यथ मानुषं तत् ।
यो वः स्वभार्यावशगः स पापी[1]
मर्त्यश्चिरं स्त्रीविमुखश्च जीवेत् ॥ ३४ ॥

मा भैष्टेति । हे वसवः, यूयं मा भैष्ट मा भीतिं व्रजत । 'ञिभी भये' इत्यस्माद्धातोः 'माङि लुङ्' इति लुङ् । 'न माङ्योगे' इत्यडभावः । भुवि भूलोके जातमात्राः उत्पन्ना एव । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । निन्द्यं गर्ह्यं मानुषं मनुष्यसंबन्धि तद्वपुः शरीरं त्यक्ष्यथ ।

1 पापो

किं तु वो युष्माकं मध्ये यो वसुः स्वभार्यावशगः स्वपत्नीवशं गतः पत्नीनिदेशादग्रेसरो भूत्वा यो धेनुं हृतवानित्यर्थः। 'अन्यत्रापि दृश्यते' इति गमेर्डप्रत्ययः। पापी पापिष्ठः स वसुर्मर्त्यो मनुष्यो भूत्वा स्त्रीविमुखः स्त्रीसङ्गरहितः सन् चिरं बहुकालं जीवेत् प्राणान् धारयेत्। 'जीव प्राणधारणे' इत्यस्माल्लिङ् ॥ ३४ ॥

**इत्थं नियुक्तान्मुनिपुंगवेन**
**विरिञ्चिलोकाद्विहितावतारा ।**
**दिनप्रदीपानिव दीनभासो**
**दृष्ट्वा वसूनब्रवमभ्रमार्गे ॥ ३५ ॥**

इत्थमिति। हे राजन्, इत्थम् अनेन प्रकारेण। 'इदमस्थमुः' इति थमुप्रत्ययः। मुनिपुंगवेन मुनिश्रेष्ठेन। 'वृषश्रेष्ठौ तु पुंगवौ' इति रत्नमालायाम्। नियुक्तानादिष्टान्। दीनभासो दीनप्रभान् अत एव दिने दिवसे प्रदीपानिव स्थितान्वसून्विरिञ्चिलोकाद्ब्रह्मलोकाद्विहितः कृतोऽवतारोऽवतरणं यया सा तथोक्ता सती। 'अवे तॄस्त्रोर्घञ्'। अभ्रमार्गे आकाशमार्गे दृष्ट्वा अब्रवमवोचम्। ब्रूञो लङि उत्तमपुरुषैकवचनम् ॥ ३५ ॥

किमुक्तवतीत्यत्राह—

**वत्साः शुचा तावदलं कदाचि-**
**त्सरोजयोनेः सदसि स्थितायाः ।**
**उदक्षिपन्मे मरुदुत्तरीयं**
**प्रवाहमूर्तेरिव पार्श्वफेनम् ॥ ३६ ॥**

वत्सा इति। हे वत्साः हे पुत्रकाः। 'वत्सौ तरुणपुत्रकौ' इत्यमरः। तावत्साकल्येन। 'यावत्तावच्च साकल्ये' इत्यमरः। शुचा शोकेनालम्। अलमिति वारणेऽव्ययम्। 'वारणार्थेन योगे केचित्' इति तृतीया। 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः। कथान्तरं कथयति— कदाचिज्जातु सरोजयोनेः कमलासनस्य सदसि सभायां स्थिताया ममोत्तरीयं वसनं प्रवाहमूर्तेः प्रवाहरूपाया मे पार्श्वे स्थितं फेनं डिण्डीरमिव। 'मरुतौ पवनामरौ' इत्यमरः। उदक्षिपदुत्क्षिप्तवान्। 'क्षिप प्रेरणे' इत्यस्माल्लङ् ॥ ३६ ॥

कलामिवेन्दोश्चलदंशुकान्तां
महाभिषङ्गामवलोक्य राजा ।
हृष्टः कुमुद्वानिव तत्र सर्वे
निमीलिताः पङ्कजवत्सलज्जाः ॥ ३७ ॥

**कलामिति ।** चलदंशुकान्तां चलच्चेलाञ्चलां चलन्तो येंऽशवः किरणास्तैः कान्तां रम्यामिन्दोश्चन्द्रस्य कलामिव महाभिषक्संज्ञो राजाऽवलोक्य दृष्ट्वा कुमुद्वान् कुमुदप्रायो देश इव हृष्टस्तुष्टो विकासितश्च । 'कुमुदनडवेतसेभ्यो ड्मतुप्'। 'कुमुद्वान् कुमुदप्राये' इत्यमरः । तत्र सदसि सर्वे जनाः सलज्जाः सन्तः पङ्कजवत्पङ्कजैस्तुल्यम् । 'तेन तुल्यम्' इति वतिप्रत्ययः । निमीलिता निमीलितनेत्राः । नेत्राणि मुकुलितानि चाभूवन्नित्यर्थः ॥ ३७ ॥

पितामहस्तं मयि बद्धभावं
शशाप कोपस्फुरिताधरोष्ठः ।
स्थाने त्वया नेदमकारि राज-
न्धीरेण भूत्वा कुलभूभृतेव ॥ ३८ ॥

**पितामह इति ।** पितामहो ब्रह्मा । 'अथाब्जयोनौ पितृताते पितामहः' इति रत्नमालायाम् । कोपेन स्फुरितोऽधरोष्ठो यस्य स तादृशः सन् मयि बद्धभावं बद्धाभिप्रायम् । 'भावोऽभिप्राय आशयः' इत्यमरः । तं महाभिषजं शशाप शप्तवान् । हे राजन्, हे महाभिषक् । 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेधः । कुलभूभृता कुलपर्वतेनेव धीरेण धैर्यगुणयुक्तेन भूत्वा स्थितेन त्वया इदं कार्यमकारि कृतम् । कर्मणि लुङ् । न स्थाने न युक्तम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः ॥ ३८ ॥

तदत्र दैवाद्गमितो विकारं
भूयोऽपि भूमौ भज मर्त्यभूयम्[1] ।
इयं च दुग्धाब्धिमिव द्वितीयं
दिवोऽवतीर्णा रमयिष्यति त्वाम् ॥ ३९ ॥

---

1 मर्त्यभावम्

## ॥ तृतीय आश्वासः ॥

कन्दर्पं दहता हरेण सहसा भग्नस्ववाञ्छां निजं
निन्दन्तीं हृदयेन रूपविभवं स्वात्मानुरूपं पतिम् ।
वाञ्छन्तीं महते व्रताय कलितोद्योगामुवाचात्मजां
मेना तीव्रतपःश्रमाद्विरम हे पुत्रीति सौम्यं वचः ॥ १ ॥

क्व ते वपुरनीदृशाश्रमपदं क्व तादृक् तपः
स्वभावकठिनं ततो विरम संभ्रमात्तापसात् ।
इति स्वजननीवचोऽप्यननुसृत्य गौरी गुरो-
रुपागमदनुज्ञया शिखरमस्य तप्तुं तपः ॥ २ ॥

अथाहार्यसमानधैर्या बालारुणारुणं वल्कलं परिदधाना नीलालकैरिव जटाकलापैरपि प्रकाशमानवदनाम्बुजा कमनीयकनककाञ्च्येव त्रिगुणया मौञ्ज्याप्यलंकृता अवलम्बिताक्षसूत्रपाणिः नियमनिवर्तितपुष्पशय्या केवलस्थण्डिलशायिनी हरिणाङ्गनास्वर्पितस्वदृग्विलासन्यासा निजकरकमलोपनीतैः कुम्भस्तनपयोभिः सुतानिर्विशेषं संवर्धयन्ती बालपादपानारण्यकबीजाञ्जलिदानोपलालितविस्रब्धहरिणशावा तपोनियमदिदृक्षोपयातमुनिजनाभिनन्दितचरिता उत्सृष्टपरस्परवैरसत्त्वालंकृतपावनतपोवना अनवेक्षितनिजशरीरसौकुमार्या गिरिराजकुमारी दुष्करं तपः कर्तुमुपचक्रमे ॥

प्राप्ता कन्दुकसेवनादपि यया क्लान्तिः सुतन्वा तया
　　पार्वत्या नियमोपवासकठिनं प्राप्तं मुनीनां व्रतम् ।
स्थित्वा वह्निचतुष्टयस्य महतो मध्ये तयाऽनन्यदृ-
　　ग्गत्या सम्यगवैक्ष्यतानुदिवसं भास्वाञ्जितस्वप्रभः ॥ ३ ॥

सवितृकिरणतप्तं तन्मुखं पङ्कजस्य
　　श्रियमभजत तस्याः पारणा वृक्षवृत्तिः ।
तपनहुतवहाभ्यां तप्तमूर्तिस्तपान्ते
　　क्षितिरिव नववर्षैरुक्षितोष्णं व्यमुञ्चत् ॥ ४ ॥

क्षणं स्थित्वा पक्ष्मस्वथ लघु निपीड्याधरदलं
　　ततो वक्षोजोर्ध्वस्थलपतनचूर्णीकृतिभृतः ।
स्खलित्वास्या रम्याकृतिवलिषु पश्चाच्च तिसृषु
　　प्रपन्नास्तं नाभीकुहरमथ नूत्नाम्बुपृषताः ॥ ५ ॥

सा संत्यक्तनिकेतभूमिवसतिर्निन्ये क्षपा हैमनी-
　　रन्योन्योज्झितयोगयोः कृतदया युग्मे रथाङ्गाह्वयोः ।
किं चाकण्ठनिमग्नमूर्तिरुदके वक्त्राम्बुजेन स्फुटं
　　संतानं हिमविक्षताम्बुजनुषामन्तश्चकाराम्भसाम् ॥ ६ ॥

विशीर्णपर्णवृत्तिता तपःस्थितेर्गरीयसी
　　यतस्तया समुज्झिता ततस्त्वपर्णिताख्यया ।

मृणालिकामृदु स्वकं शरीरकं विकर्शिनी
तपस्विभिर्दुराकैः कृतं तपो न्यचीकरत् ॥ ७ ॥

अथाजिनवासाः ब्रह्ममयेन तेजसा ज्वलन् जटिलः मूर्तिमानिव प्रथमाश्रमः कश्चिद्द्विजवटुः पावनं गिरिजातपोवनं प्रविवेश ॥

अतिथिमुपगतं तं पूजया प्रत्युदस्था-
द्गिरिवरतनयैतत्कालिपतां सत्क्रियां सः ।
अतिथिरपि गृहीत्वा साधु विश्रम्य किंचि-
न्मृदुवचनमुवाच प्रेक्षमाणोऽद्रिकन्याम् ॥ ८ ॥

लभ्यन्ते समिधः कुशान्यपि वने नियतमप्याप्यते
स्नानार्थं सलिलं च निःश्रममपि त्वच्छक्त्यपेक्षं तपः ।
अप्यासामिह वीरुधां त्वदधरच्छायं प्रवालं नवं
त्वन्नीतोदकसंभृतं तव मनोऽप्येष्वेषु सप्रीतिकम् ॥ ९ ॥

मुनीनामप्येतत्तव चरितमाचार्यकपदं
त्वदीयैः सौशील्यैर्भवति परिपूतो गिरिवरः ।
अयं धर्मः सारो भवति भवती निर्विषयया
यदेकं धीवृत्या भजति सकलात्मानमनिशम् ॥ १० ॥

नान्यं मां प्रतिपत्तुमर्हसि यतस्त्वत्सत्कृतोऽहं बुधाः
सख्यं साप्तपदीनमाहुरधिका क्षान्तिस्तवाहं द्विजः ।

प्रष्टुं त्वां कृतनिश्चयोऽस्मि चपलः केनेप्सितेन त्वया
दुःसाधं कुलजातया सुवपुषा बाले तपस्तप्यते ॥ ११ ॥

स्यादेतत्खलु दुःसहादपि महानिष्टात्तदप्यत्र न
त्वय्यस्मन्मनसा विचारपदवीमारोढुमप्यक्षमम् ।
त्यक्तान्याभरणानि वल्कलमिदं वासो धृतं यौवने
वृद्धत्वोचितमिच्छसि त्वमथ चेत्स्वर्गं स भूमिः पितुः ॥ १२ ॥

विवोढारमिच्छस्यथालं तपोभि-
स्तव प्रार्थ्यमेतद्भविष्यत्यमोघम् ।
स्थितो यो हृदब्जे तवासौ पुरस्ता-
दुपेक्षाकरः को जटासु स्फुटासु ॥ १३ ॥

त्वामत्यन्तविकर्शितामतनुभिस्तीव्रैर्मुनीनां व्रतै-
र्लेखां चान्द्रमसीं दिवाकरकरप्लुष्टामिवोत्पश्यतः ।
चित्तं कस्य न दूयते समनसो यश्चक्षुषो गोचरः
पूर्वोपार्जितपुण्यमस्ति मम तत्पुण्यार्धभाक्त्वं भव ॥ १४ ॥

अथ तेन द्विजातिना अभिहितया तया स्वयमेव स्वमनोरथं शंसितुमशक्तया विवर्तितानञ्जनलोचनमवेक्षिता पार्श्ववर्तिनी सखी तं द्विजन्मानमित्थमाचचक्षे ॥

निबोध सुतनोरिमं द्विज मनोरथं यत्तया
तपः कठिनमास्थितं कमलकोमलाङ्ग्या भृशम् ।
चतुर्दिगधिपानपि प्रबलसंपदोऽवज्ञया
विहाय वृषवाहनं पतिमवाप्तुमिच्छत्यसौ ॥ १५ ॥

पुरा पुरारिहुंकृतिप्रभावतो निवर्तितः
शिलीमुखो वृथामुखो यदा प्रसूनधन्वनः ।
तदादि भामिनीमिमां भृशं क्षिणोति स क्रुधा
तदाप्रभृत्यसावपि गृहे पितुर्न सौख्यभाक् ॥ १६ ॥

सा शंभोश्चरितेऽत्र किंनरवधूगीते सबाष्पं स्खल-
द्वर्णं शैलकुमारिका विवृणुते शश्वन्मनोवेदनाम् ।
किं चेयं रजनीषु नेत्रयुगलं सद्यो निमील्य द्रुतं
बुद्ध्वा लक्ष्यविवर्जितं बहु वदत्यस्थानकालं वचः ॥ १७ ॥

सर्वज्ञः कथितः सदाऽसि विबुधैर्नो वेत्सि भावस्थितां
मामित्युल्लिखितो हरो हिमगिरेः पुत्र्योपलब्धोऽभवत् ।
सा तस्याधिगमे हरस्य न यदाऽपश्यद्विधानं तदा
कुर्वाणा विचयं परं पितृमतात्प्राप्ता तपोऽर्थं वनम् ॥ १८ ॥

तदनु स द्विजनुः कदा वा सुतनुमिमां शशिशेखरः समाश्रयिष्यत इति इङ्गितज्ञया सख्या निवेदितः अयीदमित्थमेवेत्युमामप्राक्षीत् ॥

हस्ताग्रे मुकुलीकृताङ्गुलिनि सा बिभ्रत्यथाक्षस्रजं
यत्नेनातिगरीयसा नियमतोऽवस्थाप्य वाचं जगौ ।
विप्रेदं भवता यथाश्रुतमयं वाञ्छत्यलभ्यं जनो
हेतुस्तस्य तपः किलेदमतटाः पूरा मनःसंपदाम् ॥ १९ ॥

अथ स कपटवर्णी तामिदं प्रत्युवाच
त्वदभिलषितमर्थं वेद्मि ते शूलपाणौ ।
अभिरतिरिति शीलं किं तु तस्यातिघोरं
निजमनसि विचिन्त्य त्वामहं नानुवर्ते ॥ २० ॥

त्वं तावत्सुकुमारमङ्गलतनुर्वैवाहिके मङ्गले
पाणिस्ते कमनीयकङ्कणधरश्चण्डाहिसंवेष्टितम् ।
पाणिं भूतपतेः क्षमेत कठिनं पाणिग्रहे तेन ते
वासः क्षौममिभाजिनं पशुपतेरार्द्रं स्रवच्छोणितम् ॥ २१ ॥

पादौ पल्लवकोमलौ तव पुनः केशास्थिखण्डादिभि-
र्घोरे भूतपतेर्निवासभवने स्पर्शं सहेतां कथम् ।
किं चैतत्तव दुःसहं मलयजालेपास्पदे वक्षसि
प्रातर्वैकृतभस्मलाञ्छनदृशां हास्यं सखीनां मिथः ॥ २२ ॥

एषाऽन्या च विडम्बना तव यदुद्वाहे गजारोहणे
कर्तव्ये जरठोक्षवाहनमधिष्ठास्यं तमेनं त्वया ।

साकं भूतपतिं विलोक्य सहसा स्मेराननाः सर्वतः
सावज्ञं परिहासमागतजनाः सर्वे करिष्यन्त्यपि ॥ २३ ॥

समागते पिनाकिना तव द्वयं वृथा भवे-
त्कला च चान्द्रमस्यथ त्वमप्यशेषकौमुदी ।
वपुर्विरूपनेत्रकं न दृश्यते च जन्मभू-
र्धनं दिगम्बरत्वकृत्सुदुर्लभो वरो ह्यसौ ॥ २४ ॥

निवर्तय मनस्ततः सुदति तादृशाच्छूलिनः
क्व च त्वमतिसुन्दरी क्व नु स तादृशो धूर्जटिः ।
इति द्विजनुषोदिता हिमवतः सुता विप्रियं
कृतभ्रुकुटिकम्पिताधरमवोचदेनं प्रति ॥ २५ ॥

न त्वं वेत्सि यथार्थतो द्विज हरं यस्मादिदं भाषसे
लोके मन्दधियो द्विषन्ति महतां लोकोत्तरं चेष्टितम् ।
उद्दिश्येष्टमनिष्टहानिमपि वा सेव्यं शुभं कर्म त-
न्न प्रार्थ्यं जगदीश्वरस्य महतः सच्चित्सुखैकात्मनः ॥ २६ ॥

सर्वासामपि संपदां स्मरहरो दाता जगन्नायको
याथार्थ्यं न विदन्ति तस्य महतो देवस्य सर्वे जनाः ।
अस्त्वेतस्य सुभूषणं वपुरथो नद्धाहिकृत्त्यावृतं
रम्यक्षौममथेन्दुशेखरमथो कापालिकं वाऽस्तु तत् ॥ २७ ॥

तद्भस्मातिविशुद्धमस्य वृषभो वाहोऽपि दिग्वारणा-
हंकारस्य निवारणे पटुतरो वैमानिकैः पूज्यते ।
दोषं तत्र विवक्षया स्मरहरे साधूदितं तत्त्वया
यद्देवस्य सनातनस्य जनिभूर्नास्तीति विप्रोत्तम ॥ २८ ॥

यथातथाऽस्तु वा शिवः प्रभुर्ममायमेव मे
मनः स्थिरं हरे वृथा द्विजात्र दोषवर्णनम् ।
इति ब्रुवन्त्यसौ सखीमुवाच पार्वती बटु-
र्निवार्यतामसत्कथा श्रुता हि पापकारिणी ॥ २९ ॥

गमिष्याम्यथ वा स्थानादस्मादिति चचाल सा ।
ततः स्वरूपमास्थाय तत्र संनिधते हरः ॥ ३० ॥

आलोक्यैनं गिरीशं हिमगिरितनया वेपमानाङ्गयष्टिः
पादं सोत्क्षेप्तुकामा पथि गिरिरचितस्वोपरोधा नदीव ।
नो तस्थौ नो ययौ वा तदनु भगवता सोदिता ते तपोभिः
क्रीतो दासोऽहमस्मीत्यथ नियममसावुत्ससर्जात्तकामा ॥३१॥

अथाद्रिकन्यका सखीं हराय संदिदेश सा
पिता ममाचलाधिपः प्रदायको नु याच्यताम् ।
इतीरिता सखी शिवं जगाद तत्तथा हरो
मुनीनचिन्तयत्तदा स सप्त तत्र तैजसान् ॥ ३२ ॥

कोकिलकः—

द्वारस्थं मां विमुञ्चेति प्रभुं ब्रूहीति तत्प्रियम् ।
तं प्रभुं शंकरोऽस्मीति कुक्षये स्तौति दुष्कविः ॥ ५६ ॥

पिङ्गलकः—

नामान्तरनिर्देशेन श्लोकमेकं कविब्रुवः ।
नानाप्रभुसभारङ्गे वक्ति दुस्तुन्दपूर्तये ॥ ५७ ॥

कोकिलकः—

अधुना कवयामीति चिन्तामभिनयन्क्षणम् ।
पद्यं पूर्वकृतं ब्रूते प्रतिष्ठायै कविब्रुवः ॥ ५८ ॥

पिङ्गलकः—

तुष्यत्यविदिते लोकैः कवित्वान्तरचोरणे ।
ज्ञाते संवाद एवेति मन्दं भणति दुष्कविः ॥ ५९ ॥

कोकिलकः—

आत्मनो जडता यत्र तद्यत्नेन विनिन्दति ।
विक्रयाज्जीवति गिरामलं दुष्कविवाणिजः ॥ ६० ॥

पिङ्गलकः— सखे न सांप्रतमिह स्थातुम् । यन्नेपथ्यार्थप्रविष्टौ कन्दलकसुन्दरकौ ।

कोकिलकः— तदेहि ।

इति निष्क्रान्तौ ॥

इति डमरुके निबन्धने चतुर्थोऽलंकारः समाप्तः ॥

---

## ॥ अथ पञ्चमोऽलंकारः ॥

ततः प्रविशति कन्दलकेनानुगम्यमानः सुन्दरकः ॥

**सुन्दरकः**— सखे मा विलम्बिष्ठाः । यदभिहितं गुरुपादैरबोधाकरं नाम प्रबन्धमनुसंधत्स्वेति ।

**कन्दलकः**— (स्वगतम्) साधु युक्तरूपमुक्तम् ।

वयं तत्प्रणतेः कर्मीकुर्महे शर्महेतवे ।
यन्मुखैर्द्वादशाब्जेव भाति काऽपि सभानदी ॥ ६१ ॥

**सुन्दरकः**—

कीलालवर्णा कृतवर्णवर्णा स्थानं सदा स्थानसदोष्णताका ।
करीरशब्दग्रहपीवरे या वरा परिव्राजकलोचनस्य ॥ ६२ ॥

**कन्दलकः**—

तान्पाण्डुरस्याघवहान्निहन्तु झषक्षितिक्षित्पुटभेदनान्तम् ।
बिभ्रत्पुरः शब्दगृहं सशङ्कुश्चक्रे समीपं धृतचक्रसूनुः ॥ ६३ ॥

**सुन्दरकः**—

भूभूपतिः प्राक् शिशिरोऽथ कृष्णो मयूरसाष्टापदसिंहजुष्टम् ।
स्वपुत्रमात्रे युधि संजहार चाणूरजित्पूर्वजजिष्णुतातम् ॥ ६४ ॥

**कन्दलकः**—

पत्रिपत्रो निहन्त्वेष यौष्माकीणमघाकरम् ।
सिन्धुमित्रप्रसूभर्तृकन्यापत्यङ्गजानुजः ॥ ६५ ॥

**सुन्दरकः**—

अनयानो घटश्रोत्रदायादो बलवान्घटः ।
हन्तुं शालावृकान्प्रापदल्पकुक्षिप्रियाज्ञया ॥ ६६ ॥

कन्दलकः—

अयं मामभ्यवहरेचक्रीत्येष प्लवंगमः ।
औतुजेमनव······नां क्षयनिर्व्याधनं गतः ॥ ६७ ॥

सुन्दरकः—

घनध्वनिखगध्वस्ताः सहपङ्क्तिशताङ्गजाः ।
सालावृकादरपराः परावृतिरेतराम् ॥ ६८ ॥

कन्दलकः—

नीलबाहुगदाक्रान्ता दुःखमण्डचतुष्टये ।
आत...तानि कायस्था पूतना मता ॥ ६९ ॥

सुन्दरकः—

अजादक्षेक्षणापीडः पीडां पीडयतां स वः ।
शुचिभूभृङ्गिस्तुद्विद्विजास्या यमुपासते ॥ ७० ॥

कन्दलकः—

सद्यः खण्डयतां देवी शिवास्माकारिमण्डलम् ।
···दुग्धधरं यस्या गौरनेत्रो महा नमः ॥ ७१ ॥

(नेपथ्ये कलकलः)

सुन्दरकः— (विलोक्य) सखे कपिञ्जलमञ्जुलकौ प्रहृष्टौ कुतोऽपि चिरमिहागच्छतः । तदिहस्थौ न भवावः ॥

इति निष्क्रान्तौ ॥

इति डमरुके निबन्धने पञ्चमोऽलंकारः समाप्तः ॥

## ॥ अथ षष्ठोऽलंकारः ॥

ततः प्रविशतः कपिञ्जलमञ्जुलकौ ॥

**कपिञ्जलः**— (सानन्दम्) सखे मञ्जुलक! अपि सत्यं सामाजिकप्रार्थनं शाब्दिकभञ्जनं नाम निबन्धनं प्रयुज्यतामिति ?

**मञ्जुलकः**— सत्यम्।

**कपिञ्जलः**— (स्वगतम्) कुतः पुनर्विलम्बनम्। (प्रकाशम्)

जयत्यञ्जनसिन्दूरसुन्दराङ्गं महन्महः।
विजानन्ति जना यत्र यमुनाशोणसंगमम् ॥ ७२ ॥

**मञ्जुलकः**—

मान्यभीष्मकृपाऽऽलीढो भीमधर्मपरिव्रतः।
दीर्घपृष्ठादितः कामं विजयत्येष धूर्जटिः ॥ ७३ ॥

**कपिञ्जलः**—

आनन्दनिधिरव्याजं भवमानः प्रकाशताम्।
समस्तगुणसाधीयानामोदत्येष सज्जनः ॥ ७४ ॥

**मञ्जुलकः**—

वन्यं भक्षति पीयतेऽच्छमपगानीरं पथा साधुना
स्वैरं संचरते न जातु लजते नग्नोऽपि नान्यं स्तुते।
नो वा संशृणुते न वा वचति नो संपश्यते नेहते
कुञ्जे विश्रमते तदेष सुमतिः शङ्केऽद्य रङ्कूयते ॥ ७५ ॥

**कपिञ्जलः**—

खिन्ने किंचिन्नैव खिन्ने नितान्तं छिन्ने धैर्यं जातु भिन्ने न भाति।
जृम्भत्युत्कण्ठत्यनुत्तिष्ठमाना नार्या भाजत्यूररीकुर्वतस्तम् ॥ ७६ ॥

मञ्जुलकः—

पश्य ज्ञानोऽत्र संक्रीडत्येत क्रोडत्ययं गुणः ।
घूर्णन् जायति शूद्रोऽयं जीर्यते वधुमण्यसौ ॥ ७७ ॥

कपिञ्जलः—

स्नायति यस्त्वयि सोऽद्य क्षिपते बिभृतेऽभिलपते ।
तुदते यमर्गायममति क्षिप्यति भरते सह गङ्गे ॥ ७८ ॥

मञ्जुलकः—

शुभिसंबन्धमाबिभ्रत्पुरा द्विजगणाश्रितः ।
अमृष्यमाणश्छेत्तारं स्वयमेधति सज्जनः ॥ ७९ ॥

कपिञ्जलः—

ईश्वरे देवि तेजे न महता धर्ममाचरे ।
पदो रजः प्रार्थयते क्लिश्यते मे न दित्ससे ॥ ८० ॥

मञ्जुलकः—

धेनुश्रियै द्रोणदुघा प्रसूयते विश्राममुज्झन्कवते मुदे कविः ।
आर्यै निचायन् विट आनुते वधूं संतिष्ठते शीलगुणाय दुर्यशः ॥ ८१ ॥

(नेपथ्ये)

हरिदासमणिवर्माणौ क्व पुनरतुच्छया मुदा गच्छतः । (पुनस्तत्रैव) पण्डितखण्डनं नाम निबन्धनमभिनेतुं रङ्गमण्डपं प्रति गच्छावः ॥

कपिञ्जलः— सखे तत्तूर्णमाव्रज ।

इति निष्क्रान्तौ ॥

इति डमरुके निबन्धने षष्ठोऽलंकारः समाप्तः ॥

## ॥ अथ सप्तमोऽलंकारः ॥

ततः प्रविशति हरिदासेन सह मणिवर्मा ॥

मणिवर्मा—

गिरिजामातरं तातं गिरिजामातरं पुनः ।
वन्दे मन्देतरानन्दवृन्दतुन्दिलमानसः ॥ ८२ ॥

हरिदासः—

निर्णेनेक्तितरामेषा मनीषां ब्रह्मवान्दिता ।
वीणावादपरा साध्वी शंभुपत्नी सरस्वती ॥ ८३ ॥

मणिवर्मा—

जातु सायकनिपातितध्वनद्दुर्दशारिदशकंधरः सुधीः ।
राम एष परिचुम्बति स्म तां रेवतीं परवधूपराङ्मुखः ॥ ८४ ॥

हरिदासः—

हरिप्रिया महालक्ष्मी रोहिणीव हरिं मुदा ।
आगच्छन्ती पतिं शुक्रं विवेवेक्ति सदा तदा ॥ ८५ ॥

मणिवर्मा—

दैवादलाभेन सुलोचनानां तारुण्यपुण्यो भृशमुन्मदिष्णुः ।
समीपभूतिष्ठदयत्नवश्यगौरीकुचौ पीडयते कुमारः ॥ ८६ ॥

हरिदासः—

वनान्नगरमभ्येत्य पापशङ्कां परित्यजन् ।
सुमित्रालिङ्गनं चक्रे लक्ष्मणः काममोहितः ॥ ८७ ॥

मणिवर्मा—

विदन्नपि कथं लसद्रसतरङ्गिणीमूर्मिळां
　जगाम रघुनन्दनः सपदि शृङ्गबेरे पुरे ।
इति प्रकटमन्युमान्भरत एष संकेतयन्
　महद्भिरधिजाङ्गलं निशि हठेन सीतामगात् ॥ ८८ ॥

हरिदासः—

निष्कलङ्कं भृशोष्णांशुं चन्द्रं वक्षोजकुम्भयोः ।
या या विरहिणी यत्ते सा सुख्यति न दुःख्यति ॥ ८९ ॥

मणिवर्मा—

गोस्वामी स्वयमीशानो विधवानन्दनोऽच्युतः ।
गोस्वामिविधवानां तद्वृषाकप्योरिवैकता ॥ ९० ॥

हरिदासः—

सहेलं व्योमनि निशामपमाने शिशौ बुधे ।
रोहिणीं चन्द्ररहितां चुम्बति स्म विरोचनः ॥ ९१ ॥

मणिवर्मा—

रावणिः समरे जातु कुण्ठासु शरपालिषु ।
पौलस्त्यं स्वगुरुं हन्तुं पिनाकं महदक्षिपत् ॥ ९२ ॥

हरिदासः— (नेपथ्याभिमुखमवलोक्य) भो बहुवसुयायावरौ न चिरमागच्छतम् । आवाभ्यां पुनर्विलम्ब्यते ।

इति मणिवर्मणा सह निष्क्रान्तः ॥

इति डमरुके निबन्धने सप्तमोऽलंकारः समाप्तः ॥

---

## ॥ अथ अष्टमोऽलंकारः ॥

ततः प्रविशति बहुवसुना सह यायावरः ॥

**यायावरः—**

सखे बहुवसो ! अपि संप्रकाश्यते जातिसंतर्जनं नाम निबन्धनम् ।

**बहुवसुः—** (स्वगतम्) कः संदेहः (प्रकाशम् अञ्जलिं घटयन्)

नव्ये सङ्गमहोत्सवे शयनतो भीता ईशोर्युग्मतो
ह्रीणा नाभिसरोजतः प्रविनता वक्षोजयोः कूणिता ।
हे सुभ्रूः किमु वैकृतैरिति जवात्पत्या मुदालिङ्गिता
देवी मङ्गलदेवता दिशतु वः स्वाख्यादिमार्धं मुहुः ॥ ९३ ॥

**यायावरः—**

नाङ्गान् मानान् पेर्यतम्बिरप्पाकुट्टिश्च मूत्तवन् ।
वेङ्कडं नल्लतम्बिश्च रज्जुग्रथनकर्मणा ॥ ९४ ॥

**बहुवसुः—**

प्रातः पर्युषितं भुक्त्वा रज्जुग्रथनकर्मणा ।
महिषीक्षालनेनापि क्षिपन्ति द्रविडा वयः ॥ ९५ ॥

**यायावरः—**

अहो द्राविडगेहेषु पितुः श्राद्धेऽन्यभोजनम् ।
सूपाज्ये रथसप्तम्यां दीपो दीपावलीमहे ॥ ९६ ॥

**बहुवसुः—**

करीषकृतये व्रीहिवितुषीकरणाय च ।
निर्ममो निर्मिमीते स दुर्विधिर्द्रविडाङ्गनाः ॥ ९७ ॥

यायावरः—

महाराष्ट्रा जडा यत्तैः प्रमादो यत्न इत्यहो ।
भणितावप्रमादोऽयमयत्नमिति भण्यते ॥ १८ ॥

❀ ❀ ❀

(प्रविश्य पटाक्षेपेण)

दर्दुरिका— अज्जा एसो खु सुणमी आअच्छइ ।

उभौ—

हन्त शरणमेव शरणयावः ॥

(इति निष्क्रान्ताः सर्वे ॥)

इति डमरुके निबन्धने अष्टमोऽलंकारः समाप्तः ॥

---

## ॥ अथ नवमोऽलंकारः ॥

ततः प्रविशति सुनेमिः ॥

**सुनेमिः—** (आकाशे) सखे शिवदत्त, कुतः पुनर्विलम्बसे ? तदेहि तावत्प्रभुत्वं नाम निबन्धन-मुपक्रमावहे ।

(प्रविश्य)

**शिवदत्तः—** (सहर्षोल्लासं शिरसि कराववतंसयन्)

वासश्चर्म रथो वृषः प्रियतमाऽपर्णैकदन्तः सुतो
ज्येष्ठोऽन्यस्तु विशाख इत्यभिजनो (हस्ते) कपर्दी धनम् ।
नो मातापितरौ गृहं महिधरो भस्माङ्गरागो महा-
नित्थं सर्वदरिद्रमीश्वरमहो लक्ष्म्यै भजामो वयम् ॥ १०४ ॥

**सुनेमिः—**

असत्यं सेवनं पित्रोर्हिंसां यात्राकृतिं पराम् ।
स्वर्णस्तेयं तपो घोरं प्रभवो हृदि जानते ॥ १०५ ॥

**शिवदत्तः—**

परद्रव्यं परं धर्मं परनिन्दां परां मतिम् ।
परनारीं परं ब्रह्म प्रभवो ननु मन्वते ॥ १०६ ॥

**सुनेमिः—**

मुखे विद्याऽस्ति नो भूमिर्मग्ना न च महोदधौ ।
न मृताः प्रभवश्चान्ये कुतो गर्वायसे प्रभो ॥ १०७ ॥

**शिवदत्तः—**

शिबिकावरथेभाद्यैर्धरन्तां प्रभवो मुदम् ।
स्वान्ते यद्यनुमास्यन्ति स्वान्ते पुण्यैनसी इव ॥ १०८ ॥

**सुनेमिः—**

कुञ्जराद्यासिकाजालैर्हन्त न प्रभवोऽधिकाः ।
मर्कटा नारिकेळेषु वसन्तीति किमुन्नताः ॥ १०९ ॥

**शिवदत्तः—**

याचको याचते लक्ष्मीं यत्किंचिद्वसु न प्रभून् ।
अन्यथा गतलक्ष्मीकान्किं न याचति तत्स तान् ॥ ११० ॥

**सुनेमिः—**

प्रभूणां जाड्यवत्सिद्धं मोहमूहामहे वयम् ।
तदप्यहो न जानीमः क्वास्ति वा भाग्यरेखिका ॥ १११ ॥

**शिवदत्तः—**

परेभ्यो मतिसत्कर्मदयास्वप्रमदादिकम् ।
प्रभवो...श्रेयः प्रभवो नास्ति को गुणः ॥ ११२ ॥

**सुनेमिः—** (परिवृत्यावलोक्य) किमेष ककुन्दर इत एवाभिवर्तते ।

(प्रविश्य)

**ककुन्दरः—** (शिवदत्तस्य कर्णे एवमिव)

**शिवदत्तः—** अपि सत्यमुदरंभरिः श्वेतद्वीपादागतः ?

**ककुन्दरः—** अलमलीकाशङ्कया । भवतु ; गच्छ त्वम् ।

**शिवदत्तः—** भवतु गच्छ त्वम् ।

**ककुन्दरः—** तथा । इति निष्क्रान्तः ।

**सुनेमिः—** किं कारणमिहावयोरवस्थाने ।

**शिवदत्तः—** तदेहि गच्छावः । सख्युरुदरंभरेः वैभवं प्रत्यक्षीकुर्वः ।

इति निष्क्रान्तौ ॥

इति डमरुके निबन्धने नवमोऽलंकारः समाप्तः ।

## ॥ अथ दशमोऽलंकारः ॥

(नेपथ्ये)

भो भो जितेन्द्रियसुकर्मसुमेधसः, तूर्णमात्रजतनिबन्धनमभियोक्तुमखण्डानन्दनां धानम् ।

(ततः प्रविशति सुकर्मसुमेधोभ्यां तृतीयो जितेन्द्रियः ।)

**जितेन्द्रियः**— (प्राञ्जलिः सानन्दविनयम् ।)

पत्नीविषे सुतझषे विषयानलेऽस्मिन्
तृष्णाजवे भवसरस्वति मग्नजन्तोः ।
आलम्बरज्जुरिव यस्य पदं चकास्ति
निःश्रेयसाय नरसिंहमुपास्महे तम् ॥ ११३ ॥

**सुकर्मा**—

स्वरो दधातु नीचतामुपैतु मांसमल्पता-
मसूञ्चि यान्त्वदृश्यतां कलेबरं विशुष्यतु ।
वितस्तिमात्रमङ्गमस्य पूर्तये नराधमा-
न्न लक्षयाम्यहं दृशः स्तवस्य वा हृदोऽथ वा ॥ ११४ ॥

**सुमेधाः**—

पुत्रो रोदितु संप्रदर्श्य जठरं तातान्नमित्यन्वहं
भार्या मूर्ख दरिद्रपुंगव गृहाद्गच्छेति संक्रुध्यतु ।
इन्द्रोऽसि द्रुहिणोऽसि विष्णुरसि भोः शर्वोऽसि साक्षादिति
स्तुत्वा कंचन पामरं न च वयं याचामहे काञ्चनम् ॥ ११५ ॥

**जितेन्द्रियः**—

विहिंसानिद्राशाभरपिशुनता बिभ्रति जनाः
स्वकीयप्रादेशप्रमितजठरापूरणकृते ।
अपास्येदं सर्वं परमपदलाभाय न हि को-
ऽप्यसारे संसारे शरणयति कंसारिचरणम् ॥ ११६ ॥

सुकर्मा—

मुहुः स्नातुं पुण्या विविधसरितो धर्तुममला-
स्त्वचो भोक्तुं कन्दादिकमनुचरा बालहरिणाः ।
इतीदं निर्याश्वं सकलमपि क्लप्तं ननु तथा-
ऽप्यरण्यं दुर्जन्तुर्जगति न शरण्यं कलयति ॥ ११७ ॥

सुमेधाः—

अङ्गादङ्गान्नवनवाः स्वेदा इव सुतादयः ।
उत्पद्यन्ते विपद्यन्ते मुधा मुह्यन्ति जन्तवः ॥ ११८ ॥

जितेन्द्रियः—

विषयानुशन्ति यावत्सत्त्वास्ताम्यन्ति हन्त ते तावत् ।
यावद्विजुगुप्सन्ते तेभ्यस्तावत्सुखं प्रमोदन्ते ॥ ११९ ॥

सुमेधाः—

श्रुती निजगुणग्रहे न चतुरे दृशौ मन्दिते
रदा निपतिताः शिरः पलितदुःस्थिरं कम्पते ।
गतागतजडे पदे शिथिलसन्धिबन्धं वपु-
श्च्युतं पिशितमप्यहो तदपि लेढि भोगं जनः ॥ १२० ॥

उष्णीषं वरकञ्चुकं दृढतरं पादत्रमूर्ध्वांशुकं
बिभ्राणो रविभानुभिर्दृढतरं विद्धं मुखं लम्भयन् ।
जन्तुर्दास्यति किंचिदेष इति दुर्मत्या मुहुः सेवते
किं तु ब्रह्मपदाधिरोहणविधौ पङ्गुत्वमालम्बते ॥ १२१ ॥

जितेन्द्रियः—

भ्राताऽम्बा जनकः स्वसा प्रियतमा पुत्रः कुमारी धनं
गेहं गौरीति तत्र तत्र ममतां मूढो विधत्ते मुधा ।

भीमेनासुखदायिना परमभीमेनाध्वना यास्यतः
क्वापि प्रक्षरणक्षमेषु कतमद्वस्तु स्वतः स्थास्यति ॥ १२२ ॥

**सुकर्मा**—

भ्रातः सज्जन नैकजन्ममृतिभिः खिन्नोऽसि तच्छ्रूयतां
धर्माधर्मसुखासुखानि विजहत्ताटस्थ्यमासादयन् ।
त्वंकारोक्तिविनाशपूर्वकमिमं लोकं स्वमालोकय-
न्ब्रह्मैवाहमिति स्थिरात्मविषयामेकां मनीषां धर ॥ १२३ ॥

**सुमेधाः**— (आकाशे) भोःसामाजिकाः, किं नु वो भूयः प्रियमुपहर्तव्यम् । किं ब्रूथ ? इतोऽपि किमन्यत्प्रियमस्तीति । तथाऽपीदमस्तु भरतवाक्यम्—

दुर्भिक्षेण समं लोके प्रमीलन्त्वसुमेधसः ।
सुभिक्षेण सह प्रायः संभवन्तु सुमेधसः ॥ १२४ ॥

अपि च

दक्षश्चेत्कवितां करोतु वितता देवी दयार्द्रा गिरां
कृत्युल्लासितसाधवे सुकवये मा दुष्कविर्द्रुह्यतु ।
द्वे नाट्याविदमाहितं डमरुकं शंभोर्गिरा जृम्भतां
जीयाच्च प्रवचा महाकविरसावष्टप्रबन्धीकरः ॥ १२५ ॥

इति निष्क्रान्ताः सर्वे ॥

**इति डमरुकं समाप्तम् ॥**



इति पररूपादिप्रतिषेधः; यथा— अद्यैव गच्छ, इहैव तिष्ठ, पटत् पटदिति करोति, मा कार्षीत्, मा स्म कार्षीत्, मा स्म करोत्, इति। 'निपात एकाजनाङ्' 'ओत्' 'संबुद्धौ शाकल्यस्येतावनार्षे' (पा. १.१.१४-१५-१६) इति संहिताप्रतिषेधः; यथा— अ अवेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, आ एवं नु मन्यसे, अहो आश्चर्यम्, भानो इति, इति। 'न चवाहाहैवयुक्ते' (पा. ८.१.२४) 'नानोर्ज्ञः' (पा. १.३.५८) 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (पा. ७.१.३७) इति पदादेशादिप्रतिषेधः; यथा— ग्रामो युष्माकं च ग्रामोऽस्माकं च, ग्रामो युष्माकमेव ग्रामोऽस्माकमेव, पुत्रमनुजिज्ञासति, अस्नात्वा भुङ्क्ते, इति। 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्' (पा. ८.१.३०) 'चादिषु च' 'चवायोगे प्रथमा' (पा. ८.१.५८-५९) इति निघातप्रतिषेधः; यथा— यद् देवदत्तः पचति, यदि देवदत्तः पचति, देवदत्तः पचति च खादति च, देवदत्तः पचति वा खादति वा, गर्दभांश्च कालयति वीणां च परिवादयति, गर्दभान् वा कालयति वीणां वा परिवादयति इति॥

समासार्हा निपाता एव कतिपयेऽपि गतयः; तद्यथा— 'प्रादयः क्रियायोगे (पा. १.४.५९) 'ऊर्यादिच्विडाचश्च' 'अनुकरणं चानितिपरम्' (पा. १.४.६१-६२) 'आदरानादरयोः सदसती' 'भूषणेऽलम्' 'अन्तरपरिग्रहे' (पा. १-४-६३-६४-६५) 'कणेमनसी श्रद्धाप्रतीघाते' 'पुरोऽव्ययम्' 'अस्तं च' (पा. १.४.६६-६७-६८) 'अच्छ गत्यर्थवदेषु' 'अदोऽनुपदेशे' 'तिरोऽन्तर्धौ' (पा. १.४.६९-७०-७१) 'विभाषा कृञि' 'उपाजेऽन्वाजे' 'साक्षात्प्रभृतीनि च' (पा. १.४.७२-७३-७४) 'अनत्याधान उरसिमनसी' 'मध्येपदेनिवचने च' (पा. १.४-७५-७६) 'नित्यं हस्तेपाणावुपयमने' 'प्राध्वं बन्धने' 'जीविकोपनिषदावौपम्ये' (पा. १.४.७७-७८-७९) 'ते प्राग्धातोः' 'छन्दसि परेऽपि' 'व्यवहिताश्च' (पा. १.४.८०-८१-८२) इति। अथैतदुदाहरणानि— प्रपचति, पराकरोति, ऊरीकरोति, कारिकाकरोति, शुक्लीकरोति, पटपटाकरोति, पटत्करोति, खाट् करोति, सत्करोति, असत्करोति, अलंकृत्य, अन्तर्हत्य, कणेहत्य, मनोहत्य, पुरस्कृत्य, अस्तंगत्य, अच्छगत्य, अच्छोद्य, अदःकृत्य, तिरोभूय, तिरस्कृत्वा, तिरस्कृत्य, उपाजे कृत्वा, उपाजेकृत्य, अन्वाजे कृत्वा, अन्वाजेकृत्य, साक्षात् कृत्वा, साक्षात्कृत्य, मिथ्या कृत्वा, मिथ्याकृत्य, उरसि कृत्वा, उरसिकृत्य, मनसि कृत्वा, मनसिकृत्य, मध्ये कृत्वा, मध्येकृत्य, पदे कृत्वा, पदेकृत्य, निवचने कृत्वा, निवचनेकृत्य, हस्तेकृत्य, पाणौकृत्य, प्राध्वंकृत्य, जीविकाकृत्य, उपनिषत्कृत्य, उपनिषत्कृतम्, यदुपनिषत्करोति, यद्युपनिषत्करोति, इति॥

गतिविशेषा एव प्रादय उपसर्गाः॥

**प्रपरापसमन्ववनिर्दुर्व्याङ्न्यधयोऽप्यतिसूदभयश्च।**
**प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र॥**

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
हितादिषु समो म्लोपं पाठं चात्र श्रदन्तरोः ॥

एवमेते विंशतिः वपिसश्रदन्तर्भिः सहोपसर्गाः पञ्चविंशतिर्भवन्ति ॥

ते खलु—(१) वाचकाः, (२) द्योतकाः, (३) विशेषकाः, (४) सहाभिधायकाः, (५) कार्यार्थकाः, (६) निरर्थकाश्चेति षोढा विप्रथन्ते। तेषु (१) वाचका यथा— प्रगता ऋषभा अस्माद्वनात् प्रर्षभम् वनम्, परागता असवोऽस्येति परासुः, अपगतो मन्युरस्य अपमन्युः, संगतमक्षेण समक्षम्, अनुप्राप्तो नासिकामनुनासिकः, अवक्रुष्टः कोकिलया अवकोकिलः, मक्षिकाणामभावो निर्मक्षिकम्, ऋद्ध्यभावो यवनानां दुर्यवनम्, विरुद्धः पक्षो विपक्षः, आदाय युध्यते तदित्यायुधम्, अत्ययो वातस्य निवातम्, अधिगतमक्षेण अध्यक्षम्, अपिहितः शल इत्यपिशलः, अतीतः श्वानमतिश्वो वराहः, समृद्धिर्मद्राणां सुमद्रम्, उद्गतोऽत्यर्थमुत्तमः, अभिलक्ष्यं मुखमस्याभिमुखः, प्रतिनिधेयः कायः प्रतिकायः, परिग्लानोऽध्ययनाय पर्यध्ययनः, उपेत्याधीयतेऽस्मादुपाध्यायः, एवम् अवगतवान् कोटं वकोटः, अपिहितः कायतीति पिकः, संपन्नं ब्रह्म बाभ्रवाणां सब्रह्म, श्रद्धीयत इति श्रद्धा, अन्तर्धीयते अन्तर्धिः, इति ॥

(२) द्योतका यथा— प्रतिष्ठते, पराक्रमते, अपकरोति, संक्रीडति, अनुकम्पते, अवधत्ते, निर्विवेश, दुर्ललितः, व्याददाति, आह्वयते, निशमयति, अधिकुरुष्व, अपिदधाति, अतिशेते सुरभिः, उल्लापयति, अभिधत्ते, प्रतीक्षते, परिणमते, उपायंस्त; एवं वधत्ते, पिधत्ते, श्रद्धत्ते, सहितः, अन्तर्दधाति, इति ॥

(३) विशेषकास्तु द्विधा— प्रकृत्यर्थविशेषकाः, प्रत्ययार्थविशेषकाश्च; प्रकृत्यर्थविशेषका यथा— प्रवर्धते, पलायते, अपवदते, संसरति, अनुमन्यते, अवलोकते, निष्कर्षति, दुर्भवति, विलोकते, आलोकते, निषीदति, अधिवसति, अपिनह्यति, अतिवर्तते, सुभवति, उद्भवति, अभ्येति, प्रतिपद्यते, परिगणयति, उपदधाति, एवं वतंसः, पिनद्धवान्, सततम्, श्रद्धनः, अन्तर्भवति इति। प्रत्ययार्थविशेषका यथा— मनस्वी सुभवति सुमनायते, दुर्भवति दुर्मनायते, एवमभिमनायते; पुच्छमुदस्यति उत्पुच्छयते, व्यस्यति विपुच्छयते, पर्यस्यति परिपुच्छयते; भाण्डं समाचयति संभाण्डयते, चीवरं संचिनोति संचीवरयते; हस्तेनापक्षिपति अपहस्तयति, वर्मणा संनह्यति संवर्मयति, पाशेन संयच्छति संपाशयति, चूर्णैरवध्वंसयति अवचूर्णयति, तूलैरवकुष्णाति अवतूलयति, हस्तिनाऽतिक्रामति अतिहस्तयति, सेनयाऽभियाति अभिषेणयति, वीणयोप-

गायति उपवीणयति, वास्या परिच्छिनत्ति परिवासयति, श्लोकैरुपस्तौति उपश्लोकयति, लोमान्यनुमार्ष्टि अनुलोमयति, पाशान् विमोचयति विपाशयति, तूस्तानि विहन्ति वितूस्तयति, रूपं निरीक्षते निरूपयति, वस्त्रं परिदधाति परिवस्त्रयति, पर्याणमुत्तानयति उत्पर्याणयति, इति ॥

नन्वेतेऽपि क्रियाविशेषाणां वाचकाः कस्मान्न भवन्ति ? यद्धि यत्प्रयोगादवगम्यते तत् तस्य वाच्यं भवति। नैवम्; 'भृशादिभ्यो भुव्यच्वेः' (पा. ३.१.१२) इत्यादिभिर्भवत्याद्यर्थ एव प्रत्ययोत्पत्तेः। मैवं वोचः; नाहं क्यङन्तं पृच्छामि, किं तर्हि ण्यन्तम्; तत्र 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' (पा. ३-१-१७) इति वर्तते; ततश्च करोत्यर्थलक्षणे धात्वर्थसामान्ये णिङ्णिचोर्विधानात्, पुच्छस्योदसनं करोति उत्पुच्छयते, सेनया अभियानं करोति अभिषेणयति इति करोत्यर्थस्य प्रत्ययेन उदसनाभियानादेस्तूपसर्गेणाभिधाने वाचकत्वमेषां भविष्यतीति। उच्यते— नेह करण इत्यनेन सकलधात्वर्थानुयायि क्रियासामान्यं प्रतिनिर्दिश्यते, अपि त्वनवधारितात्मस्वरूपा उदसनाभियानादयः क्रियाविशेषा एव। कथमिदं ज्ञायते इति चेत्, आचार्यप्रवृत्तिर्ज्ञापयति— यदयं मुण्डमिश्रश्लक्ष्णलवणेभ्यः करणमात्रे प्रत्ययमुदाहरति; तद्यथा— मुण्डं करोति मुण्डयति, एवं मिश्रयति, श्लक्ष्णयति, लवणयति। हलिकलिकृतत्वचेभ्यस्तु ग्रहणलक्षणे तद्विशेषे; यथा— हलिमग्रहीत् अजहलत्, कलिमग्रहीत् अचकलत्, कृतं गृह्णाति कृतयति, त्वचं गृह्णाति त्वचयति; वर्णसत्यार्थवेदेभ्यस्तदाचष्टे इत्युपसर्गविशिष्टे धात्वर्थे; यथा— वर्णमाचष्टे वर्णयति, सत्यमाचष्टे सत्यापयति, अर्थमाचष्टे अर्थापयति, वेदमाचष्टे वेदापयति इति; व्रताद्भोजने तन्निवृत्तौ च, यथा— पयो व्रतयति, वृषलान्नं व्रतयति। अतोऽवगम्यते करण इत्यनेनानवधारितविशेषो धात्वर्थः प्रत्ययाभिधेयतयाऽधिक्रियते इति। एवं तर्हि, सविशेषणस्यैव क्रियाविशेषस्य प्रत्ययेनोक्तत्वात् अभिषेणयत्यादिषूपसर्गप्रयोगो न प्राप्नोति; यथा— श्येन इवाचरति श्येनायते, बाष्पमुद्वमति बाष्पायते, हस्तेन निरस्यति हस्तयते, एवं पादयते, इति। भवेदेतत् यत्रैक एव प्रत्ययार्थः; यथा— 'उपमानादाचारे' (पा. ३-१-१०) 'बाष्पोष्मभ्यामुद्वमने' (पा. ३-१-१६) 'अङ्गान्निरसने' इति। इह तु बहवः प्रत्ययार्थाः; यथा— 'पुच्छादुदसने व्यसने पर्यसने च', 'भाण्डात् समाचयने विभजने च', 'चीवरादार्जने परिधाने च', मुण्डादिभ्यस्तत् करोति तदाचष्टे तेनातिक्रामति इत्यादाविति; तत्रोपात्तस्यापि क्रियाविशेषस्य प्रत्ययतो रूपसामान्यादनवधारणे तदवच्छेदायोपसर्गविशेषः प्रयुज्यते, यथा प्रत्ययार्थविशेषणपक्षे मनःशब्दादुत्पन्नेन क्यङैवोपसर्गार्थविशिष्टभवत्यर्थाभिधाने सुमनायते, दुर्मनायते, अभिमनायते, इति सुदुरभयः प्रयुज्यन्ते। एवं तर्हि हस्तिनाऽतिक्रामत्यतिहस्तयति इत्यादिवत् श्वेताश्वमाचष्टे श्वेतयति, अश्वतरमाचष्टे अश्वयति, गालोडितमाचष्टे गालोडयति, आह्वरकमाचष्टे आह्वरयति, इत्यादावाङ्प्रयोगः प्राप्नोति।

नैवम्, अत्राङः सहाभिधायकत्वात्। न हि क्रामतीत्यादिवत् चष्टे इत्यस्यैकाकिनः स्वार्थाभिधाने सामर्थ्यमस्ति। अतो विशेषकत्वमेवैषां न वाचकत्वमिति ॥

अथ (४) सहाभिधायका यथा— प्रस्तुते, प्राणिति, प्रपश्चते, प्राप्नोति, संग्रामयते, संचष्टे, संरम्भते, संधुक्षयति, अनुरुध्यते, विक्लवते, विलोकते, विश्राणयति, आचष्टे, आशास्ते, आचामति, आतङ्कयति, निद्रायति, नियमयते, अधीते, अभ्येति, अभिवादयते, परिष्वजते, उज्जासयति, उत्तंसयति, इति ॥

(५) कार्यार्था यथा— विजयते, पराजयते, न्यविक्षत, समगंस्त, अन्वकरोत्, पराकरोत्, विरराम, उपरराम, उदसिष्यति, उदसिष्यते, अपस्किरते, प्रतिचस्कार, उपस्कुरुते, प्लायते, प्रार्षभीयति, निष्टपति, अभिष्टौति, विषहते, परिष्वजते, विष्वणति, प्रहिणोति, प्रणश्यति, परिणेष्यति, अन्तर्णयति, इति ॥

(६) निरर्थका यथा— प्रारभते, प्रलम्बते, प्रसूयते, प्रयच्छति, अपहरति, अपह्नुते, अपत्रपते, अभिषुणोति, निमीलति, निवार्यते, निष्ठीवति, निमज्जति, निखञ्जति, विगाहते, विराजते, विजानाति, विनश्यति, विकत्थते, विदीर्यते, आश्रयति, आश्लिष्यति, संयुज्यते, अध्यागच्छति, पर्यागच्छति, इति ॥

प्रादय एव क्रियाविशेषोपजनितसंबन्धावच्छेदहेतवः कर्मप्रवचनीयाः; यदाह—

> क्रियाविशेषजन्यानां संबन्धानां प्रकाशने।
> कर्मप्रवचनीयाः स्युर्निमित्तमवधारिताः ॥ इति।

किं पुनरमीषामवधारणम्? कर्मप्रवचनीयसंज्ञाधिकारे अनुप्रभृतयः शब्दा एकादश, लक्षणादयोऽर्थो द्वाविंशतिरिति; तद्यथा— 'अनुर्लक्षणे' 'तृतीयार्थे' 'हीने' (पा. १.४.८४-८५-८६) 'उपोऽधिके च' 'अपपरी वर्जने' 'आङ् मर्यादावचने' (पा. १.४.८७-८८-८९) 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' (पा. १.४.९०) 'अभिरभागे' (पा १.४.९१) 'प्रतिः प्रतिनिधिप्रतिदानयोः' (पा. १.४.९२) 'अधिपरी अनर्थकौ' (पा. १.४.९३) 'सुः पूजायाम्' 'अतिरतिक्रमणे च' (पा. १. ४.९४-९५) 'अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु' 'अधिरीश्वरे' (पा. १.४.९६-९७) 'विभाषा कृञि' (पा. १.४.९८)। एवम्— अनु, उप, अप, परि, आङ्, प्रति, अभि, अधि, सु, अति, अपि, इत्येकादश शब्दाः। हेतुलक्षणम्,

सहार्थः, हीनता, आधिक्यम्, वर्जनम्, मर्यादावचनम्, लक्षणम्, इत्थंभूताख्यानम्, भागः, वीप्सा, प्रतिनिधिः, प्रतिदानम्, आनर्थक्यम्, पूजा, अतिक्रमणम्, पदार्थः, संभावना, अन्ववसर्गः, गर्हा, समुच्चयः, स्वाम्यम्, अधिकारः इति द्वाविंशतिरर्थाः। तत्रानुः सप्तार्थः, प्रतिपरी षडर्थौ, अपिः पञ्चार्थः, अध्यभी त्र्यर्थौ, उपाती द्व्यर्थौ, आङपसव एकार्थाः इति। तेष्वनुः हेतुलक्षणसहार्थहीनतालक्षणेत्थंभूताख्यानभागवीप्सासु कर्मप्रवचनीयः; तद्योगे द्वितीया यथा— शाकल्यस्य संहितामनु प्रावर्षन्, पर्वतमन्ववसिता सेना, अनुशाकटायनं वैयाकरणाः, वृक्षमनु विद्योतते विद्युत्, साधुर्देवदत्तो मातरमनु, यदत्र मामनु स्यात्, वृक्षं वृक्षमनु तिष्ठति, इति ॥

**क्रियाया द्योतको नायं न संबन्धस्य वाचकः।**
**नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः॥** (वाक्यपदीयम् २-२०६)

तथा हि— शाकल्यस्य संहितामनुप्रावर्षदिति संहिताप्रवर्षणयोर्हेतुफलभूतयोर्लक्ष्यलक्षणभावो निशमयतिक्रियोपजनित इत्यनुना प्रकाश्यते 'शाकल्यस्य संहितामनु निशम्य प्रावर्षत्' इति। एवमन्यत्राप्यवगन्तव्यम्। इत्यनुः सप्तार्थः। लक्षणेत्थंभूताख्यानभागवीप्साप्रतिनिधिप्रतिदानेषु प्रतिः; स चतुर्षु द्वितीयां द्वयोः पञ्चमीमुत्पादयति; यथा— वृक्षं प्रति विद्योतते, साधुर्देवदत्तो मातरं प्रति, यदत्र मां प्रति स्यात्, वृक्षं वृक्षं प्रति सेकः, अभिमन्युरर्जुनतः प्रति, माषानस्मै तिलेभ्यः प्रति प्रयच्छति। लक्षणेत्थंभूताख्यानभागवीप्सावर्जनानर्थक्येषु परिः; सोऽपि चतुर्षु द्वितीयां द्वयोः पञ्चमीमुत्पादयति; यथा— वृक्षं परि विद्योतते, साधुर्देवदत्तो मातरं परि, यदत्र मां परि स्यात्, वृक्षं वृक्षं परि सेकः, परिपरि त्रिगर्तेभ्यो वृष्टो देवः, 'विश्वप्स्निया विश्वतस्परि' (तै. सं.१.५.३.३)। इति प्रतिपरी षडर्थौ। पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेष्वपिः; तस्यैतेषूपसर्गसंज्ञा बाध्यते; तत्र पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः; सर्पिषोऽपि स्यात्, मधुनोऽपि स्यात्; मात्रा बिन्दुः स्तोकमित्यस्यार्थे अपिशब्दो वर्तते। अधिकार्थवचनेन शक्तेरप्रतिघाताविष्करणं संभावना— अपि सिञ्चेन्मूलकसहस्रम्, अपि स्तुयाद्राजानम् इति। कामचारानुज्ञानमन्ववसर्गः, अपि सिञ्च, अपि स्तुहि। निन्दा गर्हा— अपि सिञ्चेत् पलाण्डुम्, अपि स्तुयाद्वृषलम् इति। अनेकक्रियोपनिपातः समुच्चयः; अपि सिञ्च, अपि स्तुहि; सिञ्च च स्तुहि चेत्यर्थः। उपसर्गसंज्ञाबाधनात् षत्वं न भवति। इत्यपिः पञ्चार्थः। अधिरानर्थक्याधिकारस्वाम्येषु कर्मप्रवचनीयः; स आद्ययोः 'गतिर्गतौ' 'तिङि चोदात्तवति' (पा. ८.१.७०-७१) इति गत्युपसर्गसंज्ञाबाधनात् निघातादिकं नानुभवति इति; यथा— कुतोऽध्यागच्छति, यदत्र मामधिकरिष्यति, इति। स्वाम्ये तु द्विधा— अधियोगे सप्तमी भवति कदाचित् स्वामिनः, कदाचित् स्वात्; यथा— अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तः। अभिर्लक्षणेत्थंभूताख्यानवीप्सासु द्वितीया-

मुत्पादयति; यथा— वृक्षमभि विद्योतते, साधुर्देवदत्तो मातरमभि, वृक्षं वृक्षमभि सिञ्चति। इत्यध्यभी त्र्यर्थौ। हीनाधिकार्थयोरुपः; तत्र यथासंख्य द्वितीयासप्तम्यौ; यथा— उपार्जुनं योद्धारः, उप खार्यां द्रोणः इति। अतिः पूजायामतिक्रमणे च; तत्र पूजा स्तुतिः, निष्पन्नेऽपि फले क्रियाप्रवृत्तिरतिक्रमणम्। यथा— शोभनं स्तुतम्। अति स्तुतं भवता, अति सिक्तमेतद्भवता, इति। उपसर्गसंज्ञाबाधनात् षत्वं न भवति। इत्युपाती व्यर्थौ। आङ्मर्यादावचने पञ्चमीमुत्पादयति— आ पाटलिपुत्राद्वृष्टो देवः। वचनग्रहणादभिविधिरपि गृह्यते; तत्रापीदमेवोदाहरणम्। अपो वर्जने पञ्चमीमुत्पादयति— अप त्रिगर्तेभ्यो वृष्टो देवः। सुः पूजायामुपसर्गसंज्ञां बाधते— सुस्तुतं भवता, सुसिक्तं भवता, इति षत्वं न भवतीति। इत्याङपसव एकार्था इति॥

अव्ययानि सुबन्ततिङन्तानुकारीणि विभक्तिप्रतिरूपाणि; तानि प्रत्येकं षोढा— प्रकृत्यर्थानि, प्रत्ययार्थानि, उभयार्थानि, अनुभयार्थानि, प्रकृत्यन्तरार्थानि, प्रत्ययान्तरार्थानि चेति। तेषु सुबन्तानुकारीणि प्रकृत्यर्थानि यथा— उच्चैः, नीचैः, चिराय, विहायसा इति; प्रत्ययार्थानि यथा— आरात्, अकस्मात्, एकपदे, प्रगे, इति; उभयार्थानि यथा— अहम्, शुभम्, पारे, मध्ये इति; अनुभयार्थानि यथा— ऋते, दिष्ट्या, साक्षात्, अह्नाय इति; प्रकृत्यन्तरार्थानि यथा— कृतम्, दिवा, दोषा, अन्तरेण इति; प्रत्ययान्तरार्थानि यथा— सायम्, स्वयम्, चिरस्य, परस्परस्य इति। तिङन्तानुकारीणि प्रकृत्यर्थानि यथा— मन्ये, शङ्के, अये, आम इति; प्रत्ययार्थानि यथा— एहि, अपेहि, पश्य, पश्यत इति; उभयार्थानि यथा— अस्ति, आसि, अस्मि, ब्रूहि इति; अनुभयार्थानि यथा— याति, न याति, वर्तते, न वर्तते इति; प्रकृत्यन्तरार्थानि यथा— अस्तु, भवतु, पूर्यते, आस इति; प्रत्ययान्तरार्थानि यथा— आह, स्यात्, स्तुयात्, भूयात् इति॥

'स्वरादिनिपातमव्ययम्' (पा. १. १. ३७) इत्यव्ययप्रकरणे 'कृन्मेजन्तः' क्त्वातोसुन्कसुनः' (पा. १-१-३९, ४०) 'तद्धितश्चासर्वविभक्तिः' 'अव्ययीभावश्च' (पा. १-१-३८, ४१) इति पठ्यते। तत्र आम्, क्त्वा, ल्यप्, तुमुन्, णमुल्, खमुञ् इति कृतः षड् भाषायाम्। ते तु कृतः क्रियारूपाः, क्रियाफलरूपाः, क्रियाविशेषणरूपाः, क्रियावधिरूपाः, क्रियाकर्मरूपाः, क्रियावयवरूपाश्च भवन्ति; तेषु क्रियारूपा यथा— चकासाञ्चकार, कारयामास, बिभरांबभूव, विदांकुर्वन्तु, अलं कृत्वा, खलु कृत्वा, अलमालप्य, खल्वालप्य, अलं भोक्तुम्, कालो भोक्तुम्, श्रोतुं श्रोत्रम्, द्रष्टुं चक्षुः इति; क्रियाफलरूपा यथा— भोक्तुं व्रजति, पक्तुमुपतिष्ठते, भोक्तुं भुङ्क्ते, पक्तुं पचति, भोक्तुं ग्लायति, भोक्तुं घटते, भोक्तुं क्षमते, भोक्तुं सहते, भोक्तुमस्ति, भोक्तुं विद्यते, भोक्तुमीष्टे, भोक्तुं प्रभवति इति; क्रियाविशेषणरूपा

यथा— इत्थंकारम्, अन्यथाकारम्, यथाकारम्, तथाकारम्, उच्चैःकारम्, तिर्यक्कारम्, मुखतःकारम्, नानाभावम्, द्विधाभावम्, तूष्णींभावम्, अन्वग्भावम् इति; क्रियावधिरूपा यथा— भुक्त्वा व्रजति, अपमित्य याचते, अग्रेभोजं व्रजति, व्यहात्यासं गाः पाययति, व्यङ्गुलोत्कर्षं खण्डिकाश्छिनत्ति, शय्योत्थायं राजद्वारमेति, कन्यादर्शं वरयति, ब्राह्मणवेदं भोजयति, यावज्जीवमधीते, चर्मपूरं स्तृणाति, गोष्पदपूरं वृष्टो देवः, चेलक्नोपं वृष्टो देवः इति; क्रियाकर्मरूपा यथा— शक्नोति भोक्तुम्, धृष्णोति भोक्तुम्, जानाति भोक्तुम, आरभते भोक्तुम्, पारयति भोक्तुम, प्रक्रमते भोक्तुम, लभते भोक्तुम्. अर्हति भोक्तुम, इच्छति भोक्तुम, कामयते भोक्तुम्, एषितुमिच्छति, कमितुं कामयते इति; क्रियावयवरूपा यथा— मूलकोपदंशं भुङ्क्ते, दण्डोपघातं गाः कालयति, पार्श्वोपपीडं शेते, व्रजोपरोधं गाः सादयति, पाण्युपकर्षमुत्थापयति, केशग्राहं युध्यन्ते, भ्रूविक्षेपं जल्पति, गेहानुप्रवेशमास्ते, नामग्राहमाकारयति, चोरंकारमाक्रोशति, स्वादुंकारं भुङ्क्ते, स्वादूकृत्य भुङ्क्ते, इति। क्रियाकर्मावयवरूपाः खल्वपि संभवन्ति; यथा— स्वपोषं पुष्यति, आत्मपोषं पुष्णाति, गोपोषं पुष्यति, रैपोषं पुष्णाति, निमूलकाषं कषति, समूलकाषं कषति, समूलघातं हन्ति, पाणिघातं वेदिमाहन्ति, शुष्कपेषं पिनष्टि, चूर्णपेषं पिनष्टि, रूक्षपेषं पिनष्टि, उदपेषं पिनष्टि, अकृतकारं करोति, जीवग्राहं गृह्णाति, हस्तग्राहं गृह्णाति, हस्तवर्तं वर्तयति, चूडकनाशं नष्टः, सुवर्णनिधायं निहितः, ओदनपाकं पक्वः, क्रौञ्चबन्धं बद्धः, जीवनाशं नश्यति, पुरुषवाहं वहति, ऊर्ध्वशोषं शुष्कः, ऊर्ध्वपूरं पूर्णः इति। शेषाश्छन्दसि चतुर्विंशतिर्भवन्ति; तद्यथा— एश्, केन्, तवै, के, से, सेन्, असे, असेन्, क्से, कसेन्, अध्यै, अध्यैन्, कध्यै, कध्यैन्, शध्यै, शध्यैन्, तवेङ्, तवेन्, कै, इष्यै, णमुल्, कमुल्, तोसुन्, कसुन् इति। तेषु कृत्यार्थे एशकेनौ; एश्— 'अवचक्षे' (ऋग्वे. ४.५८.५) केन्—नावगाहे। तवै कृत्यार्थे तुमर्थे च, कृत्यार्थे— परिधातवै, परिस्तरितवै; तुमर्थे— सोममिन्द्राय पातवै (ऋग्वे. ३. ४६. ५.) अन्वेतवै (ऋग्वे. ७. ४४. ५)। कयादयः सप्तदश तुमर्थे; तेषु के— दृशे विश्वाय सूर्यम् (ऋग्वे. १-५०. १) विख्ये त्वा हरामि; से— वक्षे रायः, सेन्— ता वामेषे रथानाम् (ऋग्वे ५. ६६. ३); असे— क्रत्वे दक्षाय जीवसे (ऋग्वे. १०. ५७. ४); असेन्— इह क्षयाय जीवसे (ऋग्वे. १०. ५८. १); क्से— प्रेषे भगाय श्रियसे (ऋग्वे. ५. ५९. ३); कसेनप्येवंरूपः, स्वरे विशेषः; अध्यै— काममुपाचरध्यै (तै. सं. १. २. ११. १) अध्यैनप्येवंरूपः, स्वरे विशेषः; कध्यै— इन्द्राग्नी आहुवध्यै (ऋग्वे. ६. ६०. १३); कध्यैन्— श्रियध्यै; शध्यै— पिबध्यै (ऋग्वे. ९. ९७. २०); शध्यैन्— सह मादयध्यै; तवेङ्— दशमे मासि सूतवे; तवेन्— सोममिन्द्राय पातवे (ऋग्वे ८. ६९. १०)? सुवर्देवेषु गन्तवे (तै. सं. ५. ७. ७. २) कर्तवे (ऋग्वे. ९. ८६. २०) हर्तवे;

कै–प्रयै देवेभ्यः (ऋग्वे. १-१४२. ६); इष्यै— अपामोषधीनां रोहिष्यै (तै. सं. १. ३. १०. २); अव्यथिष्यै; रोहणाय चाव्यथनाय चेत्यर्थः। तुमर्थ एव 'शकि णमुल्कमुलौ' (पा. ३. ४. १२)– अग्निं देवा विभाजं नाशक्नुवन्, अपलुपं नाशक्नुवन्। 'ईश्वरे तोसुन्कसुनौ' (पा. ३. ४. १३)— ईश्वरोऽभिचरितोः, ईश्वरो विलिखः, ईश्वरोऽवितृदः। तोसुन्कसुनौ भावलक्षणे च; तत्र स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् (पा. ३. ४. १६) 'सृपितृदोः कसुन्' (पा. ३. ४. १७) यथा— आसंस्थातोर्वेद्यां सीदन्ति, पुरा सूर्यस्योदेतोराधेयः, पुरा वत्सानामपाकर्तोः, पुरा प्रवदितोरग्नौ होतव्यम्, पुरा प्रचरितोराग्नीध्रे होतव्यम, आहोतोरप्रमत्तस्तिष्ठति, आतमितोरुपतिष्ठन्ते (तै. ब्रा. १. ६. ९. ८) आविजनितोः संभवाम (तै. सं. २. ५. १. ५) पुरा क्रूरस्य विसृपः (तै. सं. १. १. ९. ३), पुरा जत्रुभ्य आतृदः (ऋग्वे. ८. १. १२)। तद्धितेष्वसर्वविभक्तिषु 'तसिलादयः प्राक् पाशपः, शस्प्रभृतयः प्राक्समासान्तेभ्यः, मान्तः, कृत्वोऽर्थाः, तसिवती नानाञौ' इति; यथा— यतः, तत्र, इह, क्व, एकदा, एतर्हि, अधुना, इदानीम्, सद्यः, परुत्, परारि, ऐषमः, अद्य, परेद्यवि, पूर्वेद्युः, उभयेद्युः, सर्वथा, इत्थम, पुरस्तात्, प्राक्, अधः, उपरि, उपरिष्टात्, पुरः, पश्चात्, दक्षिणात्, दक्षिणा, दक्षिणाहि, दक्षिणेन, दक्षिणतः, द्विधा, द्वेधा, द्वैधम, ऐकध्यम्, बहुशो देहि, वासुदेवतः प्रति, शुक्लीभवति, अग्निसात् संपद्यते, देवत्रागच्छति, पटपटाकरोति, पचतितराम्, बहुकृत्वो भुङ्क्ते, द्विर्भुङ्क्ते, सकृद्भुङ्क्ते, बहुधा भुङ्क्ते, आदितो भवति, ब्राह्मणवद्ब्रवीति, विना देवदत्तम्, नाना देवदत्तात्, इति। अव्ययीभावो द्विधा— सत्त्वभूतार्थः, असत्त्वभूतार्थश्च इति। तयोः सत्त्वभूतार्थो यथा— उपकुम्भम्, सुमद्रम्, दुर्यवनम्, निर्मक्षिकम्, निशीतम्, सब्रह्म, बहिर्ग्रामम्, सूपप्रति, मध्येसमुद्रम्, द्विमुनि, पञ्चनदम्, लोहितगङ्गम् इति। असत्त्वभूतार्थो यथा— अधिस्त्रि, प्रत्युरसम्, अनुरथम्, प्रत्यर्थम, यथाशक्ति, सचक्रम्, यावदमत्रम, परित्रिगर्तम्, आपाटलिपुत्रम्, अभ्यग्नि, द्विपरि, अनुगङ्गं वारणसी, इति॥

शब्दस्य ताद्रूप्येणाभिधानमनुकरणम्; यदाह— 'व्यक्ताव्यक्तवर्णपदवाक्यसादृश्योक्त्योऽनुकरणानि'। तत्र व्यक्तवर्णसादृश्योक्तिर्यथा—

> छिन्नेन पतता वह्नौ यन्मुखेन हठात्कृते।
> स्वेति हेति हरेणोक्ते स्वाहासीत् सैष रावणः॥

व्यक्तपदसादृश्योक्तिर्यथा—

> गच्छेति वक्तुमिच्छामि मत्प्रिय त्वत्प्रियैषिणी।
> निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम्।

ज्ञेयोऽज्ञेय इति विधिनिषेधौ त्वयि मे स्मृतौ ।
गौरीरमण सामान्यन्यायात्तत्र विधिं दिश ॥ ८० ॥

मनःकरण्डे मे ज्ञानरसं पूरय निर्मलम् ।
नारिकेलफलजलन्यायाद्गौरीपतेऽद्भुतम् ॥ ८१ ॥

मायोपाधिप्रभेदैर्यैकोऽप्यनेकस्त्वं हि भाससे ।
गौरीपते मम जलचन्द्रन्यायादिति स्मृतिः ॥ ८२ ॥

आरोक्ष्याम्यद्य कैलासमपि तेऽल्पावकाशतः ।
काशावलम्बनन्यायादीश मे साहसं त्विदम् ॥ ८३ ॥

जन्म नाशय तद्व्याप्ता मृतिर्न स्यादिहेश्वर ।
विभग्नविवधन्यायात्तद्धि मे निर्भरं सुखम् ॥ ८४ ॥

ज्ञानाञ्जनं मदक्षिण त्वमीषच्छिव विधेह्यतः ।
त्वां हस्तामलकन्यायात्सम्यक्पश्याम्यसंशयम् ॥ ८५ ॥

मम पापचयः शंभो त्वज्ज्ञानाग्निहतो हठात् ।
अस्तु दग्धपटन्यायाच्छब्दमात्रावशेषितः ॥ ८६ ॥

नेह किंचिद्वाञ्छति त्वज्ज्ञानानन्दरसेच्छया ।
शिवेच्छा बलवतीति न्यायादेव हि मे मनः ॥ ८७ ॥

अज्ञः पापी महामूर्ख इति ज्ञात्वाऽपि मे सुखम् ।
शंभो तुष्यतु दुर्जन इति न्यायाद्धि वा कुरु ॥ ८८ ॥

ज्ञानं मम स्थिरीकार्यं जन्मैतत्क्षणभङ्गुरम् ।
गौरीश जलबुद्बुदन्यायादिति बिभेम्यहम् ॥ ८९ ॥

मायापिञ्छिकया शंभो चित्रमेतज्जगत्सृजन् ।
किमैन्द्रजालिकन्यायात्सर्वान्विभ्रमयस्यलम् ॥ ९० ॥

त्रिगुणे त्वयि गौरीश सेयं बहुगुणत्वधीः ।
कपिञ्जलाधिकरणन्यायात्त्रित्वेऽध्यवस्यति ॥ ९१ ॥

दोषानुबद्धं गौरीश त्याज्यं वैषयिकं सुखम् ।
विषपृक्तमधुन्यायात्त्वं निर्दुष्टं सुखं मम ॥ ९२ ॥

शंभो कटाक्षविस्फूर्तिर्मयि सम्यक्प्रसार्यताम् ।
अटवीचन्द्रिकान्यायात्साऽन्यथा नोपपद्यते ॥ ९३ ॥

गौरीपते तव पुरश्चित्रं विज्ञाप्यते मया ।
मन्मनस्त्वय्ययस्कान्तलोहन्यायाद्विलीयते ॥ ९४ ॥

दृष्टिः पापरजश्छन्ना त्वं च न स्फुरसीश मे ।
लोके नेत्ररजोन्यायान्निर्मलीकुरु तां शिव ॥ ९५ ॥

भक्तवत्सल भक्तोऽहमित्याक्रोशामि संततम् ।
त्वमक्षिपक्ष्मन्यायान्मां रक्ष श्रीपार्वतीपते ॥ ९६ ॥

त्वंपदात्तत्पदैकार्थं प्राप्तुमिच्छति मे मनः ।
तद्भिक्षुपादप्रसरन्यायात्किमतिरिच्यते ॥ ९७ ॥

मय्यात्मशब्दाभिधेये परमात्माभिधां दिश ।
गौरीश गोबलीवर्दन्यायात्त्वं हि विशेषदृक् ॥ ९८ ॥

प्राप्तप्राप्तिस्त्वमेवासि तत्त्वमस्यादिवाक्यतः ।
कण्ठचामीकरन्यायादाप्तोक्त्या परमेश्वर ॥ ९९ ॥

त्वामेव शरणं यान्तं मामभिन्नं कुरु प्रभो ।
शिव क्षीरोदकन्यायादिति मत्प्रार्थनां शृणु ॥ १०० ॥

श्रीरामेशमखिप्रोक्तं गौरीशार्पितमिष्टदम् ।
पठन्तु न्यायशतकं पण्डिता न्यायदर्शिनः ॥ १०१ ॥

इति रामेश्वरमखिप्रणीतं न्यायशतकम् संपूर्णम् ॥

|| श्रीः ||

# || श्रीशंकरगुरुकुलपत्रिका ||

# The Journal

OF THE

# Sri Sankaragurukulam

## Srirangam

VOLUME I—1939-1940.

EDITOR : *Gurubhaktasikhamani, Sastraprasarabhushana*
T. K. BALASUBRAHMANYA AIYAR, B. A.

LITERARY ADVISER : *Vidyasagara Vidyavacaspati* P. P. SUBRAHMANYA SASTRI, B.A. (Oxon), M.A., *Curator, Govt. Oriental Mss. Library, and Professor of Sanskrit, Presidency College, Madras.*



PRINTED AT THE SRI VANI VILAS PRESS
AND PUBLISHED BY THE
SRI SANKARAGURUKULAM, SRIRANGAM.
1940.

# ॥ श्रीशंकरगुरुकुलपत्रिका ॥

## ॥ प्रथमसंपुटस्य विषयसूची ॥

### Original Articles in Sanskrit Prose and Poetry

# The Journal of the Sri Sankaragurukulam.

CONTENTS OF VOLUME I.

## 1. Reviews.



**The Durbar Hall at the Tanjore Palace with the white Marble statue of Sri Sarabhoji Maharaja in the Centre.**

॥ श्रीः ॥

या वर्णपदवाक्यार्थस्वरूपेण विवर्तते । अनादिनिधनाऽनन्ता सा मां पातु सरस्वती ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

संपुटः २ ] विक्रमसंवत्सरवैशाखमासः [ संचिका ५



यद्वन्नद्यः समरसगताः सागरत्वं प्रपन्ना-

स्तद्वज्जीवाः समरसगताः स्वस्वरूपं प्रपन्नाः ।

वाचातीते समरसगते सच्चिदानन्दरूपे

निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥



# ॥ श्रीबालामन्त्रमातृकास्तवः ॥

श्रीमत्परमहंसेत्यादिबिरुदावलीसमलंकृत हरिहरपुरमठाधीश्वर श्रीमदभिनवस्वयं-
प्रकाशरामानन्दसरस्वतीस्वामिभिः विरचितः ॥

---

ऐन्द्रं स्थानमपि स्वसेवकजनाभीष्टस्य संपूर्तये
यत्र क्वापि सकृत्स्मृताऽपि वितरेद्या भक्तवात्सल्यतः ।
कल्याणीं कलिकल्मषप्रशमनीं कैवल्यदां तामहं
श्रीबालां त्रिपुराम्बिकां भगवतीं भक्त्या भजाम्यन्वहम् ॥ १ ॥

क्लींकारीति सदा बुधैर्निगदितां देवाधिदेवैः स्तुतां
सोमास्यां सुरसुन्दरीजननतां सौभाग्यसंपत्करीम् ।
ब्रह्मोपेन्द्रसुरेन्द्रवन्दितपदां सौन्दर्यपाथोनिधिं
श्रीबालां त्रिपुराम्बिकां भगवतीं भक्त्या भजाम्यन्वहम् ॥ २ ॥

सौख्यं साधुजनस्य दातुमनिशं या सर्वसंनाहिनी
यां चण्डादिविपक्षशिक्षणकलादक्षां समाचक्षते ।
नीरक्षीरतुषारहारधवलप्रस्निग्धमन्दस्मितां
श्रीबालां त्रिपुराम्बिकां भगवतीं भक्त्या भजाम्यन्वहम् ॥ ३ ॥

सौभाग्यं वितनोतु विश्वजननी विश्वेश्वरप्रेयसी
वाल्मीक्यादिमुनीश्वरैरनुदिनं संसेविता सादरम् ।
संसाराख्यसमुद्रमध्यकुहरान्मामुद्धरत्वञ्जसा
श्रीबालां त्रिपुराम्बिकां भगवतीं भक्त्या भजाम्यन्वहम् ॥ ४ ॥

क्लींकाराभिधमन्त्रराजनिलयां क्लेशौघविध्वंसिनीं
कैवल्यान्तसमस्तसाधुपदवीविश्राणनैकव्रताम् ।
कारुण्यामृतवर्षिलोचनयुगां कल्हारमध्यस्थितां
श्रीबालां त्रिपुराम्बिकां भगवतीं भक्त्या भजाम्यन्वहम् ॥ ५ ॥

ऐंकाराभिधमातृकोदरलसद्विद्युत्प्रभावल्लरीं
बालार्कारुणदेहकान्तिनिवहैर्देदीपिताशान्तराम् ।
राकाचन्द्रसमानरम्यवदनां शोकापहन्त्रीं सतां
श्रीबालां त्रिपुराम्बिकां भगवतीं भक्त्या भजाम्यन्वहम् ॥ ६ ॥

जगदम्बापदाम्भोजषट्पदीकृतमानसाः ।
इमां तु षट्पदीमालां कण्ठे कुरुत सादरम् ॥

## ॥ श्रीशारदाम्बास्तुतिः ॥

कल्लिडैकुरुचिं श्रीशंकरशास्त्रिभिः विरचिता ॥

विधिमुखविहरणलोले विविधागमपणितगुणगणाम्भोधे ।
विधुसमलंकृतचूडे विबुधाराध्ये विधेहि मां सुधियम् ॥ १ ॥

पुस्तकभूषितहस्ते शस्ते स्वःस्थैः सहाङ्गनैर्भक्त्या ।
वरकरधृतजपमाले मेलोमाभिर्नुते नमस्तुभ्यम् ॥ २ ॥

फुल्लाम्भोरुहपाणे फणिमणिराजत्सुनासिकाभरणे ।
जगतां भरणे प्रवणे करुणे करुणां विधेहि मय्यम्ब ॥ ३ ॥

तिर्यञ्चोऽपि मदर्चासंप्राप्तोद्यत्प्रशस्तवाणीकाः ।
इति लोकं दर्शयितुं हस्ते धत्से शुकं किमम्ब वरम् ॥ ४ ॥

मस्करिवरजितभावे मस्करितापन्नभर्तृसंमहिते ।
शृङ्गगिरितुङ्गशृङ्गभ्राजद्देहे नमामि देवि त्वाम् ॥ ५ ॥

तुङ्गाशीतलभङ्गोद्भूतैर्मन्दैः सुगन्धिभिर्वातैः ।
सेवितमम्ब तवाङ्गं द्रष्टुं सुकृती न चास्मि भूयोऽपि ॥ ६ ॥

कालव्यामम्ब पुनस्तत एव किमु स्वरूपतो भासि ।
नो चेदेवं तुङ्गः शृङ्गाद्रिः क्व क्व चास्मि दिङ्मूढः ॥ ७ ॥

विधिमहिषि शारदे मां मातस्तनयं मनागवेक्षस्व ।
तनुजकृतानपराधान् जननी सहते न किं भुवने ॥ ८ ॥

अपराधं नो कृतवानहमिति गदितुं न हि प्रभुर्देवि ।
लोके मन्दमतीनां मन्तुः सततं भवत्येव ॥ ९ ॥

अपराधसहनफलकं नमनं कुर्वे सहस्रशो जननि ।
जननीजठरे जननं मा भूद्भूयो दयस्व कल्याणि ॥ १० ॥

यदि दयसे भव पुरतो विधिमुखसौधोल्लसत्कान्ते ।
दर्शय परमाचार्यं सद्विद्यादेशकं सविधे ॥ ११ ॥

मत्तो नान्यो दीनो दीनदयालुस्त्वमेव नान्योऽस्ति ।
आर्तोऽपि पूरयेष्टं तनुजातानां गतिर्जनन्येव ॥ १२ ॥

जननीनां हि स धर्मः यत्क्रीडासक्तसुतमनस्तोषः ।
एतस्मादपि हेतोर्दर्शय परमं गुरुं सदाऽन्वक्षम् ॥ १३ ॥

नौम्यम्बासेचनकं ध्यायं ध्यायं नमामि ते रूपम् ।
भूयो भूयो याचे मा मा हासीस्त्वमेव शरणं मे ॥ १४ ॥

कलिकलितदोषजातैः प्रमुषितमेतज्जगन्ममाभाति ।
मन्दोऽहं किं कुर्वे रक्षेदं शारदे जननि ॥ १५ ॥

विद्यादायिनि वरदे मोहं शमयेः कृपां कुरु क्षिप्रम् ।
भूयः पदयोः प्रणतिं कुर्वे याचे समन्दहासमुखि ॥ १६ ॥

महनीयं नवनीयं नमनीयं प्रेक्षणीयमनिमेषम् ।
स्मरणीयं भरणीयं चरणसरोजं तवाम्ब संसेवे ॥ १७ ॥

भवदीयाः किल सर्वे मनुजा मातस्तव प्रसादस्य ।
पूर्णं पात्रं सन्तु प्रेक्षन्तां ते शुभस्य सन्तानम् ॥ १८ ॥

---

# ॥ गुरुवरपञ्चरत्नस्तोत्रम् ॥

श्रीरङ्गस्थ श्रीशंकरगुरुकुलविद्यार्थिना सुब्बरायभट्टेन विरचितम् ॥

---

कवेरजातटे स्थितं गुरोः कुले प्रतिष्ठितम् अभीप्सितेष्टदायकं चतुर्मठप्रवर्तकम् ।
प्रमुख्यशिष्यसंवृतं परात्मतत्त्वबोधकं प्रजाधिपाभिवन्दितं भजेऽहमात्मतुष्टये ॥ १ ॥

मनःस्थमोहमोचकं मनोविनोददायकं नमस्कृतां प्रसादकं नमामि तं गुरुं परम् ।
निरस्तभेदवादकं विशुद्धतत्त्वबोधकं भवादिबन्धभेदकं समाश्रये निरन्तरम् ॥ २ ॥

प्रशान्तचित्तसंयुतं सुशान्तकान्तविग्रहं स्वमातृचित्ततोषकं समस्तलोकरक्षकम् ।
अशेषशास्त्रपारगं समाश्रितान्तिमाश्रमं नमामि शंकरं गुरुं स्वपालपूरितापगम् ॥ ३ ॥

सुरापगासमीपगं गिरीशपादपूजकं सुभाष्यदीपदायकं नमामि तं हि देशिकम् ।
कुकर्ममार्गखण्डकं प्रचण्डधीविमण्डितं जिताखिलारिसंचयं धरावतीर्णमीश्वरम् ॥ ४ ॥

शिवंकरं कृपाकरं गुरोः परंपरागतं मुदा युतं सदाशिवं सरागलोकदुर्लभम् ।
भवावताररूपिणं भवार्तबोधदायकं भवाब्धिदुःखभञ्जनं भजामि भक्तिपूर्वकम् ॥ ५ ॥

गुरोरिदं च पञ्चकं प्रपञ्चपंकशोषकं पठन्ति ये प्रदोषके प्रकृष्टचित्तहर्षदम् ।
इहापि सर्वसंपदं परत्र चापवर्गकं गुरोरपाङ्गपालतामवाप्नुवन्ति तेऽचिरात् ॥ ६ ॥

---



# ॥ केरळराज्यमहिमा ॥

बि. ए. बिरुदभाजा पि. जि. सुन्दरशास्त्रिणा विरचितः ॥

त्रिशिरःपुरजातेन त्रिशिवस्थलवासिना ।
गैर्वाण्यामथ हौण्याख्यवाण्यां च समधीतिना ॥

कविना सुन्दरेशाख्यशास्त्रिणाऽत्र यथामति ।
वर्ण्यते केरलाभिख्या केरलेशान्तिकेऽधुना ॥ २ ॥

पुरा परशुरामेण सर्ववेदसयाजिना ।
उत्सृष्टसर्वैश्वर्येण वासतेयस्थलार्थिना ॥ ३ ॥

परश्वधे समुत्सृष्टे वारुणे वरुणालये ।
सद्य एवाम्बुधेरस्मात् भूमिर्नूत्नाऽभ्यजायत ॥ ४ ॥

इति हेतोः स्थानमिदं क्षेत्रं परशुरामजम् ।
केरलीयं पुरावृत्तं पुराणोक्तमिदं खलु ॥ ५ ॥

सामाजिका व्यवस्थाश्च रामारमणरिक्थदाः ।
वर्णाश्रमाश्रिता धर्माः जामदग्न्यप्रवर्तिताः ॥

अत्रैव नियमाध्यायो निवासश्च गुरोः कुले ।
मौञ्जीदण्डाजिनधृतिः क्रियते ब्रह्मचारिभिः ॥

हरेश्चापि हरीतक्या गायत्र्याश्च दिने दिने ।
भजनं भक्षणं चापि जपनं च यथाक्रमम् ॥ ८ ॥

मानसं वाचिकं हन्ति कायिकं च मलं ध्रुवम् ।
सहस्रपरमा देवी शतमध्या दशावरा ॥ ९ ॥

देशकालानुरोधेन यथाशक्ति च नित्यशः ।
प्रातः प्रगे च मध्याह्ने सावित्री जप्यतां द्विजैः ॥

इति स्मृत्यनुसारेण नम्बुद्रिप्रमुखैर्द्विजैः ।
प्रत्यहं जप्यते देवी सावित्री भक्तिपूर्वकम् ॥

समुद्राद्र्यवधिर्देशः मलैयाळमितीर्यते ।
द्रामिडैः क्रियते चेयं व्युत्पत्तिरिति बुध्यताम् ॥

वृक्षेष्वत्युन्नतः कश्चिद्वाते केलति भूरिशः ।
अतो वै तुङ्गवृक्षोऽयं केलवृक्ष इतीर्यते ॥ १३ ॥

केलः परिणतः केरस्त्वभेदाद्रलवर्णयोः ।
नालीप्रख्यप्रकाण्डत्वान्नालिकेराह्वयोऽपि सः ॥

अभेदो डलराणां च नालीशब्दे प्रदृश्यते ।
ईदन्ता बहवः शब्दाः प्रयोज्याः स्युरिदन्तवत् ॥

इत्येतद्रूपवैकल्प्यं शब्दशास्त्रानुमोदितम् ।
नालिनाल्यौ नाडिनाड्यौ नारिनार्यौ समादृतौ ॥

---

२ अभिख्या, नाम, शोभा च । ३ सर्ववेदसः, यज्ञविशेषः । वासतेयं, वासयोग्यम् । ११ नम्बुद्रिः नैसर्गिककेरलीयद्विजः । १२ समुद्राद्रि मलैयालम्, समुद्रः, ஆளம், ஆழம் the deep, अद्रिः மலை Mount. द्रामिडैः, द्रामिड, दामिड, दामिल दमिल् தமிழ். १३ केलति 'केल' चलने १४ प्रख्यः समः

अतः शब्दे नालिकेरे बहुरूपत्वसंभवः ।
फले च नारिकेलस्य सन्ति बह्वयो भिदा यथा ॥

बाहुल्यात्केरवृक्षाणां तत्फलानां विनिर्गमात् ।
देशोऽयं केरलाख्योऽभूदिति प्राज्ञैर्वितर्क्यते ॥

कवर्णश्च चवर्णश्च परिणाम्यौ परस्परम् ।
इति हेतोरयं देशः चेराख्यस्तालकेतनः ॥ १९ ॥

केरलीयाद्रिमाला च मलयाचलनामभाक् ।
वेंकटाचलशब्दश्च यथा वृद्धारुणाचलौ ॥ २० ॥

चवर्णहीनाः प्रोच्यन्ते प्रायो जानपदैर्जनैः ।
तथैव मलयालाख्यामवाप्नोन्मलयाचलः ॥ २१ ॥

अत्राम्बासीत्तपस्यन्ती तपस्ये मासि सुव्रता ।
ललाटंतपरश्मिभ्यः न मनागपि रक्षिता ॥ २२ ॥

अब्भक्षा वायुभक्षा च शीर्णपर्णाशना तथा ।
अन्ततोऽपर्णभक्षा च परमेका तपो व्यधात् ॥

परमैकाह्वयोऽप्यस्यां नूनमन्वर्थतामियात् ।
अनाशुषीं प्रेक्ष्य देवा अपर्णेत्यस्तुवंश्च ताम् ॥

महेशविविवक्षैव पतीयन्त्यास्तपःफलम् ।
ज्ञात्वाऽपर्णावुवूर्षीं च पुपुर्षुस्तन्मनोरथम् ॥

चैत्रस्य पूर्वफल्गुन्यामाविरासीद्दयानिधिः ।
अपर्णापार्णसंनिष्टं अर्णारण्यं समाययौ ॥ २६ ॥

वृषाद्रिं गोवृषारूढः सहसैव समाययौ ।
दृष्ट्वाऽविर्भूतमीशानमन्वयासीत्पतिंवरा ॥ २७ ॥

कृत्वा पाणिगृहीतां तां गिरिशृङ्गं शिवोऽनयत् ।
तपःफलप्रदः शंभुः तदभीष्टं समर्थयन् ॥ २८ ॥

तस्मिन् शुभे दिने लग्ने मुहूर्ते शोभने शिवः ।
चक्रे पाणिगृहीतीं तां पाणिं संगृह्य पाणिना ॥

आदौ तान्तां स्वयं प्राप्तां प्राणिन्ये पार्वतीं सतीम् ।
धित्तां तां धिक्त्वसंदिगिंध नृत्यतां गीयतां कलम् ।

जुष्टां वामार्धतां तुष्टां हृष्टां पुष्टां मुदान्विताम् ।
स्तुतां स्तुवीतां स्तुवतां तं तां तौ आदिदम्पती ॥

इत्यतान्तं प्रगायन्तो ननृतुः पार्षदा जनाः ।
ववन्दिरे मुमुदिरे स्वस्वाभीष्टं प्रपेदिरे ॥ ३२ ॥

उद्वाहं शिवयोर्द्रष्टुं सर्वे देवा समाययुः ।
विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनराः ॥ ३३ ॥

मुनयो वालखिल्याद्याः पतञ्जल्यादियोगिनः ।
अन्ये ब्रह्मर्षयश्चापि भूसुरा वेदपारगाः ॥ ३४ ॥

शिवत्रयोद्भूतैर्मन्त्रैः शिवरुद्रादिभिस्तथा ।
चक्रुर्नमांसि भूयांसि शिवायै च शिवाय च ॥

देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खादभूत् ।
जगुः कलं च गन्धर्वाः ननृतुश्चाप्सरोगणाः ॥

---

१८ केरल केराः अस्य सन्ति इत्यर्थे 'सिध्मादिलच्' मांसलवत् । 'ला' दाने आदाने च, केरान् लाति ददाति इति वा । २५ पतीयन्त्याः पतिं आत्मनः इच्छन्त्याः, वुवूर्षा वृधातोः सन्नन्तादप्रत्ययः, पुपूर्षुः पृधातोः सन्नन्तादुप्रत्ययः २६ अपार्ण, Distant, Near. अर्णारण्यं Teak forest. २७ वृषाद्रिम् तन्नामकं गिरिम् २८ पाणिगृहीतां; करगृहीताम् । २९ पाणिगृहीतीं भार्याम्, पाणिगृहीती भार्यायाम् ३१ स्तुतामित्यादि लोडन्तमाला ३२ ववन्दिरे, मुमुदिरे, प्रपेदिरे लिडन्तमाला ३३ शिवयोः शिवस्य शिवायाश्च ३५ शिवत्रयोद्भूतैर्मन्त्रैः ताम्, ताम्, ताम्, तीम्, तीम्, धित्ताम् ताम् धिक्, दिगिंध, तौ इत्यादि नृत्तपद्धतिः, शिवत्रयं वेदत्रयं त्रयी ।

पञ्चवाद्यान्यवाद्यन्त वाद्यान्यन्यान्यजूघुषन् ।
साधु साध्वित्युत्सवं तं प्रेक्षकाश्च समस्तुवन् ॥

विश्वभद्रंकरस्यास्योत्सवस्य ख्यापनाय च ।
आग्नेयचूर्णभरिता नाल्य आसन्प्रदीपिताः ॥

ते त्रिलोकाह्वानशब्दा महान्तः पर्यपूरयन् ।
दिशश्च विदिशश्चापि तथैवावान्तरा दिशः ॥

विचित्रिताग्नेयचूर्णैः भरिता बहुबाणकाः ।
क्षणदायां दीपिताश्च त्रिलोकीं समभासयन् ॥

स्वर्गसोपानमञ्चेषु बह्व्योऽदीप्यन्त दीपिकाः ।
द्राविड्यां स्वर्गसोपानः सोर्कपान इतीर्यते ॥४१॥

देव्या मनोरथश्चायमभूत्कात्स्न्र्येन पूरितः ।
अभीष्टपूरणश्चायमुत्सवः पूरनामकः ॥ ४२ ॥

सोऽयं महोत्सवोऽद्यापि चाल्यते प्रतिहायनम् ।
साडम्बरं च साघोषमहंपूर्विकया भृशम् ॥ ४३ ॥

त्रिलोकाह्वाननाल्यश्च घोष्यन्तेऽस्मिन् दिवानिशम् ।
दिवसस्यास्य मध्याह्ने पञ्चवाद्यस्वरैः सह ॥४४॥

आनीयन्ते गजारूढा अर्चिता देवमूर्तयः ।
घर्मघर्मांशुरश्मिभ्यः पट्टच्छत्रैः सुगोपिताः ॥

गजारूढैर्माणवकैर्वीजिताः पार्श्वयोर्द्वयोः ।
वालधिव्यजनैश्चापि बर्हजैर्वीजनैरपि ॥ ४६ ॥

मूर्तिवाहा गजा एते तथा तत्पार्श्वगा गजाः ।
ललाटेऽपि च शुण्डायां मण्डिता हेमपट्टकैः ॥

पट्टकास्ते जाज्वलति मधोर्माध्यंदिनातपे ।
चिरं केरलवाद्यानि वाद्यन्ते मूर्तिसंनिधौ ॥४८॥

दूरस्था अपि दूरेत्या उत्सवं संदिदृक्षवः ।
शुश्रूषवो वाद्यघोषं खिन्नास्तिष्ठन्त्यतन्द्रिताः ॥

वासरस्यास्यैव रात्रावाप्रभातं निशीथतः
अभ्रंलिहाग्नेयबाणाः पर्यायेण जयेच्छया ॥ ५० ॥

गणद्वयेन दीप्यन्ते विचित्रा बहवः क्रमात् ।
उच्चैस्तमां निष्टनन्तश्चान्धीकुर्वन्त ईक्षणम् ॥

बहुवारं स्फुटन्तश्च किरन्तश्चित्रतारकाः ।
स्फुलिङ्गपुञ्जान्विविधान् किरन्तो व्योममण्डलात् ॥

स्फुलिङ्गनाल्यो भूमिष्ठाः कूजन्त्यः सुचिरं कलम् ।
वमन्त्यग्निकणस्तोमं पुष्पगुल्मसमाकृतिम् ॥ ५३ ॥

उत्क्षिपन्त्यपरा नाल्यो नानावर्णाग्निगोलकान् ।
चिरं फटफटायन्ते मालाः फटकनिर्मिताः ॥५४॥

दृष्टिमद्भिर्दर्शनीया ह्यग्निक्रीडा निशाकृता ।
तथैव प्रेक्षणीया स्याद्रजता हेममण्डिता ॥ ५५ ॥

सुबहून्यन्यदृश्यानि वर्तन्तेऽस्मिन्महोत्सवे ।
समायान्ति ग्रामताया जनता बन्धुता अपि ॥

सहायतासमेताश्च दृश्यान्यनुबुभूषवः ।
आलुलोकिषवो मर्त्यसङ्घं जानपदा जनाः ॥५७॥

ईचिक्षिषव ईशानं दुर्गादेवीं दिदृक्षवः ।
शिवौ पुपूजयिषवस्तत्प्रसादं जिघृक्षवः ॥ ५८ ॥

स्वलंकृताश्च गजताश्चारुचामरचालनम् ।
हिरण्मयप्रभोपेताः यात्रामूर्तीर्दिदृक्षवः ॥ ५९ ॥

शुश्रूषवः पञ्चवाद्यं यात्रामनुयियासवः ।
चिक्रीषवश्च क्रेयानि क्रय्यं पण्यं च संभृतम् ॥

---

३८ विश्वभद्रंकरस्य सुमागमः विशेषः, आग्नेयचूर्ण Gunpowder. ३९ त्रिलोकाह्वानशब्दाः आगमशास्त्रप्रसिद्धमेतत् । ४० विचित्रिताग्नेय Gunpowder mixed with colour balls. ४२ पूरनामकः पूरयतीति पूरः, पचाद्यजन्तः, तन्नामकः, ५४ अग्निगोलकान् Fire balls, फटकः crackers.

बुभुक्षवः फलादीनि पानकानि पिपासवः ।
लिलक्षयिषव आग्नेयबाणान् रात्रौ प्रदीपितान् ॥

पौरा जना इहत्याश्च परेऽप्यगणितश्रमाः ।
बहुवारं दृष्टदृश्याः श्रुतश्रव्या मुहुर्मुहुः ॥ ६२ ॥

सङ्घशः संमिलन्त्येव पूरोत्सवदिदृक्षया ।
इत्येतदेव पर्याप्तं उत्सवश्रैष्ठ्यवर्णने ॥ ६३ ॥

सूर्योदयः समुद्रश्च व्योमधूमरथौ तथा ।
मुहुर्दृष्टा अप्यपूर्वाः तथा पूरमहोत्सवः ॥ ६४ ॥

शिवौ यतोऽत्र प्रसन्नौ त्रिलोक्या आदिदंपती ।
शुभंयुः सर्वदा भाति देशोऽयं सर्वथा सदा ॥

शिवः शिवार्थं लोकानां शिवलिङ्गाकृतिं दधौ ।
गिरिजातमिदं लिङ्गं गिरिजाजानिवल्लभम् ॥

स्वयंभूतं लिङ्गमिदं वृषभाद्रीश्वराह्वयम् ।
देवी च पर्वतारूढा पार्वतीति प्रकीर्त्यते ॥ ६७ ॥

द्राविड्यां वृषशब्दस्य विडैरूपं प्रदृश्यते ।
अतो विडैक्कुनाथाख्या वृषेशस्य प्रकल्पिता ॥

तस्माद्वडक्कुनाथाख्या ह्यपभ्रंशः सुनिश्चितम् ।
इत्थं शिवालयोद्धोऽयं संजज्ञे हि पुरातनः ॥

आविरासीद्यदा शंभुर्वृषभाद्रितटे तदा ।
पर्यन्तस्थार्णविपिनदेशे प्रत्यग्दिशि स्थिते ॥ ७० ॥

प्रत्यक्चित्ताः प्राङ्मुखाश्च सदा पञ्चाग्निमध्यगाः ।
आसंस्तपश्चरन्तोऽत्र योगिनो ध्याननिष्ठिताः ॥

एभ्यो योगिप्रकाण्डेभ्यः प्रदातुं शाश्वतं शिवम् ।
किंस्वित्प्रत्यङ्मुखोऽत्रासीत् प्रपन्नेभ्योऽपराङ्मुखः ॥

सद्योजातादिभिः पञ्चवदनैः संयुतोऽपि सन् ।
भक्तरक्षैकतानत्वात् किंस्विदेकमुखोऽभवत् ॥

हैयङ्गवीनसदृशं हृदयं योगिनां खलु ।
तत्र मग्नो निरूढश्च सुखासीनः सदाशिवः ॥

सदाशिवं वितनुते भोगिष्वस्मादशेष्वपि ।
इत्यौपनिषदं तत्त्वं व्याख्यातुं चर्मचक्षुषाम् ॥

शिवलिङ्गमिदं किंस्विदास्ते घनघृतावृतम् ।
न कोऽपि दृष्टवान्मूर्तिमिमामन्तर्मुखादृते ॥७६॥

अतः पयोदधिमधुशिवाद्यैरभिषेचनम् ।
गूढस्वयंभुमूर्तेस्तु भवेन्नूनं सुदुष्करम् ॥ ७७ ॥

प्रातः प्रगे प्रत्यहं च पूज्यते परमेश्वरः ।
गूढमूर्तिप्रतिनिधीकृतबिम्बे त्वनन्तरे ॥ ७८ ॥

पूज्यः शिवचतुर्दश्यां शिवद्रुमदलैः शिवः ।
शिवेष्टायास्तृणैश्चापि शिवप्रियसुमैरपि ॥ ७९ ॥

द्रोणपुष्पैर्द्रोणमितैर्लभ्यैरन्यैः सुमैरपि ।
अर्चनान्ते धूप्यते च शिवधूपादिगान्धिकैः ॥

साज्यत्रिवर्तिसंयुक्तः ततो दीपः प्रदर्श्यते ।
निवेद्यते च शाल्यन्नं शिवबल्लभजं फलम् ॥८१॥

खर्पूरदेवकुसुमचन्द्रजातीफलान्वितम् ।
कर्पूरचूर्णसंयुक्तं ताम्बूलं च निवेद्यते ॥ ८२ ॥

---

६४ व्योमधूमरथौ Aeroplane and steam cars. ६९ उद्धः श्रेष्ठः ७१ प्रत्यक्चित्ताः अन्तर्मुखाः ७२ शाश्वतं शिवम् मोक्षम् ७७ शिवं जलं, तीर्थम् ७९ शिवद्रुम बिल्ववृक्षः; शिवेष्टा दूर्वा ; शिवप्रियः बकवृक्षः, धुत्तूरः ८० द्रोणपुष्पैः தும்பை ; द्रोणमितैः, குறுணி 4 Madras measures. ८१ शिवबल्लभः Mango ८२ खर्पूर areca ; देवकुसुमं लवङ्गम् ; चन्द्रः क्षुद्रैला ; चूर्णं मुक्ताचूर्णम्

पञ्चशाखान्विते दीपे पञ्चशाखद्वयोद्धृते ।
सुदीपितैश्चन्द्रखण्डैः दीपैरारात्रिकाह्वयैः ॥८३॥

नीराज्यते सप्तकृत्वः चन्द्रखण्डधरः प्रभुः ।
नानाकुसुमभरितः दीयते च सुमाञ्जलिः ॥८४॥

मण्डने शिवसुन्दर्यास्त्वास्ति वैचित्र्यसंगतिः ।
शिवद्विष्टैरपि सुमैर्मण्ड्यते हि शिवप्रिया ॥८५॥

यतः प्रत्यङ्मुखो देवः प्रत्यङ्मुख्योऽत्र निम्नगाः ।
सदाशिवेरिता एताः सदातोयाश्च निर्मलाः ॥

सदाफलाख्यपनसैरालयोऽयं परीवृतः ।
सदापुष्पफलोल्लोचः सदादानाह्वयः प्रभुः ॥८७॥

गजाननोऽगजासूनुः स्वभक्तेप्सितदायकः ।
बोधिभूरुहमूलेऽसौ राजते शिवसंनिधौ ॥ ८८ ॥

अतः प्रजाः सदानन्दाः निर्विघ्नाः स्वस्वकर्मसु ।
भूपालाश्च सदादानाः सदादाना वने द्विपाः ॥

वनेषु शिवदारूणि चालयेषु शिवद्रुमाः ।
शिवाकन्दप्रदा गुल्माः वनेषूपवनेषु च ॥ ९० ॥

देव्या उत्तानितो हस्तः प्रोच्यते ह्यभयप्रदः ।
करोऽवतानितस्तस्याः कथ्यते हि शिवंकरः ॥

अतो जनाः केरलीयाः अभयाश्च शिवान्विताः ।
अभयाख्यशिवावृक्षाः रोहन्ति बहुशो वने ॥९२॥

अपर्णाभ्यर्णजो वृक्षः दृश्यते सुमहानहो ।
सुपर्णश्च सदापर्णः शीतप्रच्छायदायकः ॥ ९३ ॥

कृपया परमैकाख्यदुर्गादेव्याः सुनिश्चितम् ।
तद्ग्रामस्थाश्च वणिजः तत्प्रसादात्सुदक्षिणाः ॥

अपर्णा बहुवामाश्चाप्येकवामाः किरिस्तवाः ।
सुवर्णवस्त्रलोहादिपण्यैर्व्यवहरन्ति च ॥ ९५ ॥

आसन्पुरा केरलीयाः प्रातः शिवरसप्रियाः ।
अत एवाभवंस्ते तु सिह्मसंहननान्विताः ॥

कापीपाने कापि रुचिस्तदादेशीकृताऽधुना ।
तथाऽपि परिरक्ष्यन्ते शिवायाः सेवयैव ते ॥९७॥

केरलीयमहीपालाः प्रजाहितरताः सदा ।
रथ्याः कृता दृढाः श्लक्ष्णाः स्वयंवहरथोचिताः ॥

नूनमन्वर्थतां प्राप्ताः पार्श्वे पद्यासमन्विताः ।
पद्याः खण्डशिलाप्रान्ताः एते स्युः पद्रथोचिताः ॥

राजमार्गे तत्र तत्र स्थापितैः पुररक्षिभिः ।
रथाः पान्थाश्च नीयन्ते स्वोचितेष्वेव वर्त्मसु ॥

---

८३ पञ्चशाखद्वयं करद्वयं; चन्द्रखण्डैः with camphor ८५ वैचित्र्यसंगतिः वैलक्षण्यम्, शिवद्विष्टानि தாழம்பூ केतकीकुसुमानि ८७ सदाफलाः Jack tree, सदापुष्पः Coconut tree उल्लोचः Canopy, सदादानः विघ्नेश्वरः ८८ बोधिभूरुहः अश्वत्थः ८९ सदानन्दाः सदा आनन्दभरिताः, सत्सु आनन्दयुक्ताश्च; सदादानाः भूपालाः सदा दानशीलाः, सन्मार्गेण करादानशीलाः, सदादानाः द्विपाः सदा मदजलस्राविणः ९० शिवदारूणि देवदारुवृक्षाः; शिवाकन्दम् हरिद्रा, गन्धहरिद्रा च ९२ अभयवृक्षः, शिवावृक्षः கடுக்காய் Yellow myrabolan ९५ व्यवहरन्ति च trade in ९६ शिवरसः கஞ்சி, सिह्मसंहननः सर्वाङ्गसुन्दरो मर्त्यः सिह्मसंहननाह्वय, सिह्मस्यापि संहनने कुशलाः ९७ तदादेशीकृता तस्य आदेशत्वेन समाहृतः ९८ स्वयंवहरथोचिताः Fit for automobile traffic, ९९ पद्या Footpaths खण्डशिलाप्रान्ताः Bordered with dressed stones. पद्रथोचिताः Fit for foot passengers. १०० पुररक्षिणः Constabl

सिच्यन्ते राजमार्गाश्च सलिलैर्यन्त्रफूत्कृतैः ।
सूच्यन्ते नामफलकैर्वीथ्यः पृच्छां विनाऽखिलाः ॥

दीपिताः सुपथा दीपैः शिवशेखरसंनिभैः ।
भूतैलदीपाः सामान्याः क्लृप्ताः संकटवीथिषु ॥

बहुत्रापां दुरापत्वात्कूपे कटुजलस्थितेः ।
तटाकाद्वाऽथ नद्या वा व्यवधाने महत्यपि १०३ ।

आनीयते जलं स्वादु नालीद्वारा क्वचित्क्वचित् ।
वीथ्यस्तथाविधा एव करतोयाः कृताः सदा ॥

सुगन्धिभिश्चित्रपर्णैः कुसुमैर्भरितैः क्षुपैः ।
फलैः स्वादुतमैर्नम्रैः शाखाभिर्लक्षितैर्द्रुमैः ॥

नानागुल्मैर्लताभिश्च भासमानं च सर्वतः ।
मुख्योद्यानं नातिदूरे राजधान्याः सुनिर्मितम् ॥

गिरेरुपत्यकायां च तथैवाधित्यकातटे ।
उद्भिज्जशास्त्राधीतीनां छात्राणां ज्ञानवर्धकम् ॥

अत्रादर्शप्राणिवर्गाः रक्ष्यन्ते सावधानतः ।
राज्ये सन्तीतरत्रापि लघूद्यानानि कानिचित् ॥

अगदंकारशालासु प्राच्यपाश्चात्यरीतितः ।
रुजया पीडिता मर्त्याः चिकित्स्यन्ते विना व्ययम् ॥

स्त्रीपुंसयोश्च प्रत्येकं वैद्यशाला प्रकल्पिता ।
औषधीयाः कारुशालाश्चाल्यन्तेऽत्र क्वचित्क्वचित् ॥

कुष्ठरोगिचिकित्सार्था शालैकाऽस्ति सुदूरतः ।
उन्मत्तानां चिकित्सार्थे शालैकाऽस्ते पुराद्बहिः ॥

लघुसाध्यामया मर्त्याः गृहान्यान्ति चिकित्सिताः
चिरसाध्यामया ये स्युस्ते रक्ष्यन्तेऽत्र सादरम् ॥

तिर्यग्जन्तुचिकित्सार्थे शालैकाऽपि च वर्तते ।
विना व्ययं चिकित्स्यन्ते पशुपक्षिमृगादयः ॥

क्षुधार्दितेभ्यः स्वाद्वन्नं धर्मसत्रेष्वदीयत ।
ईदृश्यो भुक्तिशालाश्च बह्व्य आसन् बहुत्र च ॥

विद्यार्थिनोऽभ्यागताश्च नियतस्थानिका अपि ।
एतादृशेषु सत्रेषु जघसुः प्रत्यहं पुरा ॥

भूरिभुक्त्यैव भूयिष्ठा भोक्तारस्त्वभवन्भृशम् ।
अलंकर्मीणताहीनाः पात्रेसमिततां श्रिताः ॥

इति मत्वा भुक्तिशालाः काश्चिदेवावशेषिताः ।
राजधान्यां पणक्षेत्रे स्थलेष्वन्येषु केषुचित् ॥

प्रकृतीनां प्रतिनिधिसभा चैका व्यवस्थिता ।
तस्यै निवेद्यते देशवृद्धिश्च प्रतिहायनम् ॥११८॥

करकौशलवृद्ध्यर्थं शिल्पशालाः प्रकल्पिताः ।
तान्तवं वस्त्रवयनं सौचिकं पटरञ्जनम् ॥११९॥

नानास्तरणनिर्माणं चित्रलेखनरञ्जने ।
कौलालं दारवं चापि शिष्येभ्य उपदिश्यते ॥

---

१०२ **शिवशेखरसंनिभैः** resembling the moon. **भूतैलम्** kerosene oil **संकटवीथिषु** in byelanes. १०४ **करतोयाः** सदानीराः, करेणैव लभ्यमानजलाः इत्यर्थः १०५ **क्षुपैः** Bushes १०६ **गुल्मैः** thickets **मुख्योद्यानं** central farm १०७ **उद्भिज्जशास्त्रं** Botany १०८ **आदर्शप्राणिवर्गाः** animals for show as model ११० **कारुशालाः** Pharmaceutical works ११२ **लघुसाध्यामयाः** Out-patients **चिरसाध्यामयाः** In-patients ११७ **पणक्षेत्रं** Tiruppanathura ११९ **करकौशलं** manual skill, **तान्तवं** spinning, **वस्त्रवयनं** weaving **सौचिकं** stitching **पटरञ्जनं** dyeing १२० **नानास्तरणनिर्माणं** mat and carpet making **चित्रलेखनं** drawing **चित्ररञ्जनं** painting, **कौलालं** ceremic

स्त्रैणपौरुषज्ञानवृद्धयै विद्याशालाश्च निर्मिताः ।
उपाध्यायाभिरेवात्र पाठ्यन्ते महिलाजनाः ॥

आचार्यापदमारूढा आचार्यान्योऽपि सन्ति हि ।
अध्यापकत्वशिक्षार्थे शिक्षाशाला च वर्तते ॥

शास्त्राण्यधिजिगांसूनां जिज्ञासूनां कला अपि ।
सुमहत्यौ कलाशाले हितार्थे निर्मिते उभे ॥

किरिस्तवाहृता चैका राजते त्रिशिवस्थले ।
अपरा राजकीया तु प्रतीचीनेरणाकुले ॥१२४॥

समुद्रवेलासंनिष्ठे राजते हीरणाकुले ।
गाम्भीर्यौन्नत्यमर्यादा चापरागसमीरणा ॥ १२५ ॥

न कस्याप्यक्षिकालुष्यं विदधाति कदाचन ।
उत्तमेयं कलाशाला ह्युत्तमाशयवर्धिनी ॥१२६॥

रत्नाकरोपकण्ठस्था रत्नसानुकरेक्षिता ।
रत्ननाभाहृता चेयं जलाशयसमा ध्रुवम् ॥१२७॥

वर्धमाना राजकरैः नाराशयतटस्थिता ।
बाभात्येषा निरुपमा गतौ न्यक्कृततामसी ॥

भीषयत्यलसानेव सोद्यमान्चन्दयत्यसौ ।
सेविता बहुभिः पोतैः सूत्रवस्त्राद्यलंकृतैः ॥

लघुपोतैर्बृहत्पोतैः सधूमैश्चाप्यधूमकैः ।
अन्तर्मुखैश्च निष्णातैः पोतैः क्रीडोपयोगिभिः ॥

गृहीतशास्त्रशस्त्रैश्च क्षात्रैररिनिषूदनैः ।
पुस्तहस्तैर्वणिग्भिश्च तथैव क्षेत्रसेविभिः ॥

पुण्यश्लोकैर्निर्मलैश्च तीर्थैर्बहुनिषेविता ।
जुष्टाऽध्यक्षाज्ञामुसृत्या विनीतैः पोतनेतृभिः ॥

श्मश्रुलैश्च महामोदैः श्वेतकृष्णैर्यहूदिभिः ।
सीरियैरपि दूरस्थैः पोतवाणिज्यधूर्वहैः ॥१३३॥

प्रवरावरमध्यादिकक्ष्याकल्लोललोडिता ।
मुक्तामाणिक्यशङ्खादिरत्नैरपि विराजिता ॥१३४॥

---

art, दारवं carpentry १२२ आचार्या Instructress, आचार्यानी teachers wife, शिक्षाशाला training school १२४ प्रतीचीनेरणाकुलं Ernakulam ईरयतीति ईरणः वायुः, प्रतीचीनेरणः South-west monsoon १२५ अपरागसमीरणे अप+राग+समीरण its policy is actuated by no likes and dislikes; अ+पराग+समीरण The wind flowing over it is dustless १२८ वर्धमानेति Maintained by State revenue. Having flood tide under the moon नाराशयेति नार+आशय+तटस्थिता paying due regard to popular opinion नाराशय+तटस्थिता confining itself within its shores निरुपमा Peerless, Peerless (pierless) न्यक्कृततामसी outshining the St. Thomas College in its progress, illuminating the nocturnal darkness with its phosphorescent search-light १३० लघुपोतैः by young students, by small vessels बृहत्पोतैः by grown-up students, by large ships सधूमैः emitting cigar smoke, emitting smoke from chimney अधूमकैः free from smoking habit, smokeless (electricity driven) अन्तर्मुखैः Introspective and deep learned men, Submarines sailing under the surface क्रीडोपयोगिभिः Students fit only for games, Yachts used only as pleasure-boats १३३ श्वेतकृष्णैर्यहूदिभिः By white and black Jews सीरियैरपि By far off Syrians who were once agriculturists and who are now foremost in sea-borne trade.

प्रत्यहं वर्धमानेयं देशक्षेमाय कल्पताम् ।
न कुत्रान्यत्रापि दृश्या विद्यासंवृद्धिरीदृशी ॥

नानाकिरिस्तवाचार्याः सभिका अपि केचन ।
निरपेक्षा यतन्ते हि विद्याया अभिवृद्धये ॥१३६

राज्यभारस्य वहने करदाः करदाः प्रजाः ।
विद्यावर्धनभारस्य वहने यश्च बाहुदः ॥१३७॥

तस्मै प्रदीयतां राज्ञा राजबाहुदलाञ्छनम् ।
न देवानां प्रियो राज्ये सर्वे देवप्रिया जनाः ॥

प्राड्वा धर्मासनारूढाः खट्वारूढो न कश्चन ।
अहंयुर्दृश्यते नात्र शुभंयुरखिलो जनः ॥१३९॥

वाचालश्चापि वाचाटो देशेऽस्मिन्नादृतो भवेत् ।
वावदूका यायजूका जञ्जपूकाः समादृताः ॥

नानाविधा दन्दशूकाश्चञ्चुरत्यत्र गुल्मतः ।
जञ्जपूकैर्जाङ्गलिकैस्तद्विषं तु निवार्यते ॥ १४१ ॥

राजवंश्यो नागरिकः विषवैद्योऽत्र राजते ।
जनानामिव राज्ञां च नास्त्येवाहिभयं क्वचित् ॥

भद्राकृतशिरस्काश्च श्मश्रुला ये तुरुष्कजाः ।
नानाकिरिस्तवजनाः यहुदीयास्तथेतरे ॥ १४३ ॥

सन्ति विस्मृतवैमत्याश्चूडालैरार्यजैः सह ।
चोदिता राजभक्त्या च देशोन्नत्यभिकाङ्क्षया ॥

प्रजासु वत्सलो भूपश्चात्मजेषु पिता यथा ।
मोदते जनभद्रेषु तत्कृच्छ्रेष्वपि खिद्यति ॥१४५॥

लोहमार्गः कालदेशदैर्घ्यं ह्रसयति ध्रुवम् ।
अर्थव्ययेन महता मार्गो विस्तारितोऽधुना ॥

स्थवीयांसो धूमरथाः यान्त्यनेनार्णवावधि ।
यत्नेनानेन देशीयवाणिज्यं स्फीतिमाप्नुयात् ॥

वैदेशीयं च वाणिज्यं पुरो वर्धयितुं भृशम् ।
सम्राडनुज्ञया साकं तत्सहोद्योगतोऽपि च ॥

श्रीपद्मनाभराज्यस्य सहकारित्वयोगतः ।
प्रत्यक्पारावारपारपार्श्वेनिष्ठो जलाशयः ॥ १४९ ॥

बहुद्रव्यं व्ययीकृत्य भृशं गाढतरः कृतः ।
अतो जलाशयः सोऽयं शस्तपोताशयीकृतः ॥

बह्व्यो नावो गरीयस्यः संयुता द्वित्रकूपकैः ।
वातानुगा धूमनीताः पुरा दूरे वितस्थिरे ॥

प्राप्त्यैवास्यानुकूल्यस्य नूनं नावोऽखिलाश्च ताः ।
अनुकूलं समायायुः जनानामानुकूल्यदाः ॥

महाशयैर्महीशानैः प्रयत्नेऽस्मिन्सुसाधिते ।
त्रयाणामपि राज्यानां यत्नेऽस्मिन्सहयोगिनाम् ॥

रत्नाकरोद्भवः सोऽयं भूयाद्रत्नाकरोद्भवः ।
जलाशयशयश्चापि बिलेशयधरस्तथा ॥ १५४ ॥

---

१३७ करदाः Paying revenue, करदाः giving a helping hand १३८ राजबाहुदलाञ्छनम् Title of Raja Bahadur which is an apabhramsa of राजबाहुदः राज्ञे बाहुदः; देवानां प्रिय इति मूर्खे; देवप्रियः beloved of God १३९ खट्वारूढो जाल्मः; अहंयुः अहंकारी, शुभंयुः शुभान्वितः १४० वाचालः वाचाटः Prattler वावदूकाः Eloquent speakers जञ्जपूकाः मान्त्रिकाः १४१ दन्दशूकाः Serpents चञ्चुरति move about, जाङ्गलिकैः विषवैद्यैः १४३ भद्राकृतशिरस्काः मुण्डितशिरस्काः with clean shaven head १४६ लोहमार्गः Railway line १५० शस्तपोताशयीकृतः Has been made an excellent harbour १५१ द्वित्रकूपकैः two or three masted १५४ रत्नाकरोद्भवः Harbour situated in the Ratnakara, Source of large revenues.

दयेतां सत्वरं चास्य पूर्तयेऽद्भुतकर्मणः ।
इत्येवाशास्यते नित्यं केरलीयैस्तथेतरैः ॥ १५५ ॥

विचित्रारोहावरोहलोहमार्गसहायतः ।
अद्र्यरण्यानीषु चिररूढा उच्चा अनोकहाः ॥

नानाकाष्ठाः प्रहीयन्ते खण्डिताः स्थूलकाष्ठशः ।
वननाशं प्रतीकर्तुं क्रियते वनपालनम् ॥ १५७ ॥

साक्षात्पणः सदायोगी श्रीकृष्णः श्रीपणस्थले ।
हिरण्मयाभो बाभाति राजवंशरिरक्षया ॥१५८॥

श्रीकृष्णोऽत्राविरासीनः साक्षात् पूर्णत्रयेश्वरः ।
पूर्णत्रयेश्वरक्षेत्रं तिरुप्पूणित्तुराह्वयः ॥ १५९ ॥

प्रभाते च प्रदोषे च देवमूर्तिं दिदृक्षवः ।
स्त्रियः पुमांसो बालाश्च बालिका राजवंशजाः ॥

जना अन्येऽपि सश्रद्धं समागच्छन्ति सङ्घशः ।
श्रीवेलिदर्शनं विष्णोः सायंप्रातस्तनं परम् ॥

तदलाभे भक्तिपूर्वं कार्यमन्यर्हि दर्शनम् ।
महिला राजवंशीयाः सेवन्ते निकषा हरिम् ॥

राजकीयाः पुमांसस्तु सेवन्ते बाह्यजालतः ।
आचारस्यास्य चित्रस्याप्यस्त्यैतिह्यं समर्थकम् ॥

राराजीति पणक्षेत्रे विशालं राजमन्दिरम् ।
तत्र स्त्रियः पुमांसश्च निवसन्ति परः शताः ॥

अक्रुध्यन्तः सदाऽन्येभ्यश्चान्योन्यमनसूयकाः ।
अलंकरिष्णवो वंशं धिया वर्धिष्णवो भृशम् ॥

वर्तिष्णवः कुलाचारे सत्प्रजाः प्रजनिष्णवः ।
अपलपिष्णवोऽसत्येऽप्यपराधान्सहिष्णवः ॥

निराकरिष्णवोऽधर्मान् सत्पथेन चरिष्णवः ।
रोचिष्णवः श्रद्धया च दृढभक्त्योन्मदिष्णवः ॥

स्थास्नवो जिष्णवः सत्ये त्वसत्ये ग्लास्नवो भृशम्
इत्थं धर्मपथे निष्ठा जीवन्तु शरदः शतम् ॥

राराष्टि राजभवनं हेमसान्वाह्वये गिरौ ।
अस्मन्नृपस्तदध्यास्ते राजहर्म्यमतल्लिकाम् ॥

महान्नेता भारतस्येत्यर्थेदं समुपाह्वयम् ।
राजप्रतिनिधिः श्रीमानस्मद्भूपाय दत्तवान् ॥

राज्यकर्मानुतिष्ठासुः श्रद्धालुश्च स्वकर्मसु ।
गृहयालुर्व्रतं तीव्रं स्पृहयालुः फलाप्तये ॥ १७१ ॥

जनभव्येष्वनिद्रालुः अतन्द्रालुर्मनागपि ।
कृपालुर्गोमृगखगकृमिकीटादिजन्तुषु ॥ १७२ ॥

हृदयालुर्भवेन्नैव जनेषु पतयालुषु ।
दयालुरीश्वरः साक्षाद्रक्षतात्केरलेश्वरम् ॥ १७३ ॥

चन्द्रसाहस्रदर्शी सः जीवताच्च शतं समाः ।
इत्याशास्ते कविः काव्यनायकाय सदा शिवम् ॥

---

१६१ श्रीवेलि Procession १६२ अन्यर्हि अन्यदा; हरिं निकषा हरेः समीपे १६३ बाह्यजालतः through the outside lattice.



श्रीरङ्गस्थ श्रीशंकरगुरुकुले श्रीमत्सच्चिदानन्दशिवाभिनवनरसिंहभारतीस्वामिनां जयन्तीमहोत्सवावसरे (३—४—४०) तत्प्रशिष्य श्रीमत्सच्चिदानन्दतीर्थस्वामिभिः श्रीमदाचार्याणां पुरतः कृतस्य

# उपन्यासस्य सारांशः ॥

---

दुर्लभं त्रयमेवैतद्देवानुग्रहहेतुकम् ।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥

इह किल चतुरशीतिलक्षभेदेन भिन्नानां प्राणिनां मध्ये मनुष्यजातिरेव सर्वाभ्यर्हिततमेति सार्वजनीनमेतत् । तत्कुतः ? मनुष्याणामेव विशेषज्ञानवत्त्वात्, शास्त्राधिकारसंभवाच्च । विशेषज्ञानं चेदं न तावदैहिकसुखोपयोगिज्ञानमात्रम्, तस्य पश्वादिसाधारणत्वात्; पश्वादयोऽपि हि अनुकूलदर्शने सति तत्र प्रवर्तन्ते, प्रतिकूलखड्गादिदर्शने सति ततो निवर्तन्ते । तदाह भगवान् भाष्यकारः "पश्वादिभिश्चाविशेषात्" इति । तस्मान्मानुष्योत्कर्षाधायकं ज्ञानमन्यदेव स्वीकार्यम् । कीदृशं तज्ज्ञानम् ? शास्त्रार्थविचारजन्यं आत्मानात्मविषयकं ज्ञानमिति ब्रूमः । न ह्येतज्ज्ञानं पशूनां संभाव्यते, मनुष्यानेव हि अधिकरोति शास्त्रं तत्तत्कर्तव्यविशेषेषु । यद्यपि मनुष्यापेक्षयाऽपि देवानां ज्ञानातिशयो विद्यत एव, तथाऽपि भोगसामग्रीसंपन्नानां अप्रतिहतशक्तिकानां अकुतोभयसंचाराणां तेषां विषयवैराग्यस्य दुःसंपादतया न तानपि संपूर्णतया शास्त्रमधिकर्तुमीष्टे । तिरश्चां पुनः शास्त्रार्थेष्वधिकाराभावस्तु अवचनसिद्ध एव; विवेकविज्ञानयोस्तिर्यग्जन्मनि सर्वथा असंभावितत्वात् । परिशेषान्मनुष्याणामेव समग्राधिकारः शास्त्रार्थेषु । अतो मानुष्यं नाम भगवदनुग्रहैकलभ्यमतिदुर्लभं चेत्यत्र न कोऽपि संशयः । कथंचिन्मानुष्यकमासादितवतामपि मुमुक्षुत्वं ततोऽपि दुर्लभतरमेव । आत्मानात्मविवेकात्मकं ज्ञानं हि मानुष्योत्कर्षप्रयोजकमित्यवोचाम । तत्सत्त्वे च अनात्मपदार्थेष्वत्यन्तजुगुप्सासंभवात् तादृगनात्मपदार्थेभ्यः तदभिमानपारवश्याच्च कदा मे विमुक्तिः स्यात् इति मोक्षेच्छा तावदनिवार्या । सा चैषा मुमुक्षा मन्दा मध्यमा तीव्रा तीव्रतरा इति च चतुर्धा भिद्यते । तत्र तीव्रतरमुमुक्षैव सद्यः कार्यकारिणी स्यात् । तीव्रमुमुक्षोश्च लक्षणमेवमभिहितं पद्मपादाचार्यैः— "प्रदीप्तशिरा इव जलराशिं प्रविविक्षुः" इति दृष्टान्तनिदर्शनेन । तस्मात् सद्यः संसारजिहासैव मोक्षहेतुः । तदित्थं मुमुक्षुत्वस्य कथंचित्संभवेऽपि तादृशमोक्षस्य आत्मज्ञानैकसाध्यत्वात् आत्मज्ञानस्य च शास्त्रार्थविचारैकसमधिगम्यत्वात्, शास्त्रार्थविचारस्य च स्वबुद्ध्या कर्तुमशक्यत्वेन तत्र अनुभवशालिनः कस्यचिदाचार्यस्य अपेक्षा दुर्निवारैव । अत एवाह भगवती श्रुतिः— "आचार्यवान् पुरुषो वेद, आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति च । आचार्यो नाम "आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मात् तस्मादाचार्य ईरितः ॥" इत्युक्तरीत्या शास्त्रार्थप्रवचनशक्तिसंपन्नः स्वयमाचरणपूर्वकं परेषा-

मप्याचारप्रवर्तको यो भवति तादृशो महापुरुष एव । तादृङ्महापुरुषसंश्रय एव ज्ञानसंपादनद्वारा मोक्षहेतुः । स च सर्वापेक्षया दुर्लभतमः । समग्राचार्यलक्षणसंपन्नाश्च लोके विरला एव । यदि केचन तादृशा विद्यन्ते ते नूनं भगवदंशभूता एव । ईदृगाचार्यलक्षणसंपन्नाश्च श्रीशृङ्गगिरिजगद्गुरुसंस्थानमलंकृतवन्तः श्रीश्रीसच्चिदानन्दशिवाभिनवनरसिंहभारतीचरणाः विशेषतोऽद्य स्मरणमर्हन्ति। इमे च श्रीसुरेश्वराचार्यमारभ्य प्रवृत्तायामाचार्यपरंपरायां त्रयस्त्रिंशत्तमाः परिगण्यन्ते। श्रीमच्छंकरभगवत्पादाः खलु तदा तदा जायमानदुर्मतनिरसनाय धर्मसंस्थापनाय च आचार्यवंशावल्यां एकादशद्वाविंशत्रयस्त्रिंशदादिस्थानेषु स्वांशावतारान् स्वीकृत्य लोकानुग्रहमातन्वन्तीति प्रसिद्धमेवैतत्सर्वत्र। तत्र एकादशद्वाविंशतमस्थानयोर्विद्यारण्यनरसिंहभारतीरूपेणावतीर्य यथा लोकानुग्रहमकार्षुः तथा त्रयस्त्रिंशत्तमे स्थानेऽपि श्रीमत्सच्चिदानन्दशिवाभिनवनरसिंहभारतीरूपेणावतीर्य कतिधा लोकाननुग्रहीषुरिति तदीयपवित्रतमचरित्रदर्शिनां स्फुटमेव। एते हि महीशूरनगरान्तर्गतपुरातनाग्रहारब्राह्मणगृहे कृतावताराःस्वबाललीलाभिः सर्वानपि विनोदयन्तः, स्वशैशव एव पितृवियोगमनुभूय सनाभिजनैरेव क्रमेण कृतोपनयनाः सन्तो वेदमधीयाना आसन् । तदात्वे च श्रीशृङ्गगिरिपीठाधिपतयो नरसिंहभारतीमहास्वामिनो महीशूरमहाराजेन स्वराजधानीमानाय्य बहुधा सत्क्रियमाणाः सन्तः कंचित्कालं तत्रैव न्यवात्सुः। तदानीं च तत्रत्यप्रसिद्धपण्डितानां शतकोटि रामशास्त्रिणां पुत्रं शिवस्वाम्याख्यमानाय्य तदीयबुद्धिपाटवमन्यादृशमवलोक्य तमेव भाविपीठाधिकारिणमाकलय्य कथंचित्तदीयभ्रातुरनुमतिं संपाद्य तदीयनवमवयस्येव स्वशिष्यत्वेन परिगृह्य श्रीसच्चिदानन्दशिवाभिनवनरसिंहभारतीनाम्ना तमेनं योगपट्टाङ्कितमतानिषुः । अचीकरंश्च तेषां पाठप्रवचनादिकं पण्डितप्रवरमुखात् । इत्थं नवमे वयस्येव संन्यासदीक्षामवाप्य ततः परं स्ववयसा साकमुपचीयमानेन पाण्डित्यातिशयेन तपःप्रभावेन च विद्यामूर्तय इव तपोमूर्तय इव च ते स्वविंशतितमे वयसि व्यराजन्त । तदात्वे च स्वगुरुवियोगमकस्मादापतितं दृष्ट्वा तेषामाराधनादिकं यथावदनुष्ठाय ततःपरं मठीयव्यवहारनिर्वहणाय कंचिदधिकारिणं नियुज्य स्वयं सर्वदा भगवदाराधनादिना कालमनैषुः । तदीयगुणातिशयमाकर्ण्य तत इतः परःशताः पण्डितवराः समागत्य कदाचित् शास्त्रार्थविचारणेन, कदाचित्तदीयदेवताराधनदर्शनेन, जातुचिदुपन्यासश्रवणेन अन्यदा अन्त्यादिश्लोकपठनेन, तदा तदा विनोदभाषणेन च सुखेन कालमतिवाहयन्तः श्रीकृष्णेन सह विहरन्तो गोपालबाला इव वाचामगोचरमानन्दमनुबभूवुः । न केवलं पण्डिता एव अपि तु तदीयदृष्टिपातविषयीभूताः सर्वेऽपि भक्तजनास्तादृशीमेव परमानन्दसंपदुन्निद्रां दशामनुभूय कृतकृत्यमेवात्मानममन्यन्त। एकैकस्यापि पुरुषस्य स्वविषय एव गुरोः प्रेमातिशयः इति यथा बुद्धिरुदेति तथा तेषामाचरणं तु श्रीकृष्णपरमात्मनश्चरित्रमेव सर्वथा स्मारयति। एतेषां चरित्रं च यद्यपि आमूलचूडं अमानुषतत्तत्कार्यविशेषैः सर्वजनविस्मयावहमेवास्ति तथाऽपि त्रित्रा विषया विशेषतस्तेषां अमानुषीं शक्तिमवगमयन्ति। तेषु च कालटीकुम्भाभिषेकमहोत्सवः प्रथमगणनामर्हति। कदाचित् चोरैरपहृतस्य चन्द्रमौलीश्वरस्य यन्त्रमञ्जूषायाश्च पुनर्लाभाय निरशनव्रतपूर्वकमन्त्रावृत्तिमनुष्ठितवतां तेषां अनायासेनैव चन्द्रमौलीश्वरादिलाभस्तु द्वितीयः, शृङ्गगिरिकल्याणपुर्यादिषु विद्यालयान् निर्माप्य सर्ववेदानां सर्वशास्त्राणां च तत्र तत्र अध्यापनद्वारा बहूनां कृतार्थीकरणं नाम तृतीयो विषयः। किमेवं त्रित्रा एव विषया आश्चर्यकराः? अहो नु परःशताः! नूनमेते भगवत्पादानामंशावतारभूता एवेति परमाश्चर्यकर-

तदीयचरित्रवेदी को वा विप्रतिपद्येत? अहो महद्भागधेयं भक्तजनानाम्। अस्ति च भूयसा साम्यं अद्सीयचरित्रस्य भगवत्पादीयचरित्रस्यापि। श्रीशंकरभगवत्पादास्तावत् स्वकौमारे प्रायोऽष्टमवर्षसमाप्तौ नवमवर्षारम्भ एव यथा संन्यासं पर्यगृह्णन् तथैव एतेऽपि स्वनवमवयसः पूर्वभाग एव तुरीयाश्रममशिश्रियन्। यथा च भगवत्पादाः स्वपूर्वाश्रमे उपनयनात्प्रागेव पितृवियोगमवाप्य स्वबन्धुजनैरेव उपनयनसंस्कारं प्रापितास्तथैव प्रकृतकथानायका आचार्यवर्या अपि। यथा च भगवत्पादाः त्रिवारं भूप्रदक्षिणमकार्षुः तथैव इमेऽपि त्रिवारं देशयात्रामकार्षुः। शंकरनामाङ्कितत्वं च उभयोः समानमेव। यथा च भगवत्पादाः सर्वत्र संचारेण वैदिकधर्मस्थापनेन 'धर्मसंस्थापनार्याः' इति प्रसिद्धिमवापुः तथैव एतेऽपि। लोकानुग्रहव्यसनितायां च न किंचिदपि तारतम्यमुभयोरनयोः। यदि कश्चिद्विशेषो वक्तव्य इत्याग्रहः स्यात्तर्हि वयोमात्रप्रयुक्त एव स वक्तव्यः स्यात्, यतः भगवत्पादाः द्वात्रिंशत्तम एव वयसि कैलासवसतिमुररीचक्रुः, इमे तु चतुःपञ्चाशत्तमे वयसि। "आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः" इत्युक्तमहापुरुषलक्षणानि सर्वाण्यपि भगवत्पादेष्विव एतेष्वपि समानाधिकरणतामुपयान्ति। अयि भक्तवर्याः, अपि स्मरथ महानुभावानामेषां आजानुलम्बिबाहुयुगलीसंवलितां सुन्दरतमां मूर्तिम्? अपि चिन्तयथ तेषां मन्दस्मितसुन्दरं मुखकमलम्? अपि ध्यायथ तेषामव्याजप्रसृमरं कटाक्षप्रसरम्? अप्यनुस्मरथ तेषामवधीरितसुधारसमाधुरीं वाग्झरीम्? अद्य जयन्तीमहोत्सवे समवेताः सर्वे वयं तेषां स्मरणेन मनुष्यजन्मनः साफल्यमुपनयेम। ईदृशानां महापुरुषाणामाश्रयणमेव हि निःश्रेयसप्रयोजकं स्यात्। अतो महापुरुषसंश्रयस्य दुर्लभत्वं यत् प्राक्प्रत्यपादि तदिदं युक्ततरमेव। अद्यतनजयन्तीमहोत्सवे विविधभूषणगणभासुरां श्रीमदाचार्यमूर्तिं दर्शंदर्शं सर्वे परमानन्दभरिताः सन्तो जन्मसाफल्यमनुभवितुं स्वत एव सकुतूहलाः सन्तीति महदिदमानन्दस्थानम्। इदमेव दिनं सुदिनमजनि। संततमनुस्मरामोऽस्मदाचार्यपादान् इति शम्॥





# ॥ ख्यातिवादः ॥

कल्याणपुरी श्रीशंकरपाठशालाध्यक्षेण वेङ्कटेशशास्त्रिणा विरचितः

( पूर्वतोऽनुवृत्तः )

---

एतादृशवचनाडम्बरेणापि निरुपाख्यस्य असत्त्वेन सर्वसंमतस्य अपरोक्षप्रतीतिविषयत्वस्यासाधितत्वात्। किं च भवताऽपि निरुपाख्यवैलक्षण्यं संमतमित्येवाकथि। तादृशनिरुपाख्यवैलक्षण्यमेवानिर्वचनीयवादिमते असद्वैलक्षण्यशब्देन कथ्यते। एतादृशासद्वैलक्षण्याक्रान्ते रजते असच्छब्दः प्रयुज्यते चेन्न तेषां क्षतिः। भवताऽपि तदभिमतं असद्वैलक्षण्यं निराकर्तुं न पारितम्। सद्वैलक्षण्यं तु भवता पूर्वमेवानुमतं वर्तते। एवं तदभिमतानिर्वचनीयशब्दप्रद्वेषमात्रेणासच्छब्दस्तच्छिरसि निक्षिप्तो भवति ॥

यत्तु नराशिरसि विषाणमस्तीति वाक्यं उदाहारि, तत्किमर्थमिति न ज्ञायते। तद्वाक्यस्यार्थबोधकत्वे असतोऽपि प्रतीतिः सिद्ध्येदिति प्रत्याशा न कार्या। न हि तत्र वाक्ये किमप्यसत्प्रतिभासते। न हि तावत्तत्र नराशिरः असत्, नापि विषाणम्। किं तु नरविषाणमिति यदखण्डं तस्यैव असत्त्वमाचार्यैः प्रासाधि। अत एव तत्त्वचिन्तामणौ शशशृङ्गं नास्तीति वाक्यस्यापि व्युत्पत्तिवैचित्र्येण शशे शृङ्गं नास्तीत्यर्थ उपाश्लोकि। तेषामपीत्थमेवाभिप्रेतं ज्ञायते— शशे शृङ्गमिति विश्लेषे कृते न कस्याप्यसतो भानमस्ति। संश्लिष्टत्व एवासद्भानं संभवतीति ॥

यत्तु इदमंशरजतसंसर्गस्य अनिर्वाच्यत्वे अनवस्था दुष्परिहरेति तदसंगतम्, तत्रोक्तविकल्पानामनवकाशात्। न ह्यस्माभिरनिर्वाच्यत्वमिति परिष्कारयोग्यः कश्चन पदार्थः अभ्युपगम्यते। अपि तु तत्तद्वाद्यभिमतेन सत्त्वेन असत्त्वेन वा प्रमाणतः शुक्तिरूप्यं न निरूपणार्ह इत्येवाभिप्रेयते, न त्वेवंरूपमिति। न हि ऐन्द्रजालिकेन प्रदर्शितस्य एवंरूपता केनापि भणितुं सुशका। यथानुभवं पदार्थानभ्युपगम्य तूष्णीं वर्तनीयम्। न हि तत्र शोधने परीक्षका व्याप्रियेरन्। तथा च शुक्तिरजतस्य असद्वैलक्षण्यमकामेनाप्यभ्युपगन्तव्यमित्यनिर्वचनीयख्यातिः सुसिद्धा भवति ॥

यदुक्तं असद्वैलक्षण्यज्ञानार्थमसत्प्रतीतिरपेक्ष्यत इति, तदनभ्युपगमपराहतमेव। न हि असद्वैलक्षण्यमित्यनेन असत्प्रतियोगिकभेद उच्यते, किं तु सत्तादात्म्यम्। एवमेव चाद्वैतसिद्ध्यादौ निरणायि। आस्तां वा असत्प्रतियोगिकभेद इत्येवास्यार्थः, तथाऽपि न नश्छिन्नम्। असतः विकल्पाख्यवृत्तिविषयत्वस्य शाब्दबोधविषयत्वस्य वा संभवात्। तत्प्रतियोगिकभेदस्य चापरोक्षतया प्रतीतौ बाधकाभावात्। न ह्यभावप्रत्यक्षे प्रतियोगिप्रत्यक्षमपि कारणमिति तार्किकाः संमन्यन्ते; किं तु प्रतियोगिज्ञानमात्रम् ॥

किं चासद्वैलक्षण्यस्य प्रत्यक्षत्वं किमर्थम्? न ह्यद्वैतमते सदसद्वैलक्षण्यस्य प्रत्यक्षत्वमुपेयते। परं तु श्रुत्यनुमानाभ्यां बोध्यत इत्युच्यते। इदं रजतमिति प्रत्यक्षे रजतं सदित्येव प्रतीयते, नत्वनिर्वाच्यमित्यपि। एतेन अनिर्वाच्यत्वं ज्ञायते वा न वेति विकल्पस्यैव नावकाशः॥

आस्तामियं कथा। अधुना सत्ख्यातिपक्षोऽपि न क्षोदक्षमः समीक्ष्यते। भास्कराचार्या रामानुजाचार्याश्च सत्ख्यातिपक्षमवलम्बन्ते। तत्र भास्कराचार्याः सदेव रजतमुत्पद्यत इत्युपयन्ति। एवं चासद्विलक्षणमुत्पद्यत इत्युक्तं स्यात्। तादृशस्यासद्विलक्षणस्य रजतस्योत्पत्तौ सामग्र्यां विचार्यमाणायां रजतोत्पादकत्वेन लोकप्रख्याता सामग्री न तत्र वक्तुं सुशका। न हि शुक्तिं दृष्ट्वा यदाकदाचित्काचकचक्यादिदोषवशादिदं रजतमिति प्रतीतिजनने रजतोत्पत्तिमूलभूतभूविशेषादिघटिता सामग्री अनुभूयते। किं तु प्रसिद्धसामग्रीविलक्षणसामग्रीजन्यत्वमेव प्रतीयमानरजतस्योपेयम्। तथा च सिद्धं नः समीहितम्। अनिर्वचनीयवादिभिरपि सर्वसंमतसामग्रीविलक्षणसामग्रीजन्यत्वस्यैव प्रतीयमानरजतेऽभ्युपेतत्वात्। एवं च सत्त्वेन सर्वसंमतिपन्नरजतवैलक्षण्यं उभयोरविशिष्टम्। सत्त्वेन दुर्निरूपमित्यस्यापि अयमेवाभिप्रायः। एवं च वस्तुतो दुर्निरूपे वस्तुनि सच्छब्दप्रयोगश्चेदास्तां नाम; न नाम्नि विप्रतिपत्तिः॥

रामानुजाचार्यास्तु— अन्यस्यान्यथाभावायोगरूपेणैकेनैव हेतुना अख्यात्यात्मख्यात्यन्यथाख्यात्यसत्ख्यात्यनिर्वचनीयख्यातीर्निराकृत्य भट्टभास्करवदेव रजतस्य तत्काले उत्पद्यमानत्वाङ्गीकारे लोकविलक्षणसामग्रीजन्यत्वप्रयुक्तपूर्वोक्तदोषस्यापरिहार्यत्वात् श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मकत्वप्रतीतेः पुरोवर्तिवस्तुनः शुक्तिरजतोभयात्मकत्वावश्यंभावात्, इदं रजतमिति ज्ञाने भासमानं रजतं सदेवेति

> यथार्थं सर्वविज्ञानं इति वेदविदां मतम्।
> श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः॥ इत्याद्यैः
>
> बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते।
> शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः॥
>
> नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः।
> एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः॥ इत्यन्तैः पद्यैः समर्थयामासुः॥

तत्रान्यस्यान्यथाभानायोगाच्चेति ख्यात्यन्तरनिराकरणपरवाक्यस्य उक्तपद्यानां चाभिप्रायः श्रुतप्रकाशिकाकारैरुपावर्णि। तद्यथा—अन्यस्यान्यथाभानं इति कोऽर्थः? (१) पुरोवर्तिरूपधर्मिणः अन्यस्य रजतत्वादिधर्मतादात्म्यभानं वा? (२) उभयोर्धर्मिणोस्तादात्म्यभानं वा? (३) स्वस्मिन्नसता आकारेण भानं वा (४) अथवा अन्यत्र सतः अन्यत्र भानं वा? (५) आहोस्विदन्यत्रैव सत अन्यत्र भानं वा? नाद्यः, शुक्तिशकलस्य रजतत्वजातित्वेनाप्रतीयमानत्वात्। नद्वितीयः, धर्मिद्वयतादात्म्यरूपान्यथात्वस्य विषयगतत्वे पुरोवर्तिनः उभयात्मकत्वेन प्रतीतेर्यथा-

र्थत्वापातात् । ज्ञानगतत्वे, विषयोऽन्यः ज्ञानमन्यदित्युक्तं स्यात् । तत्त्वसंगतम् । न हि घटज्ञानस्य पटज्ञानत्वसंभवः । न तृतीयः, तथा सत्यसत्ख्यातिः स्यात् । सा च न युक्तिपथमवतरतीति प्रागेवावेदितम्। न चतुर्थः, तर्हि पिङ्गाक्ष्यां दृष्टस्य गोत्वस्य कालाक्ष्यां दर्शनमपि भ्रमः स्यात् । नापि पञ्चमः, अन्यत्रैव सत्त्वानिश्चयात्। पुरोदेशे बाधात्तन्निश्चयः इति चेत्तर्हि सत्यरजतस्थलेऽपि भ्रान्त्या बाधितस्य अन्यत्र सत्वं निश्चीयेत। अर्थक्रियाकारित्वरूपप्रवृत्तिबाधोऽपि मण्यादिप्रतिबद्धाग्नेरन्यजनितदहनादिरूपकार्यस्य अन्यत्रैव सत्त्वनिश्चायको भवेत्। दुष्टकारणजन्यज्ञानविषयत्वात्तन्निश्चय इति चेत्तन्निश्चय एव कुतः ? बाधकज्ञानोदयादिति चेत्, पूर्वज्ञानमेव बाधकमङ्गीकृत्य उत्तरज्ञानमेव दुष्टकारणजन्यं कुतो नाङ्गीक्रियते ? किं चान्योन्याश्रयदोषोऽप्येवं सति प्रसज्येत । पूर्वस्य दुष्टकारणजन्यत्वे उत्तरस्य बाधकत्वनिश्चयः, उत्तरस्य तत्त्वे निश्चिते पूर्वस्य तत्त्वनिश्चय इति। क्वचिदप्यसतः ख्यात्ययोगादन्यत्र सत एव ख्यातित्वं निश्चीयते इति चेन्न; अन्यथाख्यातिमते शुक्तिरजतसंसर्गस्य अलीकस्य भानाङ्गीकारात्। न हि तस्यापि अलीकत्वम्, किं तु अन्यत्र सत्त्वमेवाङ्गीक्रियत इति न वक्तुं शक्यम् । पुरोवर्तिशुक्तिशकलरजतत्वजातिसंबन्धस्य अन्यत्र सत्त्वस्य सर्वानुभवविरुद्धत्वात्। यद्यन्यस्य विद्यमानस्य संबन्धस्य अन्यत्र भानमभ्युपगम्यते तदा संबन्धिनो रजतस्येव संबन्धान्तरमपेक्ष्यैव भानं वक्तव्यम् । तदपि न युक्तम् । तादृशसंबन्धान्तरे एवासत्त्वस्यावर्जनीयत्वात् । संबन्धान्तराभावेऽपि रजतसंबन्धस्य पुरोवर्तिनि भानं चेत् तदा संबन्ध्यन्तरसंबन्धः पुरोवर्ति च निरन्तरं भानमिति यथार्थख्यातिरकामेनाप्यभ्युपेया । नन्वनिर्वचनीयख्यातिमते इदं दूषणं कथं लगतीति चेदित्थम्। अनिर्वचनीयं अनिर्वचनीयत्वेन प्रतीयते निर्वचनीयत्वेन वा ? नाद्यः, प्रवृत्त्यभावप्रसङ्गात्। न द्वितीयः, तर्हि अन्यत्रैव विद्यमानस्य निर्वचनीयत्वस्य अत्र भानापत्त्या पूर्वोक्तविकल्पेष्वापादितानां दोषाणामत्रापि प्रसरात् ॥

नन्वस्यान्यथाभानं नोच्यते, किं तु विद्यमानमेव प्रतीयत इति । विद्यमानं च द्विविधं लौकिकमलौकिकं चेति । तत्र भ्रमस्थले अलौकिकं रजतं भासत इत्युपेयत इति चेत् ; अत्रोच्यते—तच्च किं लौकिकत्वेन प्रतीयते, अलौकिकत्वेन वा ? आद्ये प्रवृत्तिबाधः । द्वितीये अन्यस्यान्यथा भानं तदवस्थमेव । अलौकिकस्य लौकिकरजतभेदाग्रहेण प्रवृत्त्युपपादने, तदानीमख्यातिमतवत् पुरोवर्तिशुक्तिशकलस्य रजतभेदाग्रहेण तत्र प्रवृत्त्याद्युपपादयितुमुचितम्, लाघवात् ; किमनिर्वचनीयरजतकल्पनया ?

ख्यात्यन्तरवादिभिरपि अन्यस्यान्यथाभानमवश्यमभ्युपेयमेव । तथा हि— असत्ख्यातिपक्षे सदात्मना भानम्, आत्मख्यातिपक्षे ज्ञानगतार्थात्मना भानम्, अख्यातिपक्षे इदं रजतमिति एकज्ञानमेवाभ्युपेयम्, इदं रजतमिति सत्यरजतविशिष्टज्ञानवत्तत्रापि प्रवृत्त्यादेर्दृश्यमानत्वात्। तथा च शुक्तिशकलमेव रजतात्मना प्रतीयत इत्यकामेनाप्यभ्युपगन्तव्यम्। एवं चान्यस्यान्यथा भानमवर्जनीयमेव । तथा अन्यथाख्यातिपक्षेऽपि अयं दोषो दुष्परिहर एव । अतो यथार्थख्यातिरेवाङ्गीकार्या ॥

तर्हि भ्रमत्वं कथमुपपद्यत इति चेत् । विषयव्यवहारबाधाद्भ्रमत्वम्; न तु विषयबाधात् । पञ्चीकरणप्रक्रियया सर्वत्र सर्वाण्यपि भूतानि सन्तीति एतदनिर्वचनीयतावादिनामपि संमतम् । एवं च शुक्तिकादावपि रजतांशो विद्यत एव । तत्र रजतांशस्याल्पत्वेन सर्वदा शुक्तिं दृष्ट्वा न रजतं प्रत्येति । न च रजतावयवानां शुक्तौ विद्यमानत्वे सर्वदा तत्प्रतीतिः स्यात्; नात्र रजतमिति प्रतीतिरपि निरालम्बना स्यादिति वाच्यम् । अनुभवबलात् शुक्त्यंशभूयस्त्वेन तद्ग्रहस्य रजतांशग्रहप्रतिबन्धकत्वाङ्गीकारात् । यदा तु कादाचित्कदोषवशात् शुक्त्यंशाग्रहः, तदा इदं रजतमिति प्रतीतिः । दोषनिवृत्तौ च शुक्त्यंशभूयस्त्वग्रहेण नात्र रजतमिति प्रतीतिरपि समञ्जसा भवति । तथा च शुक्त्यंशभूयस्त्वात्तज्ज्ञानमेव बाधकम्, रजतज्ञानं च बाध्यम्, तदंशस्याल्पत्वात् ॥

किं च रजतस्य शुक्तिसदृशत्वेन व्रीहिषु नीवारावयववत् शुक्तौ रजतावयवसंसर्गस्य संप्रतिपन्नत्वात् शुक्तौ रजतज्ञानस्य यथार्थत्वमनिवार्यम् । न च पञ्चीकरणप्रक्रियया शुक्तौ रजतावयवाः कथमभ्युपगन्तुं शक्यन्ते? पञ्चीकरणात्पूर्वं रजतावयवानामेवासत्त्वात् । अव्याकृतानां सूक्ष्मभूतानां खलु पञ्चीकरणं श्रुतिसंमतम्; न तु भौतिकानां रजतशुक्त्यादीनामिति वाच्यम् । यतः पञ्चीकरणेन पृथिव्यादीनि पञ्चभूतानि संमिश्रितानीत्यस्मिन्विषये न विवादः । तथा च पृथिवीत्वेन सर्वसंमते भूते सर्वेषामपि भागानां सत्त्वात् तत्कार्यभूतायां शुक्तौ तेजोभागस्याप्यावश्यकत्वात्तैजसरजतावयवानां तत्र सुलभत्वात् । अत एव रजतसादृश्यं शुक्तावुपपद्यते । एवं शुक्तेः रजतशुक्त्युभयात्मकत्वेन इदं रजतमिति ज्ञानमप्युभयात्मकमेवेति, शुक्ताविदं रजतमिति ज्ञानं यथार्थख्यातिरेवेति संगिरन्ते ॥

इमां च ख्यातिं न्यायसुधाकारजयतीर्थप्रभृतयो नानुमन्यन्ते । तथा हि— तत्रान्यस्यान्यथा भानायोगादिति यद्दूषणमुक्तम्, तन्न युक्तम्, अन्यत्रैव सतः अन्यथैव भानमित्यर्थकरणे अदोषात् । न चान्यथैव सत इति कुतो न निश्चय इति वाच्यम् । यत इदं रजतमिति भ्रमकाले अन्यत्रैव सत इति निश्चयः । अपि तु बाधज्ञानानन्तरं स इति कथ्यते । न च भ्रान्तिज्ञानबाधितस्य सत्यरजतस्यापि अन्यत्र सत्त्वप्रसङ्ग इति वाच्यम् । यतो भ्रान्तिज्ञानं प्रमात्मकज्ञानबाधितमिति न सर्वसंमतम् । अनिर्वचनीयवादिनः प्रमाया एव बाधकत्वम्, न तु भ्रमस्य इति ॥

तार्किका अपि प्रामाण्यग्रहस्यापि प्रतिबन्धककोटावनिवेशे स्वरसतः प्रमायां यथा प्रामाण्यग्रहः, न तथा भ्रमे । अतः प्रायशः प्रमाया एव बाधकत्वम् । क्वचिद्दोषवशात् भ्रमे प्रमात्वग्रहे बाधकत्वं स्यात् । अप्रामाण्यग्रहाभावस्य उत्तेजकत्वमते, यथा प्रमायां स्वरसतः प्रामाण्याग्रहः, न तथा भ्रमे । भ्रमे अप्रामाण्याग्रहस्य क्वचिद्दोषवशादेव संभव इत्याहुः ॥

मीमांसका अपि— प्रामाण्यस्य स्वतोग्राह्यत्वेन प्रमायामेव प्रामाण्यग्रहः सुलभः; न तु भ्रमे । तथा च प्रामाण्यग्रहस्य उत्तेजकत्वे प्रमाया एव बाधकत्वं भवेत् । अस्तु वा क्वचित् भ्रमस्यापि बाधकत्वम्; तथाऽपि न दोषः । न हि तार्किकवत् अनिर्वचनीयवादिनः अप्रामाण्यज्ञानजनकत्वमात्ररूपं बाधकत्वं कथ्यते; किं तूपादानसहितकार्यनिवर्तकत्वम् । न हि तद्भ्रमस्य कदाऽपि संभाव्यते । पूर्वज्ञानस्यैव यद्बाधकत्वमाशङ्क्य तदपि न, अपच्छेदन्यायवादिजैमिन्यादिमहर्ष्य-

संमतत्वात्। तर्हि परस्परनिरपेक्षयोः पूर्वं प्रति परस्यैव बाधकत्वमवादि। तन्न्यायश्च ग्रन्थविस्तरभयान्नेह प्रतन्यते। यदि मीमांसकमर्यादा नाद्रियते, तदाऽपि पूर्वोक्तयुक्त्या प्रमाया एव बाधकत्वं सुसंपादम्॥

अनिर्वचनीयख्यातिमते अन्यस्यान्यथाभानादिति दोषो न लगत्येव। न च तत्र देशान्तरस्थं रजतं शुक्तौ भातीत्युपेतमास्ति। किं तु प्रातिभासिकं रजतं तत्रैवोत्पद्यत इत्युच्यते। तच्चान्येषामिव सदित्येव भासते। सा च सत्ता अधिष्ठानगतेति चोच्यते। एवं चानिर्वचनीयत्वेन वा, निर्वचनीयत्वेन वा, अलौकिकत्वेन वा, लौकिकत्वेन वा— इत्यादिविकल्पानामनवकाश एव। अनिर्वचनीयवादिमते हि न तत्तद्वाद्यभिमतेन सत्त्वेनासत्त्वेन वा दुर्निरूपत्वं भ्रमकाल एव ज्ञायत इति कथ्यते; किं तु मिथो विरुद्धाभिः तत्तद्वाद्यभिमतयुक्तिभिः दुर्निरूपत्वं व्यवस्थाप्यते। न हीतरवादिवत् एकस्मिन्नेव पक्षे अभिनिवेशः क्रियते॥

आस्तां तावत्। यत्तावदुक्तं शुक्तिकादौ रजतादिसद्भावे श्रुत्यादिप्रमाणमस्तीति, तन्नातीव शोभनम्। श्रुत्यादीनि प्रमाणानि आकाशादिसूक्ष्मभूतानां मिश्रभावं वदन्ति; न तु शुक्तौ रजतसद्भावम्। न हि रजतपरम्पराकारणभूतसूक्ष्मभूतमिश्रणे रजतकार्यमिश्रणमपीति नियमः, असंप्रतिपत्तेः। शुक्तौ रजतसत्त्वे सर्वेषामपि तत्प्रतीतिरवार्या स्यात्। अदृष्टवशादप्रतीतिरिति चेत्, शुक्तौ रजतविवादकाले एतादृशकल्पनाया अनवकाशात्। स्वरसतः शुक्तिभूयस्त्वज्ञानस्यैव संभवात् तस्य रजतज्ञानप्रतिबन्धकत्वकल्पनान्न सर्वेषां रजतप्रतीतिरिति महागौरवपरिभूता कल्पना॥

किं च पञ्चीकरणप्रक्रियया सर्वस्य सर्वात्मत्वाङ्गीकारे इङ्गालादावपि रजतावयवसत्त्वावश्यंभावात् शुक्ताविव तत्रापि रजतभ्रमः कुतो न स्यादिति वक्तव्यम्। असादृश्यादिति चेत्, रजतावयवसत्त्वस्य शुक्ताविङ्गाले च समाने तदेवासादृश्यं किंनिबन्धनं भवेत्? शुक्ताविव इङ्गाले चाकचक्याद्यभावादिति चेत्तदेव कुतोऽत्र न? वस्तुशक्तिस्वभावादिति चेत्तर्हि वस्तुशक्तिस्वभावमूलभूतं सादृश्यमेव रजतज्ञानमूलं भवतु; न तु रजतावयवसत्त्वम्। किं च शुक्तौ रजतावयवसत्त्वे रजतकार्यं शुक्त्या कुतो न क्रियते। अल्पत्वादिति चेत्, व्रीहिकार्यमपि नीवारैर्न क्रियेत, तत्रापि व्रीह्यवयवाल्पत्वात्। श्रुतिप्रामाण्यादिति चेत्, तर्हि व्रीह्यवयवकल्पना नीवारेषु निरर्थिका। किं च रजतार्थिनः शुक्तौ प्रवृत्तिः किंप्रयुक्ता? किं शुक्त्यवयवभूयस्त्वज्ञानं उत रजतावयवज्ञानम्? अथवा उभयमपि? नाद्यः, सुषुप्तौ प्रवृत्तिप्रसङ्गात्। द्वितीये रजतावयवेषु अल्पीयस्त्वज्ञाने प्रवृत्तिविघात एव। भूयस्त्वज्ञाने अन्यथाख्यातिप्रसङ्गः। अवयवज्ञानमात्रे सर्वत्र प्रवृत्तिप्रसङ्गः। तृतीयेऽप्ययं दोषः। किं च ज्ञानस्यापि भ्रान्तित्वं सर्वसंप्रतिपन्नत्वं कीदृशम्? अल्पांशग्रहणरूपमिति चेत्, संसारकाले ब्रह्मज्ञानस्याल्पांशरूपत्वात् भ्रान्तत्वमापद्येत। किं च शङ्खः पीत इत्यत्रापि ज्ञाने पित्तगतपीतिमानुलिप्तः शङ्ख एव गृह्यत इत्युच्यते चेत्; तदा पार्श्वस्थैरपि तद्गृह्येत। सूक्ष्मत्वादग्रह इति चेत्; सूक्ष्मत्वस्यातीन्द्रियरूपत्वे भ्रान्तस्यापि तज्ज्ञानं न स्यात्। भ्रान्तस्य सामीप्यं वर्तत इति चेत्पार्श्वस्थस्यापि तत्समानम्। स्वशरीरसामीप्यमस्तीति चेत्परशरीरसमीपस्थदण्डादीनां अग्रहणप्रसङ्गः। किं

च पित्तगतपीतरूपवत्तया प्रतीयत इति चेदन्यथाख्यातिप्रसङ्गः। पित्तद्रव्यसंयुक्ततयेत्येतदनुभवविरुद्धम्। किं च शुक्तौ रजतावयवसत्त्वे रजतयुक्तमृदादिदाहे रजतपरिशेषवत् शुक्तिदाहेऽपि रजतपरिशेषः स्यात्। न च रजतपुटे यथा न रजतपरिशेषः किं तु रजतस्य भस्मीभाव एव, एवं शुक्तिसंयुक्तस्यापीति वाच्यम्। शुक्तौ रजतावयवविवादकाले एवं समाधानानारोहात्। क्वचिन्नीवारादौ व्रीह्यवयवसत्त्ववत् अन्यत्रापि तत्कल्पनमयुक्तम्, अतिप्रसङ्गात्। वस्तुतः नीवारेषु व्रीह्यवयवसत्त्वे न किंचित्प्रमाणम्। रूपरससंस्थानविशेषाभिव्यङ्ग्यव्रीहित्वस्य नीवारेषु कथंचिदपि अभ्युपगन्तुमशक्यत्वात्। न च तर्हि कथं तेषां प्रतिनिधित्वमिति वाच्यम्। यतो नीवारेषु व्रीह्यवयवसद्भावेन प्रतिनिधित्वं न मीमांसकैः कथ्यते; किं तु यथाशक्तिप्रयोगे उत्पत्तिवाक्ये उत्पन्नवाक्ये वा श्रुतद्रव्यालाभे तत्सदृशेन यागः कर्तव्य इत्येवोच्यते। न च तत्र श्रुतद्रव्येण द्रव्यान्तरव्यवच्छेद इति वाच्यम्। व्रीह्यादीनां स्वतन्त्रविधिविधेयत्वाभावेन प्रधानविधेरेव तत्प्रयोगविधायकत्वात्। प्रधानस्य च निमित्तफलाद्यन्वयोत्तरमेव प्रयोगविधिविषयत्वसंभवात्। निमित्तान्वयकाल एव श्रुतोपकरणसंपादनाशक्तावपि प्रधानकर्तव्यत्वावगतेः प्रधानस्य च द्रव्यमन्तरेण असंभवात्। यत्किंचिद्द्रव्याक्षेपकत्वं प्रथमत एवावगतम्। तदनुसारेणैव प्रधानस्य प्रयोगविधिकल्पनम्। एवं च श्रुतद्रव्यापचारेऽपि द्रव्यान्तरेण सदृशेन यागः कर्तव्य इत्येतेषां सिद्धान्तः। यद्यप्युत्पत्तिवाक्ये श्रुतस्य द्रव्यस्य निमित्ताद्यन्वयात्पूर्वं यागसंबन्धः प्रतीयते। अनन्तरं निमित्तादिप्रतीतिकाले व्रीह्याद्यवच्छिन्नजीवनादेरेव निमित्तत्वं प्रतीयते। तथाऽपि मीमांसकमते धात्वर्थ उपपदार्थयोः पूर्वमेव परस्परान्वयाभावात् कल्पितवाक्येन परस्परान्वयबोधदशायां यागस्य फलवत्त्वज्ञानस्यापेक्षितत्वात् तदर्थं कामवाक्ययावज्जीववाक्याभ्यां श्रुतवाक्यस्य एकवाक्यत्वाङ्गीकारावश्यंभावेन सिमित्तान्वयानन्तरमेव यागे द्रव्यसंबन्धस्य वक्तव्यत्वात् निमित्तान्वयप्रतीतिकाले एव यत्किंचिद्द्रव्येण यागकर्तव्यत्वप्रतीतेरावश्यकत्वात्। एवमेव 'श्रुतिप्रमाणत्वात् शिष्टाभावेनागमोऽन्यस्याशिष्टत्वात्' 'क्वचिद्विधानाच्च' इति सूत्रद्वयेन पूर्वपक्षं प्रापय्य, 'आगमो वा चोदनार्थाविशेषात्' 'नियमार्थः क्वचिद्विधिः' 'तन्नित्यं तच्चिकीर्षा हि' इति सूत्रत्रयेण सिद्धान्त उपावर्णि। तत्सूत्राभिप्रायः भाष्यकृट्टीकाकारपार्थसारथिमिश्रखण्डदेवमिश्रप्रभृतिभिर्वर्णितः, तत्परिशीलिनां च तत्रैव विशदः॥

अस्तु वा यथाकथंचित्। शुक्तौ रजतावयवसत्त्वेऽपि रजतत्वजातिसत्त्वे किं प्रमाणम्? तदभावे इदं रजतमिति ज्ञानं कथं स्यात्? यदि रजतत्वजातेः अवयवावयविसाधारण्यमभ्युपगम्यते तथाऽपि वल्मीकनीवारादिषु घटत्वव्रीहित्वाद्यवगाहिषु भ्रमेषु का गतिः? न हि घटत्वव्रीहित्वाद्यवयवावयविसाधारणमिति जातितत्त्वविदस्तार्किका अभ्युपगच्छन्ति। तथा च प्रसिद्धरजतवैलक्षण्यस्य शुक्तिरजते वक्तव्यत्वात्, अनिर्वचनीयवादिभिरपि सत्त्वेन सर्वसंप्रतिपन्नप्रसिद्धरजतवैलक्षण्यस्यैव उच्यमानत्वात्, प्रसिद्धसद्रजतवैलक्षण्यस्य परेषामप्यावश्यकत्वात्, अनिर्वचनीयपक्षान्न विशेषः प्रतीयत इत्यास्तां तावत्॥

अतः परमात्मख्यातिर्विमृश्यते। येन तस्या अपि अविशेष एवानिर्वचनवादाद्विशदायते।

आत्मख्यातिविमर्शः वाचस्पतिजयतीर्थप्रभृतिभिः कृतो वर्तते । वैभाषिकसौत्रान्तिकयोगाचारा आत्मख्यातिवादिनः । तत्रापि सौत्रान्तिकमते ज्ञानगत अर्थसारूप्येण अनुमीयमानशुक्त्यादिकमधिष्ठानम् । वैभाषिकमते बाह्यस्य प्रत्यक्षत्वात्तद्विषयीभूतमेव शुक्त्यादिकमधिष्ठानम् । एवं चोभयोर्मते सद्रूपं शुक्तिशकलादिकमेवाधिष्ठानमिति ज्ञायते । योगाचारमते बाह्यस्यालीकत्वात् अविद्याकल्पितमेवाधिष्ठानमिति विशेषः । सर्वेषां मते आरोप्यं तु ज्ञानाकार एव, भ्रान्तिज्ञानसदृशाकारस्य बाह्यार्थस्याभावात् । उपपत्तिं चेत्थं ते वर्णयन्ति— यद्यादृशमनुभवसिद्धं तत्तादृशमेवेत्युत्सर्गः । तद्वैपरीत्यं तु बाधकप्रत्ययमहिम्ना । तत्र नेदं रजतमिति बाधकप्रत्ययविमर्शे, इदंतामात्रबाधेन तदुपपत्तौ रजतबाधकत्वमपि न तस्य वक्तव्यम् । अन्यथा इदंतायाः रजतस्य च बाधने गौरवप्रसङ्गात् । तथा च बहिष्ट्वरूपेदंत्वस्य बाधात्, अर्थाद्रजतस्यान्तरत्वं सिद्ध्यति । एवं चान्तर-आत्मधर्म एव रजतमिति सिद्धम् ॥

अत्र चिन्त्यते— रजतस्येदं रजतमिति ज्ञानं आत्मधर्मत्वं गमयति, प्रत्युत इदंत्वरूपबहिष्ट्वमेव वा ? यद्यान्तरत्वमपि गमयेत्तर्हि अहं रजतमित्येव प्रतीतिर्भवेत्; ज्ञानात्मकात्तु प्रतिपत्तू रजतस्याभेदात्; न हि तथा अनुभूयते । नेदं रजतमिति बाधकप्रत्ययः आन्तरत्वं गमयतीति चेदत्रोच्यते । बाधकप्रत्ययनिरूपणे रजतस्य पुरोवर्तिनश्च भेदो ज्ञायते, न त्वान्तरत्वमपि तत्र प्रतीयते । अन्यथा तत्रान्तरमिति शब्दोल्लेखोऽपि स्यात् । पुरोवर्तित्वनिषेधादर्थादान्तरत्वमेवेति चेत्तदयुक्तम् । पुरोवर्तित्वनिषेधे समीपदेशे रजतं नास्तीति ज्ञायेत, न त्वत्यन्तसमीपेऽपि रजतं वर्तत इति । न च योगाचारमते सहोपलम्भादियुक्तिभिः ज्ञानव्यतिरेकेणार्थस्यालीकत्वात् बहिर्देशे रजतस्य सत्त्वस्य वक्तुमशक्यत्वात्, प्रतीयमानस्य रजतस्य असत्ख्यात्युक्तदोषेण असत्त्वस्याप्यसंभवात्, ज्ञानाकारत्वमेव वक्तव्यमिति वाच्यम् । यतोऽधिष्ठानस्यासत्त्वाङ्गीकारवत् आरोप्यस्याप्यसत्त्वमङ्गीक्रियतां, तस्य ज्ञानधर्मत्वाङ्गीकारेऽपि असत्ख्यात्युक्तदोषापरिहारात् । किं च सहोपलम्भादियुक्तयः सूत्रकारतद्भाष्यकारादिभिः विस्तरतो निराकृताः ; तत्रैव च द्रष्टव्याः ॥

किं च वैभाषिकसौत्रान्तिकयोः बाह्यरजतसत्त्वेऽपि भ्रान्तिज्ञाने भासमानस्य तत्सादृश्याभावात्खलु ज्ञानाकारत्वं व्यवस्थापितम् । तदा सिद्धं नः समीहितम् । प्रसिद्धलौकिकरजतवैलक्षण्यं शुक्तिरजते आगच्छत्येव, अनिर्वाच्यत्ववादिभिरपि एवमेवोच्यमानत्वात् । अतोऽस्य पक्षस्यानिर्वचनीयपक्षकुक्षिनिवेश एवोचितः ॥

एवमख्यातिपक्षोऽपि न विशेषं भजते । प्राभाकराः सांख्याश्चाख्यातिपक्षावलम्बिनः । अख्यातिपक्षो द्वैविध्यं भजते । केचन प्राभाकराः— शुक्तिदर्शनानन्तरं सादृश्यमहिम्ना रजतसंस्कारे उद्बुद्धे तत्स्मरणं जायते । तदनन्तरं दोषवशाद्रजते तत्तांशप्रमोषो भवति । रजतपुरोवर्तिवस्तुनोः भेदश्च न गृह्यते । ग्रहणस्मरणयोरपि भेदो न ज्ञायते । एवं च विषयतः स्वरूपतश्च अगृहीतभेदे ग्रहणस्मरणे एव इदं रजतमित्याकारकत्वेनाभ्युपगम्यते इति वदन्ति ॥ (क्रमशः)



# PREFACE.

PANCHARATNA is the name given to the five gems of slokas graciously vouchsafed to the world by that great World-Teacher, Sri Sankarabhagavatpadacharya, the incarnation of Lord Sri Sankara Himself, on the eve of his departure to Kailasa after firmly establishing in India the Advaita system, the product of his mighty intellect, the wonder and admiration of the whole world of scholars. This work is otherwise popularly known as UPADESAPANCHAKAM or SOPANAPANCHAKAM. In these five verses the great Teacher has given out in easy terse language the various important rules of conduct which one should observe in the course of his life culminating in the realisation of the supreme Brahman. The style is quite characteristic of the Master-scholar who could expound the highest truths of philosophy in the simplest language possible in any number of volumes or condense the same succinctly in half-a-verse even. Such is his command over the subject and his mastery over the language that it is a pleasure to read his works big or small. Though He is the founder and expounder of the unique philosophy that teaches unity in diversity and reduces everything to the One without a second, एकमेवाद्वितीयं ब्रह्म, yet as a saguna worshipper he is unrivalled in teaching his disciples the rules of conduct they should follow in this work-a-day world to attain the goal of one's life *viz.*, Brahmasakshatkara. Such rules of conduct are clearly and definitely enjoined in these five slokas as the essence of all the smritis. As these injunctions are in the nature of teachings they are called UPADESAPANCHAKAM (the five slokas containing Upadesas or teachings) and as they are given one after another in graded steps they are called also SOPANAPANCHAKAM (five slokas containing sopanas or steps). From the first upadesa (वेदो नित्यमधीयताम्) study well the Vedas daily, it proceeds step by step to the final stage (परब्रह्मात्मना स्थीयताम्) merge into one with Parabrahman.

Though the language of the slokas is itself simple and flowing, yet, the Karikas help a great deal in understanding the purport of the slokas aright and in clearing

our mind of all doubts and confusions. The author of the Karikas is one Sadasiva of whom not much is known except that he was a disciple of Sri Ramendra Swami. Sri Sacchidananda Tirtha Swami in his most valuable *Prastavana* opines that the author might have been a Sannyasi. In the *Prastavana* is discussed also the special characteristics of the incarnation of God as Sri Sankarabhagavatpadacharya which distinguish him from the other incarnations such as Sri Rama and Sri Krishna. We are greatly indebted to Swami Sri Sacchidananda Tirtha for this precious *Prastavana.*

We were able to secure only one Ms. copy of this rare work and that from the Tanjore Sarasvati Mahal Library only. With that one Ms. copy we have edited this work and published it with pleasure as the first number of the Sri Sankaragurukulam Series. It is but fitting that the Sri Sankaragurukulam Series should commence with this Pancharatna containing wholesome Upadesams from the lips of Sri Sankarabhagavatpadacharya whose charming Image is consecrated here in the Temple specially dedicated to him and the purpose of whose avatara is the establishment of Vaidic Dharma and Jnana. Our thanks are due to Brahmasri Pandit S. Subrahmanya Sastri of Tanjore, now at Adyar, for having helped us with the correction of the proofs and with his valuable suggestions.

Sri Sankaragurukulam
Srirangam.

*T. K. Balasubrahmanyam.*

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

SRIRANGAM SRI SANKARA GURUKULA SERIES NO. 8.

# MANĪSHĀ PAÑCHAKAM

OF

## SRI SANKARA BHAGAVATPADACHARYA

WITH A SUMMARY OF
THE COMMENTARY OF
SRI SADASIVA BRAHMENDRA

EDITED BY

*Gurubhaktasikhamani, Sastraprasarabhushana*
T. K. BALASUBRAHMANYA AIYAR B. A.,
*Dharmadhikari, Sri Sankaragurukulam, Srirangam.*






SRIRANGAM:
SRI VANI VILAS PRESS.
1940.



॥ श्रीः ॥

श्रीगुरुभ्यो नमः ॥

# ॥ मनीषापञ्चकम् ॥

श्रीसदाशिवब्रह्मेन्द्रवाक्प्रदर्शितवर्त्मना ।
मनीषापञ्चकव्याख्या क्रियतेऽतिसमासतः ॥

इह खलु परमकृपालुर्भगवान् शिवः निरवधिकदुःखसागरनिमग्नं जनमुद्धिधीर्षुः कदाचिद्वाराणसीं प्रति गच्छन्तं भगवत्पादं प्रति चाण्डालवेषच्छन्न आजगाम । ततो जगाद भगवान् भाष्यकारः 'हे चाण्डालापशद इतो दूरं गच्छ गच्छ' इति । ततः पञ्चमरूपः पञ्चाननः परमशिवः प्राह—

अन्नमयादन्नमयमथवा चैतन्यमेव चैतन्यात् ।
यतिवर दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥

हे यतिवर ब्रूहि— किमन्नमयात् शरीरात् अन्नमयं शरीरं गच्छगच्छेति दूरीकर्तुं वाञ्छसि; अथवा चैतन्यमेव चैतन्यात् गच्छ गच्छेति दूरीकर्तुं वाञ्छसि ? नाद्यः, उभयोः शरीरयोरन्नकार्यत्वेनैकत्वात् । न

च तत्र प्रमाणाभावः, अन्नरसमयमिदं शरीरमिति श्रुतिषु प्रसिद्धेः। एवं कृत्स्नस्य मायाकार्यत्वादप्येकत्वं द्रष्टव्यम्। न द्वितीयः, 'एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः' इति विष्णुपुराणवचसा चैतन्यस्यैकत्वव्यापकत्वयोः श्रवणात्। सर्वगतस्य देशाद्देशान्तरं प्रत्यपसर्पणायोगात्। न ह्याकाशः केनचित्कथंचिद्दूरीकर्तुं शक्यते। यद्यपि 'भिन्ना प्रकृतिरष्टधा' इति भूतरूपकार्यभेदः श्रूयते, तथाऽपि नासौ स्वाभाविकः। किं तु तत्तदवस्थाभेदनिबन्धनः। सा चावस्था मिथ्येति सिद्धं कार्यकारणयोरैक्यम्। तथा चान्नमयत्वेन चेतनत्वेन वा एकात्मकत्वात् परनिन्दादिकं न समञ्जसमिति भावः। चैतन्यैकत्वमेव दृष्टान्तद्वारा विशदीकुर्वन्नाह—

प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ
विप्रोऽयं श्वपचोऽयमित्यपि महान्कोऽयं विभेदभ्रमः।
किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ चाण्डालवीथीपयः-
पूरे वाऽन्तरमस्ति काञ्चनघटीमृत्कुम्भयोर्वाऽम्बरे ॥

प्रत्यग्वस्तुनि अनृतजडदुःखाहंकारादिभ्यो विलक्षणत्वेन प्रतिभासमानं यद्वस्तु सद्रूपं ब्रह्म तस्मिन्नित्यर्थः। अत्र वस्तुपदेन ब्रह्मणः सद्रूपत्वं सूचितम्। उक्तं चैतद्विष्णुपुराणे—'यत्तु कालान्तरेणापि नान्यां संज्ञामुपैति हि। परिणामादिसंभूतां तद्वस्तु नृप तच्च किदम् ॥' इति। एवं सदात्मकत्वमुक्त्वा चिदानन्दरूपत्वमप्याह— निस्तरङ्गसहजानन्दावबोधाम्बुधाविति। निस्तरङ्गः निश्चलः नीचोच्चभावरहितः। वैषयिकं सुखं तु जलबुद्बुदवच्चञ्चलं तरतमभावापन्नं च। नैतादृशः। अत एव सहजः स्वाभाविकः, 'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्' इत्यत्र

सहजशब्दस्य स्वाभाविके कर्माणि प्रयोगदर्शनात् । आचार्योक्तरीत्या निर्विकल्पनित्यपरौ वा निस्तरङ्गसहजशब्दौ । तथा च निर्विकल्पः ध्रुवश्च यः परमानन्दावबोधः स एवाम्बुधिरिवाम्बुधिः । अत्राम्बुधिसादृश्यं सर्वत्रैकरसत्वापारत्वादिना द्रष्टव्यम् । तदनेन सच्चिदानन्दत्वं ब्रह्मणः स्वरूपलक्षणमुक्तम् । यद्यपि लक्ष्याश्रितस्यैव कम्बुग्रीवादिमत्त्वादेर्घट-लक्षणत्वं दृष्टम्, सच्चिदानन्दत्वं तु न ब्रह्माश्रितम्, अतो नास्य लक्षणत्वं युक्तमित्याशङ्का भवति, तथाऽपि स्वरूपलक्षणत्वाददोषः; लक्ष्याश्रितत्वा-दिकं तु तटस्थलक्षण एव द्रष्टव्यम् । स्वरूपात्मकं लक्षणं हि स्वरूपलक्षणम् । ननु अस्तु ब्रह्मणः सच्चिदानन्दस्वरूपस्य स्वतः शुद्धत्वम्, तथाऽपि श्वपचादिहेयदेहसंबन्धात् चर्मपात्रगतगोक्षीरवद-शुद्धत्वमिति चेत्, नैतद्युक्तम् । कस्मात्? यस्मात् गङ्गाम्बुनि भागीरथीजले प्रतिबिम्बिते, चाण्डालवीथीपयःपूरे चाण्डालस्य या वीथी वाटिका तस्यां यः पयःपूरो नीरप्रवाहः, तस्मिन्वा प्रतिफलिते अम्बरमणौ सूर्ये किमन्तरं भेदोऽस्ति ? न कोऽपीत्यर्थः । कथं तर्हि अयं गगनस्थः सूर्यः अयं जलस्थः सूर्य इति भेदप्रत्ययः? उपाधिभे-दादित्यवेहि । निदर्शनान्तरमाह— काञ्चनघटीमृत्कुम्भयोर्वाऽम्बरे इति । काञ्चनस्य सुवर्णस्य घटी काञ्चनघटी, मृदः कुम्भः मृत्कुम्भः, एतयोरवच्छिन्नेऽम्बरे आकाशे किंचिदन्तरमस्ति वा ? न किमपीत्यर्थः । तथा च यथा परिपूर्णः एकोऽप्याकाशः रुक्मघटमृद्घटयोरवच्छिन्नतया भिन्न इव परिच्छिन्न इव च लक्ष्यते, न हि तस्मिन् वस्तुतः परिच्छिन्नत्वं नानात्वं वा अस्ति ; तथा परमात्माऽपि परमार्थतो अपरिच्छिन्न एकोऽपि

देहाद्यवच्छेदकभेदेन भिन्नवत्परिच्छिन्नवच्चानुभूयमानोऽपि सर्वथा परिपूर्ण एक एवावशिष्यते ॥

तदुक्तम्—

'चण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे ।
अन्येषु तारतम्येन स्थितेषु पुरुषोत्तमः ॥

व्योमवत्सर्वदा व्याप्तः सर्वसंबन्धवर्जितः ।
एकरूपो महादेवः स्थितः सोऽहं परामृतः ॥' इति ॥

नातो नैकत्वानुपपत्तिः । सर्वसंबन्धवर्जित इत्यनेन श्वचर्मपात्रस्थगोक्षीरवैषम्यमुक्तं भवति । गोक्षीरस्य स्वसमानसत्ताकश्वचर्मसंबन्धवत् ब्रह्मणः पारमार्थिकश्वपचादिदेहसंबन्धाभावात् । न ह्यसत्यदोषसंबन्धात्कश्चिद्दुष्टो भवति । अन्यथा श्रोत्रियस्य स्वाप्नश्वपचदेहसंयोगाद्दुष्टत्वं स्यात् । तथा च सच्चिदानन्दरूपत्वेन द्वयोरेकत्वात् दूरं गच्छ गच्छेति मम निन्दा न युक्ता ॥

इत्थं चण्डालवेषप्रच्छन्नस्य शिवस्य वचनं श्रुत्वा भगवान्भाष्यकारः विगलितभेदाभिमानवतः कांश्चित्पुरुषविशेषानुपलक्ष्य तेषां त्विनैव समाधिं ब्राह्मणत्वाद्यभिमानापनुत्तये परमात्मपदे विश्रान्तये च पञ्चभिः श्लोकैः स्वानुभवं प्रकटयन्नाह—

**जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते**
**या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ।**

सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञाऽपि यस्यास्ति चे-
च्चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥

जाग्रत्स्वप्नसुषुप्तिष्विति । यदा तु सूर्यानुगृहीतैश्चक्षुरादिकरणै रूपादिस्थूलविषयाणां ज्ञानं तदा जाग्रदवस्था । यदा त्विन्द्रियाणामुपरतत्वेन चित्तस्यापि बाह्यव्यापारोपरमः केवलवासनामयपदार्थोपलब्धिः तदा स्वप्नावस्था । तदुक्तं मोक्षधर्मे—

‘ इन्द्रियाणामुपरमे मनोऽनुपरतं यदि ।
सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम् ॥ ’ इति ।

विषयान् वासनामयानित्यर्थः । यदा तु कारणभूते भावरूपाज्ञाने करणान्तरवच्चित्तमपि लीनं भवति तदा सुषुप्त्यवस्था । आसु तिसृष्ववस्थासु तद्भासकत्वेनानुवर्तमाना स्फुटतरा आविर्भावतिरोभावरहिता या संवित् चैतन्यैकरसः परमात्मा । उज्जृम्भते स्वयमेव प्रकाशते स एवाहमस्मीत्यनन्तरेणान्वयः ॥

एवमवस्थात्रयसाक्षित्वेनात्मनः परब्रह्मत्वं प्रदर्श्य व्यष्टिसमष्ट्यात्मकसकलशरीराधिष्ठानत्वेन तदवभासकतया तस्य परब्रह्मत्वं दर्शयति— या ब्रह्मादिपिपीलिकान्ततनुषु प्रोतेति । ब्रह्माद्याः पिपीलिकान्ताश्च ये प्राणिवर्गाः तेषां तनुषु प्रोता अवभासकतया स्थिता या संवित् यो विज्ञानैकरसः परमात्मा । न केवलमयमात्मा देहादि-

सचेतनप्रपञ्चस्य प्रकाशकः, अपि तु जडप्रपञ्चस्यापीत्याह— जगत्साक्षिणीति । साक्षादीक्षत इति साक्षी सर्वस्य जगतः स्रष्टा परमात्मा स एवाहमस्मि; दृश्यवस्तु देहादिकं च नास्मि, तस्य स्वरूपयथार्थज्ञानेन बाध्यमानत्वात् । एवं यस्य दृढप्रज्ञाऽस्ति । किमिदं प्रज्ञादार्ढ्यमिति चेत्, शृणु । यथा अनन्तजन्मसंस्कारवशादस्मिञ्जन्मनि विनैवोपदेशं कामादय उत्पद्यन्ते, तथा चिरं कालं नैरन्तर्येण भाविते परतत्त्वे पश्चाद्वेदान्तवाक्ये तदनुकूलन्यायपरिशीलनमन्तरेण पुरःस्थितघटादिवत्सर्वदा तत्त्वपरिस्फुरणम् । तदुक्तम्—

'वृक्षे वृक्षे च पश्यामि जटामण्डलधारिणम् ।' इति ।

तदिदं ब्रह्मज्ञानस्य दृढत्वम् । एतादृशं ब्रह्मज्ञानं यस्यास्ति स तु ब्रह्मैवेति कृत्वा चाण्डालोऽस्तु द्विजोऽस्तु परं तु मम गुरुरित्येषा मनीषा ॥

ननु चाण्डालस्य कथं गुरुत्वं 'वर्णानां ब्राह्मणो गुरुः' इत्युक्तेरिति चेत्, न । नित्यशुद्धात्मविज्ञानेन जातिकुलाद्यभिमाननिवृत्तेर्गुरुत्वं तस्य युक्तम् । तदुक्तं भारते—

'चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः ।' इति ।

'न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्त्येष्वपि च जातानां वृत्तमेव विशिष्यते ॥' इति च ।

चण्डाललक्षणं तु निगदितं पुराणान्तरे—

अवेक्ष्य कर्मजातमेष तत्फलं प्रयच्छती-
त्यपि श्रुतिप्रसिद्धमेव नात्र कल्पनाऽस्ति नः ।
न सेवनानुरोधिभृत्यवेतनप्रदायिनः
स्वतन्त्रता विहीयते नयस्थितस्य भूपतेः ॥ १४ ॥

(पञ्चचामरः)

१३· सर्वधर्मोपपत्त्यधिकरणम् ॥

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

नोपादानं निर्गुणमेक्षि ब्रह्माप्येतान्निर्गुणमेव ।
नोपादानं तज्जगतोऽर्हं वैदिकवचसाप्येतदसाध्यम् ॥

दुःशङ्कैषा खल्वपरेषामारम्भे हि स्यान्न विवर्ते ।
यद्दृश्यन्ते जातिगुणेष्वप्यन्यापोहत्वादिविवर्ताः ॥१६॥

(काञ्चनमाला)

इति श्रीमदप्पय्यदीक्षितेन्द्रविरचिते चतुर्मतसारे नयमञ्जर्याख्ये
चतुर्थपरिच्छेदे द्वितीयाध्यायस्य
प्रथमः पादः ॥






१. रचनानुपपत्त्यधिकरणम् ॥

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

सुखदुःखमोहकलिलं हि निखिलं
त्रिगुणात्मकं नियमतो जगदिदम् ।
अनुरूपमस्य जगतः प्रकृतितां
त्रिगुणं प्रधानमुपयाति न परः ॥ १ ॥

ननु मायया त्रिगुणया भगवतः
स्फुटसिद्धसाधनहता त्वदनुमा ।
यदि तु स्वतन्त्रमनुमेयमुररी-
कुरुषे स्वदर्शनविरोधि तदिदम् ॥ २ ॥

(नवनन्दिनी)

२. महद्दीर्घाधिकरणम् ॥

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

प्रपञ्चोपादाने नैव चैतन्यमास्ति
प्रपञ्चे नास्तित्वादम्बरादौ जडेऽस्मिन् ।
न खल्वास्ते सूक्ष्मे गन्धवत्त्वादि दृष्टं
तदत्रोपादानं संमतं न प्रधानम् ॥ ३ ॥

इदं नास्त्येकान्तं यद्गुणाः कारणानां
गुणान्कार्ये दृष्टेऽप्यारभन्ते मते ते ।
न हि ह्रस्वत्वाद्वा पारिमाण्डल्यतो वा
गुणारम्भः कार्ये संमतस्ते बुधस्य ॥ ४ ॥

(चञ्चरीकावली)

३· परमाणुजगदकारणत्वाधिकरणम् ॥

## उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥

ये शाटीपेटीप्रभृतय इमे खल्वनेकस्वभावै-
स्तत्तत्कर्मभ्यः स्वयमुपचितैरेकजात्याऽवरूढैः ।
आरभ्यन्ते तैरपि च मिलितैरेवमुर्वीनगाद्याः
सूक्ष्मैरारब्धा इति यदणुवाद्युक्तमेतद्दुरुक्तम् ॥

नैवानेकत्वं द्रुतघनतरावस्थयोः कारणस्थं
नाप्यस्त्यल्पत्वं प्रचितमृदिते तैलपिण्डादिकार्ये ।
सूत्रैर्गोवालैरपि विरचिते दामनि ह्यैकजात्यं
किं चाणुष्वेषां मिलनजननं कर्महेतोः कुतस्तत् ॥

(कुसुमितलता)

४. समुदायाधिकरणम् ॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

न हि समुदायद्वय इह बाह्यान्तरभावे
जनयितृभावः कथमपि चैतन्यवतोऽर्थः ।
क्षणिकतया यत्किमपि हि दृष्टं तदपेक्षं
तदुभयहेतुस्तदलमिहाण्वादिगणो नः ॥ ७ ॥

इति सुगतानां मतमिदमत्यन्तमयुक्तं
क्षणिकमतेऽन्त्यः क्षण इव पूर्वोऽप्यनपेक्षः ।
न यदि भिदाऽन्त्यक्षणजनने स्यादिति तस्मात्
फलमपि कुम्भे स्थितिमति बीजप्रकरे स्यात् ॥

(प्रियकान्ता)

५. अभावाधिकरणम् ॥

## नाभाव उपलब्धेः ॥ २८ ॥

स्वप्नधीनयात्सहोपलम्भतश्च सर्वदा निरूपणे हि
दौस्थ्यतो न संविदोऽन्यदर्थजातमत्र भूतले समस्ति ।
नीलपाटलादिसंविदेव पूर्वपूर्ववासनावशेन
भावरूपिणी विभाति साऽपि वा न चास्ति वेद्यवर्जितेति ॥ ९ ॥

सौगतं मतान्तरं त्वतीव तुच्छमत्र नास्ति बाधकं हि
संध्ययत्सहोपलम्भनं प्रभाघटादिवद्भिदानुरोधि ।
रूपणस्य नीलपाटलादिकस्य संविदात्मकत्वमेव-
मूचुषाऽपि कार्यमेव तज्जगच्च संविदोऽन्यदस्ति साऽपि ॥ १० ॥

(वृत्तम्)

६. एकस्मिन्नसंभवाधिकरणम् ॥

## नैकस्मिन्नसंभवात् ॥ ३३ ॥

सदसदुभयतादिप्रकारान्वितं
सकलमिदमतो नैकरूपं जगत् ।
भवति हि विषयेष्वस्ति नास्तीति च
प्रमितिरत इदं चित्ररूपोपमम् ॥ ११ ॥

इति जिनकलितं सप्तभङ्गीमतं
बुधजनविमतं यद्विरोधाकुलम् ।
न खलु भवति धीरस्ति नास्तीति च
क्वचिदपि च विना देशकालोपधिम् ॥ १२ ॥

(चन्द्रिका)

७. पत्यधिकरणम् ॥

## पत्युरसामञ्जस्यात् ॥ ३७ ॥

नोपादानं जगतामादिदेवः
　कर्ता ह्येष स्वनियम्यः कथं स्यात् ।
द्रव्ये कर्ता तदुपादानभावं
　संप्राप्तो वा क्व नु दृष्टः सुधीभिः ॥ १३ ॥

शैवादीनामनुमानावलम्बं
　नेमं पक्षं निगमान्ताः क्षमन्ते ।
स्वेच्छामात्राद्धेतुभावं परस्मिन्
　बिभ्राणे कस्य नियम्यत्वदोषः ॥ १४ ॥

(वातोर्मी)

८. उत्पत्त्यसंभवाधिकरणम् ॥

## उत्पत्त्यसंभवात् ॥ ४२ ॥

निःश्वसितं हि परस्य घुणाक्षरपङ्क्तिसमं
　तेन विमृश्य कृतं किल तन्त्रमतो बलवत् ।
तत्तनुभृद्गणजन्मनि सात्वततन्त्रमिते
　सा स्मृतिरस्तु पराद्यबाधकता न हि ते ॥ १५ ॥

जीवजननापवर्गकथैव मुधाऽस्य भवे-

द्वेदवचश्च दृढक्रममागमतो बलवत् ।

तेन तदंशकृतौ पुरुषस्य विमोहनता-

कल्पनमर्हति सा खलु तन्त्रकृतोऽस्य मिता ॥

(अश्वगतिः)

इति श्रीमदप्पय्यदीक्षितेन्द्रविरचिते चतुर्मतसारे नयमञ्जर्याख्ये

चतुर्थपरिच्छेदे द्वितीयाध्यायस्य

द्वितीयः पादः ॥



## द्वितीयाध्यायस्य तृतीयः पादः ॥

### १. वियदधिकरणम् ॥

## न वियदश्रुतेः ॥ १ ॥

हरिपदतेजसोः क्रमिकसृष्टिवर्णनात्

प्रथमजनौ द्वयोरनुपपत्तिमागताम् ।

शमयितुमाद्यमत्र जनिहीनमुच्यतां

स्पृशिरहितत्वयुक्तगुणवत्त्वदर्शनात् ॥ १ ॥

क्रम इह तेजसः प्रथमसृष्टिवर्णने

भवति विबाधितः प्रथमपाठलाभतः ।

जनिरहितं नभो यदि जनिश्च तत्क्रम-

श्रुतिरपि बाध्यते न बहुबाधनोचिता ॥ २ ॥

(प्रभद्रकम्)

### २. मातरिश्वाधिकरणम् ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

मरुदनस्तमितदेवताश्रुते-

रमृततासमुपवर्णनादपि ।

जननवान्न भवतीति तत् क्वचि-

त्क्वचिदधीतमपि यातु गौणताम् ॥ ३ ॥

उपनिषत्सु हि विशुद्धमव्ययं
सकलशब्ध्यधिगतं प्रतिज्ञया ।
तदनुरोध्यमृततानिरूपण-
प्रमुखमन्यदिति सोऽपि अन्मवान् ॥ ४ ॥

(प्रियंवदा)

३. असंभवाधिकरणम् ॥

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

तदपि विकारः कारणभावा-
त्सदखिलमूलं वायुनभोवत् ।
उपनिषदाऽपि ह्यात्मन आत्म-
प्रभवगिरैतद्दर्शितमेव ॥ ५ ॥

भवति सतश्चेत्स्यादनवस्था
न सदसतः स्यात्स्पष्टविरोधात् ।
तदुभयभिन्नं स्यात्सत एवे-
त्यजनि सदन्यार्था श्रुतिरुक्ता ॥ ६ ॥

(मौक्तिकमाला)

४. तेजोऽधिकरणम् ॥

## तेजोऽतस्तथा ह्याह ॥ १० ॥

तेजसो जनिर्ब्रह्मणः परात्तेन स्पष्टता श्रूयते यतः ।
तैत्तिरीयके वायुशब्दतः पञ्चमी तु दिग्योगलक्षणा ॥ ७ ॥

नैरपेक्ष्यतः कारकश्रुतेः संनिधेरुपादानतार्थिका ।
पञ्चमी तु तत्तेजसो जनिर्वायुनामिः सूक्ष्मणः परात् ॥ ८ ॥

(गमकाामिनी)

५. अबधिकरणम् ॥

## आपः ॥ ११ ॥

अपां जनिर्नैव पावकाद्विरोधिनः संभवेत्कचित् ।
अतः परादेव तज्जनिं प्रमन्महे विश्वकारणात् ॥ ९ ॥

व्यतिक्रमः किं तु तच्छ्रुतेर्विरोधिता सूक्ष्मयोस्तयोः ।
विवक्षिता तेन तज्जनिर्भवेत्परादग्न्युपाधिकात् ॥ १० ॥

(ज्ञानकामिनी)

६. पृथिव्यधिकाराधिकरणम् ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

नीवारप्रमुखमन्नं यत्सृष्टं विदितमद्भिः ।
तत्रान्नश्रवणरूढेरद्भिस्तज्जनिदृशेश्च ॥ ११ ॥

भूतानामधिकृतेर्भूः कृष्णत्वाधिकतयाऽस्याः ।
अन्यत्रान्नपदादेशस्तद्वाचिश्रुतिकृतश्च ॥ १२ ॥

(हंसगीता)

७. तदभिध्यानाधिकरणम् ॥

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

*तत्तद्भूताकारापन्नं सदितरजनकमिति कथं श्रुतिद्वयवैशसा-
व्योमादीनां पञ्चम्या हि श्वसनमुखजनिषु विदिता स्फुटं निरपेक्षता ।
तेषां स्वातन्त्र्यं चादुष्टं सत इव बहुभवनदृशः श्रुतावुपवर्णना-
दाकाशादेवेत्यप्यन्या श्रुतिरिह समधिगमयते सतो निरपेक्षताम् ॥

बाधं नार्हन्त्येते सर्वे द्विविधवचनसमधिगता यतः खलु धर्मिणः
सच्चाकाशाद्याश्चेहासते न हि किमपि विनिगमकं तदन्यतरोज्झितौ ।
तस्माद्बाध्या तद्धर्मत्वाद्वियदधिकृतिकथितनयादियं निरपेक्षता
भूतानां तत्स्वातन्त्र्यं च स्थितवति यमयितरि परोक्तं च न युज्यते ॥
(भुजङ्गविजृम्भितम्)

८. विपर्ययाधिकरणम् ॥

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

सृष्टौ भूतानां क्रम इह खलु यः क्लृप्तो
वेदान्तेष्वेष प्रसरतु विलयेऽप्येषाम् ।
कार्योपादाने प्रथमचरमनाशत्वं
लोके दृष्टं न प्रभवति बहिरङ्गं तत् ॥ १५ ॥

---

* इमौ श्लोकौ कल्पतरुपरिमले अस्मिन्नेवाधिकरणे दीक्षितैः निर्दिष्टौ ।

नान्वेतुं योग्यः क्रम इह विदितः सृष्टौ
प्रत्यासन्नोऽपि श्रुतिकथितलये श्रौतः ।
नो चेत्कार्यं स्यात्क्षणमपि निरुपादानं
तद्वा संभाव्यं न भवति विदुषामिष्टम् ॥ १६ ॥

([illegible])

९. अन्तराविज्ञानाधिकरणम् ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

भूतजन्मतोऽपि हि प्राक् प्राणमानसादिजन्म ।
मुण्डके पठितं तस्मादादिमा न भूतसृष्टिः ॥ १७ ॥

प्राणमानसादिकानां भौतिकत्वहेतुतार्थः ।
पाठतो बली निदध्यादग्र एव जन्म तेषाम् ॥ १८ ॥

(सिंहरथा)

१०. चराचरव्यपाश्रयाधिकरणम् ॥

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

जीवस्य जन्मसृतिहीनताश्रुति-
र्जातेष्टिपित्र्यविधिभिर्विरुध्यते ।

तस्यैव जन्मनिधने निमित्ततां
तेष्वर्हतो न वपुषो निराकृतेः ॥ १९ ॥

आवेदयन्ति ननु तेऽपि नित्यतां
जीवस्य भाविफलभोगसिद्धये ।
तस्माच्छरीरजनिमृत्यु तद्द्विधा-
वध्यस्तमेव भजते निमित्तताम् ॥ २० ॥

११. आत्माधिकरणम् ॥

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

मा भून्मातुर्जननमस्य देहा-
त्कल्पारम्भे जननमीशमुख्यात् ।
व्याकोपः स्यादितरथा पदानां
तत्स्रष्टत्वं विदधताममुष्य ॥ २१ ॥

ब्रह्मात्मत्वं त्वपरथाऽनुवृत्तं
वाक्यैरस्य ह्यधिगतं प्रधानैः ।
तस्मान्नित्यस्तदनुसारिणीनां
जन्माभावश्रुतिगिरां बलित्वात् ॥ २२ ॥

१२. ज्ञाधिकरणम् ॥

## ज्ञोऽत एव ॥ १८ ॥

ज्ञप्तिरुदेति नश्यति सुषुप्तिषु सा
नास्ति सकर्मिका सततमात्मगता ।
नास्य हि रूपमात्मन इयं भवितुं
................................ ॥

संततचिन्मयस्तु स तथा श्रवणा-
त्संशयविभ्रमाद्यविषयत्वसत्त्वात् ।
यत्तु सकर्मकत्वमुदयप्रमुखं
सर्वमिदं मनःप्रभववृत्तिगतम् ॥ २४ ॥

(नर्दटा)

१३. उत्क्रान्तिगत्यधिकरणम् ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

उत्क्रमणं गतमागतं च शरीरिणो
नैव विभुत्वमते कथंचन युज्यते ।
तद्बलवत्यनुरुध्यतामणिमश्रुति-
र्वैभववर्णनमौपचारिकतां भजेत् ॥

श्रुत्युदिताऽप्यणुताऽस्य सर्वशरीरक-
व्यापिसुखोदयदर्शनेन विरुध्यते ।

तद्विभुरेष तु बुद्ध्युपाधिवशादिदं
यद्गतमागतमर्थवादगिरोच्यते ॥

(सुन्दरम्)

॥ १४. कर्त्रधिकरणम् ॥

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

बुद्धिः कर्त्री परिणतिशतभाङ्
न त्वात्मा स ह्यविकृतिरुदितः ।
कर्त्र्यामस्यां स्फुरणमुभयथा
युक्तं न त्वन्मतविनिगमकम् ॥ २७ ॥

दद्याद्ध्यायेदिति विविधविधि-
श्रुत्यर्थापत्त्यधिगमितमिदम् ।
भोक्तृश्रुत्युक्तिषु च सुविदितं
कर्तृत्वं न त्वपलपनसहम् ॥ २८ ॥

(भ्रमरविलसितम्)

॥ १५. तक्षाधिकरणम् ॥

## यथा च तक्षोभयथा ॥ ४० ॥

विशुद्धो यद्येवं भवतु कृतिमान्यो हि मुक्तिं
भजेद्युक्तं तस्य प्रयतनमुपायेषु मुक्तेः ।

उदासीनत्वं तु श्रुतिषु विदितं मोक्षकाले
भविष्यत्तन्नास्ति क्वचिदपि च कश्चिद्विरोधः ॥ २९ ॥

अहंकारः कर्ता चिदचिदुभयाध्याससिद्धो
न चेत्कर्तृत्वादेः कथमपि चिदपेक्षोपपन्ना ।
उपादानत्वे संभवति न निमित्तत्वमस्मिन्
विशुद्धेऽप्यध्यस्ता कृतिरिति तु मुख्यार्थयत्नः ॥ ३० ॥

(मन्दाक्रान्ता)

१६. परायत्ताधिकरणम् ॥

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

प्रावृडुदञ्चितशैवलिनीरयकृष्यमाणतरोरिव
प्रेर्यतरस्य परेण हि न स्युरिमाः प्रवृत्तिनिवृत्तयः ।
किं च विधाननिषेधवितानियोज्यताऽपि न संभवेत्
तत्परकारयितृत्ववचो व्यतिरेकशून्यमपक्ष्यताम् ॥ ३१ ॥

न स्तुतिमात्रमिदं वचनं न हि किंचिदत्र विरुध्यते
न व्यतिरेकमहाबलमागमगम्यहेतुरपेक्षते ।
प्रेरकता च परस्य न लौकिकवैदिकेषु जलौघवत्
किं तु हिताहितबुद्ध्युपहारमुखेन सेति परीक्षकाः ॥ ३२ ॥

(अम्बुजम्)

कथमाशङ्क्य स्वाध्यायविधिबलेनार्थवत्तया भवितव्यमित्येतावदर्थपर्यवसितं कथितम्; तत्पर्य-

---

चिन्ता [1]समापिता। इदानीं तद्बहिर्भूतेषु मन्त्रेषु चिन्ता क्रियत इत्यर्थः। अनेन समनन्तराधिकरणयोरर्थवादाधिकरणशेषत्वात् हेत्वधिकरणं विहाय अर्थवादाधिकरणेन संगतिर्दर्शिता। मन्त्रेषु चिन्तनीयमर्थं वक्तुं तेषु प्राक् सिद्धमर्थमाह— **तेषामिति**। तेष्विह चिन्तनीयमाह— **इदानीमिति**। अर्थविशेषः प्रयोजकविशेषः। तस्यानेकविधस्य[2] संभवे खलु चिन्तावकाशः। अतस्तस्य दृष्टादृष्टरूपेणानेकविधत्वं संभावयन्नधिकरणाङ्गं संशयं दर्शयति— [3]**एतेषां चेति**। ननु 'विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते' इत्यध्ययनविध्यापादितपुरुषार्थविशेषो धर्मप्रवृत्त्युपयोगरूप एव मन्त्राणामपि वक्ष्यमाणतया प्रतिज्ञातः। कथमिह तं विहाय तेषां प्रधाने विनियोगचिन्ता क्रियते? तृतीये हि तस्याः संगतिः। न च मन्त्राणां धर्मप्रामाण्यप्रकारविशेषावगत्यर्थेयं चिन्ता न स्वतन्त्रा; प्रयोगविधिग्राह्यपदार्थतया तेषां [4]धर्मप्रामाण्यमर्थवादाधिकरणे दर्शितम्। तत्प्रामाण्यनिर्वाहकं प्रयोगविधिग्राह्यत्वं किंद्वारेति चिन्ता— प्रामाण्यप्रकारविशेषचिन्ता— भवति। [5]अत उद्भिदादिपदानां गुणसमर्पकत्वे [6]यागानां समर्पकत्वे च [7]प्रामाण्याविशेषेऽपि गुणविधिनामधेयचिन्ताया इव प्रमाणाध्यायसंगतिः स्यात् इति वाच्यम्। तथा सति प्रयाजादिद्वारविशेषचिन्ताया अप्यत्रैव कर्तव्यत्वापत्तेः, सर्वेषामङ्गानां प्रयोगविधिग्राह्यत्वाविशेषात्। अतो मन्त्राणामेव [8]द्वारविशेषचिन्तायां विशिष्य [9]कारणेन भाव्यम्; तन्न पश्याम इति शङ्का च-शब्देन तु-शब्दार्थे वर्तमानेन व्यावर्त्यते। अत्रायमाशयः— मन्त्राणां प्रयोगविधिग्राह्यपदार्थतयेव शब्दविधया [10]बोधनेनापि सिद्धान्ते प्रामाण्यमभिमतम्। तथा हि— 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्राणां प्रकाश्या बर्हिर्लवनादयः श्रेयःसाधनभूता धर्मा इति तत्प्रमित्युपयोगरूपमेकं प्रामाण्यमुत्तमपुरुषवर्तमानापदेशादिभिरनुष्ठेयावस्थपदार्थप्रतिपादकानां [11]तेषामज्ञातपदार्थकर्तव्यताबोधकविधिवाक्यप्राप्तार्थानुवादकत्वाभावात् स्वस्वविनियोजकलिङ्गश्रुतिकल्पनाद्वारा धर्मप्रमित्युपयोगरूपमपरं प्रामाण्यम्, ततस्तेषामेव [12]धर्मत्वसिद्धेः। इदं द्विविधमपि प्रामाण्यमुच्चारणमात्रेणादृष्टद्वारोपकारकतायां[13] न सिध्यति। अनुष्ठेयावस्थप्रमितेस्तेभ्यो जायमानायाः स्वतो विनियोगकल्पनाया[14] वा पुरुषार्थपर्यवसायित्वाभावात्। अध्ययनविध्यापादितपुरुषार्थपर्यवसानशिरस्को हि धर्मप्रमित्युपयोगो मन्त्राणामपि वक्तव्यत्वेन प्रतिज्ञातः। अतोऽर्थवादाधिकरणपूर्वपक्षेऽर्थवादानामिवास्मिन् पूर्वपक्षे प्रतिज्ञातप्रामाण्यासिद्धिरूपाप्रामाण्यपर्यवसानमस्तीति प्रमाणाध्यायसंगतिरिति भावः॥

[15]ननु [16]पूर्वपक्षिणा मन्त्राणामङ्गत्वसिद्धिमुपजीव्य हि तेषामदृष्टद्वारा विनियोगः शङ्कनीयः,

---

1. समाप्ता 2. अ. अनेकविधत्वसंभवे 3. तेषां चेति 4. म. धर्मेति नास्ति 5. अत इति नास्ति 6. यागनामत्वे च 7. प्रामाण्यविशेषेऽपि 8. म. अत्रेत्यधिकम् 9. अ. कारणं वक्तव्यं न पश्यामः 10. बोधनेऽपि 11. तेषामिति नास्ति 12. धर्मत्वसिद्धिः 13. उपकारकतया 14. ०कल्पनया 15. अ. ननु इति नास्ति 16. पूर्वपक्षेण

क्रमानायेदानीमर्थविशेषश्चिन्त्यते— एतेषां च क्रमप्रकरणाभ्यां क्रत्वङ्गत्वं भवत् किं दृष्टेनैवार्थप्रकाशनेन भवति किं वोच्चारणेनादृष्टं कुर्वतामिति । तत्र—

यदि दृष्टार्थतैव स्यान्मन्त्राम्नानमनर्थकम् ।
प्रत्यायनाददृष्टं चेत्तदुच्चारणतो वरम् ॥

---

तर्हि येषां मन्त्राणां तदर्थशास्त्रमस्ति 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इत्यादि, तेषां ततोऽङ्गत्वसिद्धिरस्तु; येषां तु नास्ति 'बर्हिर्देवसदनं दामि' इत्यादीनां तेषां कुतस्तत्सिद्धिः? न हि तेषां बर्हिर्लवनप्रकाशनसामर्थ्यादिरूपेणाङ्गेन[1] बर्हिर्लवनादिषु [2]विनियोगादङ्गत्वसिद्धिः, पूर्वपक्षिणा मन्त्राणामुच्चारणमात्रेणादृष्टद्वारा विनियोगः, नार्थप्रत्यायनद्वारेति वदता वक्तुं शक्यत्याशङ्कायामाह— क्रमप्रकरणाभ्यामिति । ये प्रकृतौ पठिता मन्त्राः तेषां प्रकरणेन तदङ्गतासिद्धिः । विकृतौ पठितानां तु [3]तत्संनिधिलक्षणेन क्रमेण क्लृप्तोपकारतयाऽतिदेशतः प्रथमप्राप्तैः प्राकृताङ्गैः निराकाङ्क्षाणां विकृतीनामङ्गाकाङ्क्षालक्षणप्रकरणाभावात् । एवं च येषां तदर्थशास्त्रमस्ति प्रधानादिमन्त्राणां तेषां प्रधानाद्यनुष्ठानसमयेषु तत्तदङ्गतयोच्चारणम् । येषां तु तन्नास्ति तेषां तु[4] साक्षात्प्रधानाङ्गतया यथापाठमुच्चारणमिति विशेष इत्याशयः ॥

**अर्थप्रकाशनेनेति** । इदं जपमन्त्रव्यतिरिक्तमन्त्रविषयम्, जपश्च कर्मसंयुक्त इति द्वादशाध्यायाधिकरणे जपमन्त्राणामदृष्टार्थताया वक्ष्यमाणत्वात् । सर्वमन्त्रविषयं वा, वैष्णवीमनूच्य वाग्यतस्येत्यादिभिर्जपे विनियुक्तानामृचामन्यत्र करणमन्त्रतयाऽपि विनियोगसत्त्वेन तत्रार्थप्रकाशनोपकारसत्त्वात् । **उच्चारणेनेति** । ननु क्रमप्रकरणाभ्यां मन्त्राणामेवाङ्गत्वमवगतम्; तदुच्चारणं कुतो लभ्यते? न च पुरुषः स्वव्यापारे नियोक्तव्यः, न मन्त्रस्तथेति तदुच्चारणमर्थाल्लभ्यत इति वाच्यम्; उच्चारणमूलभूतक्रमिक[5]वर्णावलिध्यानावश्यंभावेन तस्यैव पुरुषव्यापारत्वोपपत्तेरिति चेदुच्यते— 'उच्चैरृचा क्रियते उपांशु यजुषा उच्चैः साम्ना' इत्याद्युच्चारणगतो[6]पांशुत्वादिसामर्थ्यादुच्चारणविधिराक्षिप्यते । [7]'शतं हि मा इत्याह' [8]इति तदर्थशास्त्रेषु [9]आहेत्युच्चारणानुवादरूपाणि लिङ्गानि दृश्यन्ते । पूर्वपक्षमाह— **तत्रेति** । यदि मन्त्राणामर्थप्रत्ययरूपदृष्टार्थतामात्रं स्यात्तदा तेषामाम्नानमनर्थकं स्यात्, [10]ध्यानोपदेष्टृवचनकल्पसूत्रैरपि तत्सिद्धेः । अर्थप्रत्यायनान्मन्त्रैरेवानुष्ठेयार्थप्रत्ययः संपादनीय इत्युपायनियमाददृष्टमपि कल्प्यते चेत् [11]'तर्हि पश्चादप्यवश्यकल्पनीयमदृष्ट-

---

1. लिङ्गेन 2. विनियोगात्तस्तदङ्गत्वसिद्धिः 3. अ. तदिति नास्ति 4. तु इति नास्ति 5. क. पदावलि 6. अ. उपांशुत्वादिविधिसामर्थ्यात् 7 शतं हीत्यतः पूर्वं वाक्यादौ तथैव इत्यधिकः पाठः । 8. इत्यादि 9. अहेत्युच्चारणानुवादरूपाणि 10. ध्यानोपद्रष्टृवाचक० 11. तर्हीति नास्ति

**शक्यते ह्युपायान्तरेणापि प्रयोगवेलायामर्थप्रकाशनम् । तद्यदि तावन्मात्रमेव कार्यं मन्त्राणां स्यात् , तन्नित्यवदाम्नानमनर्थकं स्यात् । अथ तु मन्त्रप्रत्यायनाददृष्टं कल्प्यते ततो यद्दूरमपि गत्वा कल्प्यमदृष्टं तदुच्चारणादेव कल्पयितुं युक्तम् । तद्धि पुरुषव्यापारगोचरः । प्रत्यायनं तु तस्मिन्ननुष्ठिते स्वयमेव भवति । स्वव्यापारे च पुरुषो नियुज्यते । यत्र च नियुज्यते, तत्र फलापेक्षा । तेन याऽवश्यंभाविन्यदृष्टकल्पना सा तत्रैव युक्ता, न तु तस्यार्थप्रत्यायनार्थत्वम् । प्रत्यायनं त्वदृष्टार्थमिति युक्तम् । तस्माददृष्टार्था मन्त्राः । तथा च**

---

मादावुच्चारणादेव कल्प्यताम्; किं कल्पनाद्वयेनेत्यर्थः । श्लोकं व्याचष्टे— **शक्यते हीति ।** नन्वर्थप्रत्यये [1]ध्यानवन्मन्त्राणामप्युपायत्वमस्तीत्येतदर्थं तथाऽऽम्नानं स्यादित्याशङ्क्य विशेषयति— [2]**तन्नित्यवदाम्नानमिति ।** पाक्षिकोपायत्वे तेषां नित्यमाम्नानं व्यर्थं स्यादिति [3]भावः । नित्यवदिति स्वार्थ एव वतिः । अन्येषां नित्यानां प्रयाजादीनामिव तेषां नित्याम्नानमित्यर्थे वा वतिः । तदुच्चारणतो वरमिति वरशब्देन विवक्षितमर्थमाह— **तद्धि पुरुषेति ।** उच्चारणस्य पुरुषव्यापारगोचरत्वमुक्त्वा [4]तदानुषङ्गिकस्योपायनियमस्यातथात्वमाह— **प्रत्यायनं त्विति ।** अस्तूच्चारणमेव [5]पुरुषव्यापारः । तत एव फलकल्पने किमायातमित्याकाङ्क्षायामाह— **स्वव्यापारे चेति । न तु तस्यार्थप्रत्यायनार्थत्वमिति ।** न तु नियतोपायतया अर्थप्रत्यय[6]संपादनार्थत्वमित्यर्थः । अर्थप्रत्यायनार्थत्वाभावेऽन्यदप्यनुकूलं भवति इत्याह— **तथा चेति ।** तदर्थशास्त्र[7]वाक्यनियमबुद्धशास्त्रा[8]विद्यमानवचनाचेतनार्थनिबन्धनार्थविप्रतिषेधस्वाध्यायपदवचना[9]विज्ञेयाः । नित्यसंयोगान्मन्त्रानर्थक्यमिति पूर्वपक्षसूत्रेण मन्त्राणामर्थप्रत्ययद्वारोपकारत्वाभावे तदर्थशास्त्रादयो नव हेतव उक्ताः । [10]तदर्थशास्त्रादिति हेतोरयमर्थः— मन्त्राणां विनियोजकानि शास्त्राणि दृश्यन्ते । यथा 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति 'इमामगृभ्णन्' इति मन्त्रस्य विनियोजकं शास्त्रम् । तथा— 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् , गायत्रेण छन्दसाऽऽददेऽङ्गिरस्वदभ्रिरसि नारिरसि' इत्यादीनां चतुर्णां मन्त्राणां विनियोजकं शास्त्रम् 'तां चतुर्भिरभ्रिमादत्ते' इति । तथा 'उरु प्रथस्व' इति मन्त्रस्य विनियोजकं शास्त्रम् 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति । यदि मन्त्राणामर्थप्रकाशनेन विनियोगः स्यात् तदा यमनुष्ठेयमर्थं यो मन्त्रः प्रकाशयति तस्य तत्तत्प्रकाशनेन [11]तत्र तत्र विनियोग इत्यर्थप्रकाशनसामर्थ्यरूपाल्लिङ्गादेव विनियोगावगतिसंभवात्तदर्थशास्त्राण्यनपेक्षितानि स्युः । अतस्तदर्थशास्त्रदर्शनाज्ज्ञायते— नूनमेषामर्थप्रकाशनसामर्थ्यसद्भावेऽपि

---

1. ध्यानादिवन्म० 2. नित्यवदिति; नित्यवदाम्नानमिति 3. अर्थः 4. क. तदेकगतार्थस्य प्रत्ययानुकूलव्यापारत्वरूपस्योपायनियमस्यातथात्वमाह 5. पुरुषव्यापारगोचरः 6. संवादनार्थत्वमित्यर्थः 7. वाच्य 8. शास्त्रविद्यमान 9. विज्ञेयार्थो 10. तत्रेत्यधिकम् 11. मे. तत्र

शास्त्रानुपपत्तिः ; इतरथा परिसंख्याद्याश्रयणे क्लेशः स्यादिति ॥

अत्राभिधीयते—

यस्य दृष्टं न लभ्येत स्यात्तस्यादृष्टकल्पना ।
अनुष्ठेयस्मृतेश्चेह मन्त्रोच्चारणमर्थवत् ॥
स्मरणं च प्रयोगार्थं प्रयोगाच्च फलोदयः ।
एवं दृष्टार्थतालाभान्नादृष्टपरिकल्पना ॥

---

स्वयमेव [1]विनियोजकशक्तिर्नास्ति इति । यथा— नीलकाचाद्यावृतचक्षुषां चक्षुःसत्त्वेऽप्यन्येन नीयमानत्वदर्शनात् ज्ञायते स्वयमेव मार्गं दृष्ट्वा गन्तुं सामर्थ्यं नास्तीति । तथा चार्थप्रकाशनेनोपकारकत्वे स्वयमेव स्वविनियोजकमपि स्यादिति [2]मन्त्रा नार्थप्रकाशनेनोपकुर्वन्तीति निश्चीयत इति । एवं तदर्थशास्त्रहेतुवत्[3]वाक्यनियमादिहेतूनामप्यर्थो[4] भाष्यादिषु द्रष्टव्यः । विस्तरभयान्नेह लिख्यन्ते ॥

नन्विमामगृभ्णन्निति[5] मन्त्रस्य लिङ्गादेव विनियोगसिद्धावपि रशनाग्रहणत्वाविशेषादग्निचयनकर्तव्ये गर्दभरशनाग्रहणेऽपि विनियोगप्रसक्तौ [6]तत्परिवर्जनार्थम् 'अश्वाभिधानीमादत्ते' इति शास्त्रम् । अभ्यादानमन्त्राणां चतुःसंख्यागुणप्राप्त्यर्थं 'चतुर्भिरभ्रिमादत्ते' इति शास्त्रम् । 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति शास्त्रमर्थवादरूपम् । एवं मन्त्राणां लैङ्गिकविनियोगेऽपि तदर्थशास्त्राणामर्थवत्ताऽस्तीत्याशङ्क्याह— इतरथेति । परिसंख्या तावदश्वरशनाग्रहणरूपस्वार्थत्यागः, [7]गर्दभरशनाग्रहणपरिवर्जनरूपपरार्थग्रहणम्, गर्दभरशनाग्रहणे लिङ्गात्प्राप्तस्य मन्त्रस्य [8]बाध इति [9]त्रिदोषदुष्टा । अभ्यादानमन्त्रेषु [10]प्रचयशिष्टचतुःसंख्या न तदर्थशास्त्रापेक्षा । उरु प्रथस्वेत्यर्थवादो भवन् 'उरुप्रथस्वोरुते यज्ञपतिः प्रथताम्' इति[11] [12]मन्त्रविधिविधेयमन्त्रस्तुतिद्वारा अर्थवादो भवेत, 'यज्ञपतिमेव तत्प्रजया पशुभिः प्रथयति' इति मन्त्रलिङ्गानुसारिवाक्यशेषात् । न च ब्राह्मणाम्नात[13]मेतद्वाक्यं मन्त्रप्रदेशाम्नातम् । [14]अत्र विशेषो लिङ्गानुमितविधेः शेषो भवितुमर्हतीत्येवं मन्त्राणां लैङ्गिकविनियोगाभ्युपगमे दोषाः स्युः । अतस्तत्परिहाराय मन्त्रा नार्थप्रकाशनेनोपकुर्वन्ति ; किं तूच्चारणमात्रेणेति पूर्वपक्षे स्थिते सिद्धान्तमुपक्रमते— अत्रेति । [15]यस्य दृष्टमिति । दृष्टालाभ एवादृष्टं कल्पनीयम्, अदृष्टपक्षे तत्स्वरूपमुच्चारणे तज्जननशक्तिस्तस्य फलत्वं चेति त्रयं कल्पनीयमिति गौरवम् ।

---

1. अ. विनियोजनशक्तिः 2. अ. स्यादिति इत्येतदुत्तरं तदा स्वयमेव विना मन्त्रानर्थप्रकाशनेन इति पाठः 3. म. पाठ्य 4. अपीति नास्ति 5. रशनामृतस्येत्यधिकम् 6. तत्परिहारार्थं 7. गर्दभरशनाग्रहणरूपपरार्थग्रहणं 8. बाधश्च 9. त्रिदोषदुष्टे 10. ॰दृष्टचतुःसंख्या 11. इत्यादिः 12. अ. मन्त्रविधेः 13. ॰मितरवाक्यं 14. मन्त्रविशेषलिङ्गानुमितमन्त्रविधेः 15. यदि दृष्टमिति

यस्तु मन्त्रेणैव स्मर्तव्यमिति नियमः, तस्य न किंचिद्दृष्टमस्तीत्यदृष्टं कल्प्यते। मन्त्रोच्चारणस्य तु दृष्टेनैवार्थवत्त्वात्तत्रानुपपत्त्येकशरणमदृष्टकल्पनमनवकाशम्। तदर्थशास्त्रादयोऽपि गुणार्थार्थवादपरिसंख्यादिभिः परिहृताः॥

---

दृष्टपक्षे तस्य फलत्वमात्रं कल्पनीयम्, अन्यद्द्वयं प्रागेव सिद्धमिति लाघवमित्येवं विशेषसद्भावात्। अतोऽनुष्ठेयार्थप्रकाशनस्य प्रयोगार्थत्वात् प्रयोगस्याभ्युदयार्थत्वात् [1]अभ्युदयपर्यवसायि तद्दृष्टं फलमिति तस्मिन् लभ्यमाने नादृष्टं कल्पनीयमिति श्लोकार्थः। एवं सति मन्त्राम्नानानर्थक्यपरिहाराय नियमादृष्टकल्पनं प्रथमोपस्थितलाघवानुसारेण [2]पश्चादापतितमिति तत्कृतं फलमुखं गौरवं न दोषायेत्याह— **यस्त्विति**। एवं सति तदर्थशास्त्रादीनां का गतिरित्याकाङ्क्षायामाह— **तदर्थेति**। 'चतुर्भिरभ्रिमादत्ते' इति शास्त्रं[3] चतुर्मन्त्रसमुच्चयरूपगुणार्थम्। न च समुच्चयवाचिनश्च-शब्दादेरभावादेकैकेनाप्यर्थप्रकाशनसंभवात् तादर्थ्ये वस्तुतो ये चतुःसंख्याविशिष्टमन्त्राः तेषां विकल्पः सत्यपि 'चतुर्भिरभ्रिमादत्ते' इति [4]शास्त्रे न निवार्यः। अदृष्टार्थत्व एवैकैकेनादृष्टसिद्धौ मानाभावात् समुच्चयः सिध्येदिति वाच्यम्; क्रियाङ्गत्वेन चतुःसंख्याविधाने पश्चादरुणैकहायनीन्यायेन मन्त्रसंख्यान्वयतः[5] समुच्चयसिद्धेः। 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इत्यस्य मन्त्रविनियोग[6]विधिशेषत्वेनार्थवादत्वायोगेऽप्यत्रैव[7] विध्यन्तराप्राप्तप्रथनविधिरभ्युपेयते इति तच्छेषतयाऽर्थवादत्वं युक्तमेव यज्ञपतिप्रथनप्रकाशकमन्त्रयुक्तमिदं विधेयं प्रथनं प्रशस्तमिति। अश्वाभिधानीमादत्ते इति शास्त्रं प्रथममश्वगर्दभरशनासाधारणविनियोगे लिङ्गात्प्राप्ते सति पश्चाद्गर्दभरशनापरिवर्जनस्य शब्दवृत्त्या बोधकमित्येवमिह प्राप्तपरिसंख्या त्रिदोषा नाभ्युपगम्यते। किं तु लैङ्गिकविनियोगकल्पनात्प्रागेव शीघ्रप्रवृत्तेन प्रत्यक्षवचनेन प्रथमं मन्त्रस्याश्वरशनासंबन्धो बोध्यते। तेन मन्त्रे निराकाङ्क्षीकृते पश्चाल्लैङ्गिकविनियोगकल्पना न प्रवर्तत इति [8]अप्राप्तपरिसंख्याऽभ्युपेयत इत्येवं गुणार्थेन पुनःश्रुतिः। 'अर्थवादो वा परिसंख्या' इति सूत्रतद्भाष्यवार्तिकादिषु तदर्थशास्त्राणां गतिरुक्तेत्यर्थः। अधिकरणार्थमुपसंहरति— **तस्मादिति**। ननु 'तानि द्वैधं गुणप्रधानभूतानि' इति द्वितीयाध्यायाधिकरणेऽवहननपेषणादीन्यदृष्टार्थानीति पूर्वपक्षं कृत्वा दृष्टे फले संभवत्यदृष्टं न कल्पनीयमिति सिद्धान्तितम्। तेन गतार्थमिदमधिकरणं नारभ्यमिति चेदुच्यते। व्रीहीनवहन्तीत्यादिशास्त्राणामदृष्टार्थव्रीह्यादि[9]गुणावघातादिविधायकत्वे उद्धृतव्रीहयो लौकिका एव स्युः, पुरोडाशप्रकृतितया यागार्थमुपात्तानां व्रीहीणां स्वतन्त्रादृष्टान्तर[10]शेषत्वायोगात्। ततश्चावघातादिभ्यः किंचिददृष्टं, [11]ते व्रीह्यादिष्वेव [12]कर्तव्या इति नियमतोऽन्यददृष्टमिति [13]अदृष्टद्वयकल्पनागौरवप्रसङ्गान्मा भूदवघातादीनामदृष्टार्थत्वम्, मन्त्रोच्चार-

---

1 अभ्युदयस्य पर्यवसायि 2. पश्चादापततीति 3. शास्त्रमित्येतदुत्तरं तावत् इत्यधिकः पाठः 4. शास्त्रेण निवारणीयः 5. अन्वये 6 विशेषत्वेन 7. अत्रैवं 8. प्राप्तपरिसंख्या 9. क. गुणकावघातादि० 10. अ. विशेषत्वायोगात् 11. ते च 12 कर्तव्यमिति 13. अर्थ०

तस्मात्प्रकाशनेनैवं मन्त्राणामुपकारिता ।
उपायनियमादेव त्वदृष्टपरिकल्पनम् ॥

इति पदवाक्यप्रमाणपारावारपारीणमीमांसासाम्राज्यधुरंधरमहोपाध्यायविद्वद्वरश्रीमत्पार्थसारथिमिश्रप्रणीतायां शास्त्रदीपिकायां प्रथमाध्यायस्य
द्वितीयः पादः ॥

---

णस्य तु स्यात्। प्रकरणाद्यवगतस्य मन्त्राणां सामान्यतः प्रधानाङ्गत्वस्योच्चारणजन्यादृष्टद्वाराऽपि निर्वाहसंभवेनोच्चारणगुणभूतमन्त्रे नियमप्रयुक्तादृष्टान्तरकल्पनागौरवप्रसङ्गादित्यधिकाशङ्कया तदर्थशास्त्रादिमूलकाधिकशङ्कया च पूर्वपक्षोत्थानादगतार्थता ॥

इति श्रीमद्भरद्वाजकुलजलनिधिकौस्तुभ श्रीरङ्गराजाध्वरिसूनोरप्पयदीक्षितस्य कृतौ
शास्त्रदीपिकाव्याख्यायां मयूखावल्यां प्रथमाध्यायस्य
द्वितीयः पादः ॥



## प्रथमाध्याये तृतीयः पादः ॥

### ( स्मृतिपादः । )

स्मृतिप्रामाण्याधिकरणम् ॥ १ ॥

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥ अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥**

---

॥ जैमिनीयन्यायमाला ॥

अष्टकादिस्मृतेर्धर्मे न मात्वं मानताऽथ वा
निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता ॥ १ ॥

वैदिकैः स्मर्यमाणत्वात्संभाव्या वेदमूलता ।
विप्रकीर्णार्थसंक्षेपात्सार्थत्वादस्ति मानता ॥ २ ॥

न मा स्मार्ताष्टकाङ्गत्वाद्यां जना इति मन्त्रगीः ।
तत्र स्मृतेर्मूलवेदेऽनुमिते मात्वसंभवात् ॥ ३ ॥

---

कथंलक्षणो धर्म इत्येतदिह लक्षणार्थ इत्युक्तम् । तत्र प्रथमे पादे चोदनाप्रामाण्यं सिद्धम् । द्वितीये त्वर्थवादादेः । एवं कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम् । इदानीं पौरुषेयीषु

---

धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥

स्मृतिप्रामाण्यविचारस्य प्राभाकरोक्तसंगतिदूषणार्थमर्थवादाधिकरणात्तां स्वाभिमतां संगतिं स्मारयितुमध्यायार्थकथनपूर्वकं वृत्तमनुवदति— [1]कथंलक्षण इति । द्वितीये [2]त्वर्थवादादेरिति ;

---

1. क. कथंलक्षणक 2. तु इति नास्ति

स्मृतिष्वाचारेषु च वैदिकपरिगृहीतेषु चिन्ता। यद्यपि चोदनाप्रामाण्यमप्रामाण्येऽपि स्मृतीनां न विहन्यते तथाऽपि किंलक्षणो धर्म इति जिज्ञासाधिकारात्स्मृतिप्रामाण्यं लक्षणे संगतम् ॥

नन्वप्रामाण्ये स्मृतीनां वेदस्यापि तत्सापेक्षत्वादप्रामाण्यं स्यात्। 'यां जनाः प्रतिनन्दन्ति' इत्ययं मन्त्रो रात्रिदेवताककर्माङ्गत्वेन प्रतीयते। स्मार्ते च कर्मणि रात्रिर्देवतेति तदपेक्षस्य मन्त्रस्य तदप्रामाण्यादप्रामाण्यं स्यात्। तत्सामान्यादितरेषु तथात्वमिति सकलस्य

---

सिद्धमित्यनुषङ्गः। अर्थवादादेरपि महावाक्यरूपचोदनान्तर्गततया विध्युद्देशमात्ररूपचोदनाङ्गतया वा प्रथमपाद एव सिद्धं प्रामाण्यं धर्मप्रमित्युपयोगादिशङ्कानिराकरणेन द्वितीयपादे प्रतिष्ठापितमित्यर्थः। **एवं कृत्स्नस्येति**। नामधेयस्यापि चोदनान्तर्गतत्वात् प्रथमपाद एव प्रामाण्यं सिद्धम्। नामधेयपादे तु थमुप्रत्ययक्रोडीकृतनामधेयस्वरूपप्रकारविशेषव्युत्पादनमात्रमित्याशयेन कृत्स्नस्येत्युक्तम्। **वैदिकपरिगृहीतेष्विति** स्मृतीनामपि विशेषणम्। [1]प्रामाण्यविचारं स्वमते चोदनाप्रामाण्यसिद्ध्यर्थत्वाभावेऽपि संगमयितुं तदभावं सिद्धवत्करोति— **यद्यपीति**। तर्हि न प्रमाणाध्यायसंगतिः, द्वितीयसूत्रे चोदनाया एव प्रामाण्यप्रतिज्ञानादित्याशङ्कायामाह— **तथाऽपीति**। यद्यपि गुणविधिनामधेय[2]विचारवत् थमुप्रत्ययोपात्तप्रकारविशेषविचारोऽयं स्मृतिप्रामाण्यपर्यवसायी। वेदस्य प्रत्यक्षावगतिरेव धर्मप्रमित्युपयोगे प्रकारो न भवति। किं तु स्मृतिलिङ्गकतत्समानविषयवेदानुमानजन्यानुमितिरपीति, प्रकारविशेषव्युत्पादनेन स्मृतीनामपि वेदमूलकतया प्रामाण्यसिद्धेः। अनेन रूपेण स्मृतिप्रामाण्यविचारसंगतेः कथंलक्षणक इत्येतदिह लक्षणार्थ इत्युक्तमिति प्रथमवाक्येन सूचितत्वाच्च। तथाऽपि थमुप्रत्ययप्रकृतिभूतेन किमंशेन प्रथमसूत्रे विचार्यत्वेन प्रतिज्ञाते धर्मे यद्यावच्छ [illegible] संभवति तस्य सर्वस्य प्रामाण्यप्रतिज्ञानपरताया अपि चोदनासूत्रस्य दर्शितत्वात्। प्रधानभूतचोदनाप्रामाण्यप्रतिज्ञानेन तदवगतिविशेषोपायतया तदङ्गभूतस्मृतिप्रामाण्यप्रतिज्ञानस्यार्थसिद्धत्वात् तद्विचारस्य चोदनाप्रामाण्यप्रकारविशेषनिरूपणानुषाङ्गिकत्वमनपेक्ष्य साक्षादपि संगतिः संभवतीति दर्शयितुमिदमुक्तम् ॥

प्राभाकरास्तु— द्वितीयसूत्रे विध्युद्देशरूपाया एव चोदनायाः प्रामाण्यं प्रतिज्ञातम्। अतस्तत्प्रामाण्यविचार एव प्रथमाध्यायार्थ इत्यध्यायसंगतिसिद्धये सर्वेषां प्रथमाध्यायाधिकरणानां विध्युद्देशाप्रामाण्यपर्यन्ताः पूर्वपक्षा वर्णनीया इति मन्यमाना इहाधिकरणे पूर्वपक्षमित्थं कल्पयन्ति। 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतिम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा' इति मन्त्रः स्मार्ते अष्टकाकर्मणि विनियुक्तः। अतः पौरुषेयवाक्यसापेक्षत्वाद्वेदस्याप्रामाण्यमिति; तन्मतमाशङ्कते— **नन्विति**। स्मृतेरप्रामाण्यपूर्वपक्षे वैदिकमन्त्रस्य स्मार्तकर्माङ्गत्वमेव न सिध्यति;

---

1. स्मृतिप्रामाण्यविचारं 2. नामधेयविधिविचारवत्

पितुरिति। दाशभर्तुर्धीवरपतेः पितुर्नियोगान्निदेशादिहास्मिन्नदीस्रोतसि नदीप्रवाहे नावं तरणिम्। 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः। तारयामि इत्युक्तप्रकारां सुदृशो दाशकन्याया वाचं श्रुत्वा प्रहृष्यन् तुष्यन्नुच्चैःश्रवा नाम दाशकन्यायाः पिता तस्य सकाशं समीपमगच्छत्। गमेर्लङ्। 'इषुगमियमां छः' इति छादेशः॥ ५९॥

स सत्कृतः कस्य कृते त्वयेयं
परिष्कृता भूरिति तेन पृष्टः।
कृताञ्जलिं सारथिमन्तिकस्थं
भ्रूसंज्ञया भूपतिरादिदेश॥ ६०॥

स इति। स भूपतिः राजा सत्कृतः पूजितः सन् कस्य कृते किमर्थम्। कृत इत्येतत्तादर्थ्ये अव्ययम्। त्वया इयं भूः परिष्कृताऽलंकृता। भवान् किमर्थमिहागत इत्यर्थः। इत्यनेन प्रकारेण तेनोच्चैःश्रवसा पृष्टः सन् कृताञ्जलिं बद्धकरपुटमन्तिकस्थं समीपवर्तिनं सारथिं सूतं भ्रूसंज्ञया भ्रूसूचनेनादिदेशादिष्टवान्। वक्तुमिति शेषः। 'संज्ञा नाम्न्यर्कजायायां हस्ताद्यैश्चार्थसूचने' इति रत्नमालायाम्॥ ६०॥

स चाब्रवीद्दाशपते नृपोऽसौ
शरासने दाशरथेः समानः।
दिष्ट्या सुतां कामयते त्वदीयां
कर्तुं द्वितीयां कुरुराजलक्ष्म्याः॥ ६१॥

स इति। स च सारथिश्चाब्रवीदुक्तवान्। किमित्याह— हे दाशपते हे धीवरस्वामिन्, शरासने धनुषि विषये दशरथस्यापत्यं पुमान् दाशरथिः। 'अत इञ्' इति इञ्। तस्य दाशरथेः रामचन्द्रस्य समानस्तुल्योऽसौ नृपो राजा शंतनुः। त्वदीयां त्वत्संबन्धिनीं सुतां दुहितरं कुरुराजलक्ष्म्याः द्वितीयां सपत्नीं कर्तुं स्वयं परिणेतुमित्यर्थः। दिष्ट्या भाग्येन 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यव्ययेष्वमरः। कामयते प्रार्थयते। 'कमेर्णिङ्' इति णिङ्॥ ६१॥

प्रीतः स सम्राजमुवाच राजन्
यदाह सूतः क्रियतां तथा तत्।

अस्यां तु जातः सुत एव भूमे-

[1]रनन्तरं ते भवतु प्रशास्ता ॥ ६२ ॥

प्रीत इति । स दाशपतिः प्रीतः सन् सम्राजं मण्डलेश्वरम् । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । उवाचोक्तवान् । 'लिट्यभ्यासस्य' इति संप्रसारणम् । किमित्याह— हे राजन्! सूतः सारथिः । 'सूतः क्षत्ता च सारथिः' इत्यमरः । यद्वच आह ब्रूते तद्वचस्तथा क्रियताम् । किं तु अस्यां कन्यायां जातः सुत एव ते तवानन्तरम् । संबन्धसामान्यविवक्षायां षष्ठी, 'तस्यानन्तरम्' इति भाष्ये दर्शनात् । अवधित्वविवक्षायां तु पञ्चमी । तथा च प्रयोगः— 'पुराणपत्रापगमादनन्तरम्' इति । अनन्तर इति वा पाठः । भूमेर्धरित्र्याः प्रशास्ता रक्षिता । कर्मणि षष्ठी । भवतु भूयात् । त्वदनन्तरं मत्कन्यासुत एव राजा भवतु इत्यर्थः ॥

[2]कामं ततो दुष्करमस्य वाक्यं

[3]मत्वा नदीसूनुहितो महीशः ।

तूष्णीक एवात्मपुरीमयासी-

दादाय चित्तेन स दाशकन्याम् ॥ ६३ ॥

काममिति । ततो दाशवाक्यानन्तरं नदीसूनुहितः गाङ्गेयप्रियः महीशो राजा अस्य दाशभर्तुर्वाक्यं वचनं काममत्यर्थं दुष्करं कर्तुमशक्यम् । 'ईषद्दुःसुषु' इति खल्प्रत्ययः । मत्वा विचिन्त्य दाशकन्यां चित्तेन मनसा आदाय । तामेव ध्यायन्नित्यर्थः । तूष्णीकः तूष्णींशील एव । निरुत्तरः सन्नित्यर्थः । 'तूष्णींशीले कोमलोपश्च वक्तव्यः' इति कप्रत्ययो मकारलोपश्च । 'तूष्णींशीलस्तु तूष्णीकः' इत्यमरः । आत्मपुरीं हास्तिननगरमयासीद्ययौ । यातेर्लुङ् । यमरमेत्यादिना सगिटौ । ममात्यन्तप्रिये देवव्रते स्थितवति कथं दाशकन्यासुतं भूपतिं करिष्यामीति निरुत्तरः सन्नागतवानित्यर्थः ॥ ६३ ॥

दिने दिने दीप्तमनोभवास्त्रे-[4]

रापाण्डुतां प्राप्तवतः कृशस्य ।

श्रुत्वा पितुः सूतमुखादुदन्त-

माख्यत्सरित्सूनुरुपेत्य दाशम् ॥ ६४ ॥

---

1. अनन्तरस्ते 2. मत्वा 3. महा० 4. दीप्तमनोभवाग्ने-

**दिने दिन इति ।** दिने दिने प्रतिदिनं दीप्तमनोभवाबैः प्रज्वलितमदनबाणैः आपाण्डुतामधिकपाण्डुत्वं प्राप्तवतः प्राप्तस्य । दीप्तमनोभवाग्निरिति वा पाठः । अत एव कृशस्य कार्श्यावस्थायुक्तस्य पितुः शंतनोः उदन्तं वृत्तान्तं वार्ताप्रवृत्तिम् । 'वृत्तान्त उदन्तः स्यात्' इत्यमरः । सूतमुखात् सारथिमुखात् श्रुत्वा सरित्सूनुर्गाङ्गेयः दाशमुपेत्य गत्वा आख्यत् उक्तवान् । 'चक्षिङ् व्यक्तायां वाचि' इत्यस्माद्धातोर्लुङि 'चक्षिङः ख्याञ्' इति ख्याञादेशः । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः ॥ ६४ ॥

तातेन मे यां किल याचितस्त्वं
सा राज्यशुल्का कथिता कुमारी ।
तां देहि तत्सूनुमहं विधास्ये
वीतस्पृहोऽनन्तरमस्य भूपम् ॥ ६५ ॥

**तातेनेति ।** हे दाशपते ! मे तातेन पित्रा 'तातोऽनुकम्प्ये पितरि' इति रत्नमालायाम् । त्वं यां कन्यां याचितः अभीप्सितः त्वदीया कन्या याचिता । याचेर्दुहादिपाठादप्रधाने कर्मणि क्तः । सा कुमारी कन्या । 'वयसि प्रथमे' इति ङीप् । राज्यमेव शुल्कं कन्यामूल्यं जामात्रा देयं यस्याः सा राज्यशुल्का कथिता किल । 'शुल्कं घट्टादिदेयं स्याज्जामातुर्बन्धनेऽपि च' इति विश्वः । किलेति वार्तायाम् । 'वार्तासंभाव्ययोः किल' इत्यमरः । तां कुमारीं देहि प्रयच्छ । 'डुदाञ् दाने' इत्यस्माद्धातोर्लोटि 'घ्वसोरेत्' इत्येत्वाभ्यासलोपौ । अस्य शंतनोरनन्तरं वीतस्पृहो वीतवाञ्छः सन् तस्याः कुमार्याः सूनुं पुत्रं भूपं भूपतिं विधास्ये करिष्यामि । दधातेर्लृट् ॥ ६५ ॥

स विस्मितस्तं निजगाद भद्र
त्वया गुरुप्रीतिकृता [1]स्थिरेण ।
[2]सृष्टं सुतस्तेऽर्हति राज्यमेत-
त्तेनापि हीयेत ममायमर्थः ॥ ६६ ॥

**स इति ।** स दाशो विस्मितः साश्चर्यः सन् तं गाङ्गेयं निजगाद । किमित्याह— हे भद्र सौम्य । गुरुप्रीतिकृता पितृसंतोषकारिणा स्थिरेण सत्यप्रतिज्ञेन त्वया सृष्टं विसृष्टं राज्यं कर्म ते तव सुतः पुत्रोऽर्हति । प्राप्तुमर्हतीत्यर्थः । तेन त्वत्सुतेनाप्येतद्राज्यं हीयेत उज्झितं किम् ।

---

1. स्थितेन 2. त्यक्तं

संप्रश्ने लिङ् । ममायं कन्यासुतराज्यप्राप्तिरूपोऽर्थः प्रयोजनं हीयेत हीनो भवेत् । कर्मकर्तरि लिङ् ॥ ६६ ॥

अथापगासूनुरभाषतोच्चैः
शृण्वन्तु सर्वेऽपि मम प्रतिज्ञाम् ।
[1]यावन्मयेदं ध्रियते शरीरं
तावद्भविष्याम्यहमूर्ध्वरेताः ॥ ६७ ॥

अथेति । अथानन्तरं आपगासूनुः गङ्गापुत्रः उच्चैरभाषत उक्तवान् । किमित्याह— सर्वेऽपि समस्ता अपि देवा मुनयश्च मम प्रतिज्ञां शृण्वन्तु आकर्णयन्तु । 'श्रुवः शृ च' इति श्रुधातोः शृभावश्च । प्रतिज्ञाप्रकारमाह— यावदिति । मया इदं शरीरं यावत्कालं ध्रियते धार्यते । 'धृ धारणे' इत्यस्माद्धातोः कर्मणि लट् । ममेति पाठे मम संबन्धी इदं शरीरं यावद् ध्रियते अवतिष्ठते । 'धृङ् अवस्थाने' इत्यस्माद्धातोः कर्तरि लटि रूपम् । तावत्पर्यन्तमहं ऊर्ध्वगतं रेतो यस्य सः ऊर्ध्वरेता भविष्यामि । अद्यारभ्य यावज्जीवमहं ब्रह्मचारी भविष्यामीत्यर्थः । ततो मम सुताभावात्प्रयोजनं सुष्ठु जातमिति भावः ॥ ६७ ॥

लोकाः परे केचिदनात्मजानां
पुंसां न सन्तीति भणन्ति[2] सन्तः ।
शुश्रूषया मत्पितुरार्जितेन
द्रक्ष्यामि पुण्येन पुरस्कृतस्तान् ॥ ६८ ॥

लोका इति । केचित्सन्तः सज्जना अनात्मजानामपुत्रकाणां पुंसां परे लोकाः स्वर्गादयो न सन्ति न विद्यन्त इति भणन्ति कथयन्ति । 'भण शब्दे' इत्यस्माद्धातोर्लट् । वदन्तीति वा पाठः । 'नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः' इति भावः । अहं तु मम पितुर्जनकस्य शुश्रूषया सेवया आर्जितेन संपादितेन पुण्येन सुकृतेन पुरस्कृतः पूजितः अग्रतः कृतो वा । 'पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते' इत्यमरः । 'पुरोऽव्ययम्' इति गतिसंज्ञायां नमस्पुरसोरिति सत्वम् । तान् परलोकान् द्रक्ष्यामि आलोकयिष्यामि । गुरुशुश्रूषापुण्येन परलोकं साधयामीत्यर्थः ॥ ६८ ॥

---

1, यावन्मदीयं, यावन्ममेदं 2 वदन्ति

श्रुत्वा वचस्तद्भयविस्मयाभ्या-
माश्लिष्टचित्ता नभसोऽवकाशे ।
सहाप्सरोभिर्मुनिभिश्च देवा-
स्तं भीष्म भीष्मेति शशंसुरुच्चैः ॥ ६९ ॥

श्रुत्वेति । तत्पूर्वोक्तं वचः श्रुत्वा नभसि आकाशप्रदेशे भयविस्मयाभ्यां भयाश्चर्याभ्यामाश्लिष्टचित्ता आलिङ्गितहृदया देवा अप्सरोभिः स्वर्वेश्याभिः । 'स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः' इत्यमरः । मुनिभिश्च सह तं देवव्रतं भीष्म भीष्मेत्युच्चैः शशंसुः तुष्टुवुः । भीष्मेत्यत्र 'संभ्रमे द्वे भवत इति वक्तव्यम्' इति द्विरुक्तिः । बिभ्यत्यस्मादिति भीष्मः 'भियः षुग्वा' इत्यौणादिको मप्रत्ययः षुगागमश्च । 'भीमादयोऽपादाने' इत्यपादाने साधुः । 'भीषणे त्रिषु । भीष्मः स्यादुद्रगाङ्गेययोस्तु ना' इति रत्नमालायाम् ॥ ६९ ॥

आख्यामसौ भीष्म इति प्रतीता-
मवाप्य तेभ्यः सह पुष्पवृष्ट्या ।
दाशेन दत्तां मुदितेन काली-
मादाय पार्श्वं पितुराससाद ॥ ७० ॥

आख्याविति । असौ देवव्रतस्तु तेभ्यः सकाशात् पुष्पवृष्ट्या सह प्रथितां प्रख्यातां इत्याख्यां अभिधानम् । 'आख्याह्वे अभिधानं च' इत्यमरः । अवाप्य प्राप्य मुदितेन हृष्टेन दत्तां कालीं कालीनामधेयां कन्यामादाय गृहीत्वा पितुः पार्श्वं समीपं आससाद प्राप ॥ ७० ॥

[1]अथागतं वीक्ष्य पतिः कुरूणां
कृतप्रणामं परिरभ्य दोर्भ्याम् ।
मन्दारमालामदिरासुगन्धा-
वाघ्राय मूर्ध्न्यात्मजमाबभाषे ॥ ७१ ॥

1. तथाविधं

अथेति । अथानन्तरं कुरूणां निवासः कुरवो जनपदाः । 'तस्य निवासः' इत्यण् । 'जनपदे लुप्' इति लुप् । तेषां पतिः शंतनुः । कृतप्रणामं कृतनमस्कारं आगतमात्मजं वीक्ष्य दृष्ट्वा दोर्भ्यां कराभ्यां परिरभ्य आलिङ्ग्य मन्दारमालामदिरासुगन्धौ सुरमुक्तकल्पवृक्षकुसुममाल्यमकरन्दसुरभौ। 'गन्धस्य' इति समासान्त इकारः । मूर्ध्नि शिरसि आघ्राय घ्राणं कृत्वा बभाषे जगाद ॥ ७१ ॥

**भजन्ति पुत्राः पितरं गुणैः स्वै-**
**स्त्वया कृतं को भुवनेषु कुर्यात् ।**
**प्रीतोऽस्मि ते वत्स वरं ददामि**
**नाकाङ्क्षितो मृत्युरुपैष्यति त्वाम् ॥ ७२ ॥**

भजन्ति इति । लोके पुत्राः स्वैः आत्मीयैर्गुणैः गुरुशुश्रूषादिभिः पितरं भजन्ति सेवन्ते । त्वया कृतं विहितं कार्यमित्यर्थः । भुवनेषु स्वर्गमर्त्यपातालेषु को नरः कुर्यात् । न कोऽपि कुर्यादित्यर्थः । हे वत्स ! पुत्र प्रीतोऽस्मि । ते तुभ्यं वरं ददामि प्रयच्छामि । वरदानप्रकारमेवाह— अकाङ्क्षितः अनीप्सितः मृत्युरन्तकः त्वां नोपैष्यति न प्राप्स्यति । त्वया काङ्क्षितश्चेदुपैष्यति । नो चेन्नैवैष्यतीति भावः । एतेनेच्छामरणमुक्तम् ॥ ७२ ॥

**महाकुलीनत्वमनिन्दनीयै-**
**रङ्गैर्निजैरेव निवेदयन्त्याः ।**
**पृष्टः कुमार्याः प्रभवं नृपेण**
**दाशः सदस्यागतवानवादीत् ॥ ७३ ॥**

महाकुलीनत्वमिति । अनिन्दनीयैः अगर्ह्यैः अनवद्यैरित्यर्थः । निजैः स्वकीयैः अङ्गैरवयवैरेव साधनैः महाकुले भवा महाकुलीना । 'महाकुलादञ्खञौ' इत्यत्रान्यतरस्यामिति ग्रहणानुवृत्तेः खप्रत्ययः । तस्या भावस्तत्त्वं महाकुलीनत्वम् । आभिजात्यमित्यर्थः । निवेदयन्त्याः सूचयन्त्याः कुमार्याः प्रभवं कारणं उत्पत्तिमित्यर्थः । नृपेण राज्ञा पृष्टः याचितः सन् दाशः सदसि सभायामागतवान् अवादीत् उक्तवान् । वदेर्लुङि वदव्रजेत्यादिना वृद्धिः ॥ ७३ ॥

**पुरा वसुश्चेदिपतिः कदाचि-**
**द्विमानमारुह्य महेन्द्रदत्तम् ।**

चरन्दिवि स्फीतसुधाधरस्य

सस्मार कामी गिरिकामुखेन्दोः ॥ ७४ ॥

पुरेति । पुरा पूर्वं वसुः वसुनामा चेदीनां देशविशेषाणां पतिरधिपः कदाचित् जातु महेन्द्रदत्तं इन्द्रदत्तं विमानं व्योमयानं आरुह्य । 'व्योमयानं विमानोऽस्त्री' इत्यमरः । दिवि आकाशे चरन् भ्रमन् कामी कामुकः सन् स्फीता प्रवृद्धा । 'स्फायः स्फी निष्ठायाम् इति' स्फी इत्ययमादेशः । सुधा अमृतं तद्वदधरं यस्य तस्य । गिरिका नाम स्वप्रिया तस्या मुखेन्दोः मुखचन्द्रस्य । 'अधीगर्थ' इति कर्मणि षष्ठी । सस्मार स्मृतवान् । इन्दुरपि स्फीतसुधाधरः प्रवृद्धामृतधारी भवति ॥ ७४ ॥

स्मरातुरस्य च्युतमस्य बीजं

कलिन्दजायाः पतितं पयःसु ।

निपीय गर्भिण्यभवत्सुरस्त्री

शापान्मुनेः काचन मत्स्यरूपा ॥ ७५ ॥

स्मरातुरस्येति । स्मरातुरस्य कामातुरस्य अस्य वसोः संबन्धि च्युतं स्रुतं अत एव कलिन्दजाया यमुनायाः पयःसु जलेषु पतितं वीर्यं रेतः । 'वीर्यं तेजसि रेतसि' इत्यमरः । निपीय पीत्वा । निपीयेति पीङो रूपम्; पिबतेः 'न ल्यपि' इतीत्वप्रतिषेधात् निपायेति स्यात् । मुनेः कस्यचिन्महर्षेः शापात् मत्स्यरूपा मीनरूपा काचन काचित्सुरस्त्री सुराङ्गना गर्भिणी अन्तर्वत्नी अभवत् । 'अन्तर्वत्नी तु गर्भिणी' इत्यमरः ॥ ७५ ॥

तस्या हृतायाः पयसो मदीयै-

रानायिभिः शस्त्रविपाटितायाः ।

गर्भस्थितौ स्त्रीपुरुषावुपात्तौ

शुक्तौ मणी शुद्धगुणाविवोभौ ॥ ७६ ॥

तस्या इति । मदीयैः मत्संबन्धिभिः । 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' । 'प्रत्ययोत्तरपदयोश्च' इति मादेशः । आनायो जालं एषामस्तीति आनायिनः जालिकाः । 'आनायः पुंसि जालं स्यात्' इत्यमरः । तैः पयसः यमुनाजलात् हृताया आनीतायाः शस्त्रेण विपाटितायाः

विदारितायास्तस्याः मत्स्यरूपायाः। शुक्तौ गर्भस्थितौ शुद्धगुणौ स्वच्छगुणौ स्वच्छरूपौ निर्दोषे इत्यर्थः। 'गुणः प्रधानरूपादौ' इति विश्वः। मणी मुक्ताफले इव। 'रत्नं मणिद्वये रश्मिजातौ मुक्तादिकेऽपि च' इत्यमरः। उपात्तौ स्वीकृतौ। मयेति शेषः ॥ ७६ ॥

**अदर्शयं तौ वसवे नृपाय**
**सविस्मयं मात्स्य इति प्रतीतम् ।**
**पुमांसमादाय कुमारमेनां**
**कन्यामदान्मे कमनीयरूपाम् ॥ ७७ ॥**

अदर्शयमिति। तौ स्त्रीपुरुषौ कर्मभूतौ वसवे नृपाय राज्ञे क्रियाग्रहणाच्चतुर्थी। सविस्मयं साश्चर्यं यथा भवति तथा अदर्शयम्। दर्शितवानभवम्। दृशेर्ण्यन्ताल्लङ्। स वसुः मत्स्यस्यापत्यं पुमान् मात्स्य इति प्रथितं प्रसिद्धम्। अव्ययेनाप्यभिहिते न कर्मणि कर्मविभक्तिरिति मात्स्यशब्दात् द्वितीया न भवति— इतिशब्देनाभिहितत्वात्। कुमारं बालं पुमांसं स्वयं आदाय गृहीत्वा कमनीयरूपां सुन्दरमूर्तामेनां कन्यां मे मह्यं अदात् दत्तवान्। ददातेर्लुङ् ॥ ७७ ॥

**अथाभिजातां दिवसे शुभंयौ**
**स्वीकृत्य कालीं गिरिजामिवेशः ।**
**राजन्यवर्यो रमयन्विदग्धा-**
**मल्पेतरं कालमसावनैषीत् ॥ ७८ ॥**

अथेति। असौ शंतनुः शुभंयौ शुभान्विते। 'अहंशुभमोर्युस्' इति युस्प्रत्ययः। 'शुभंयुश्च शुभान्वितः' इत्यमरः। दिवसे दिने अभिजातां कुलजां 'अभिजातस्तु कुलजे बुधे' इत्यमरः। कालीं दाशकन्यां ईशः शिवः गिरिजां पार्वतीमिव। 'गिरिजा मेनकात्मजा' इत्यमरः। स्वीकृत्य विवाह्य विदग्धां प्रौढां रमयन् क्रीडयन् अल्पेतरं अधिकं कालं समयम् 'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति विश्वः। अनैषीत् नीतवान्। नयतेर्लुङ्। सिचि वृद्धिः ॥ ७८ ॥

**चित्राङ्गदेनाहृतसंभवेन**
**विचित्रवीर्येण यवीयसा च ।**




KUMARASAMBHAVACHAMPU is one of the four fine works of the illustrious Patron of Sanskrit learning and literature King Serfoji II, known in Sanskrit literature as Maharaja Sarabhoji who ruled over Tanjore from 1800–1832 A. D. During his reign he made Tanjore the centre of attraction for all *Savants* in Sanskrit, Tamil and Mahratti. Himself a good scholar in Sanskrit and Mahratti, he attracted to his court a number of learned pandits and liberally patronised them by grants of land and other rich rewards. His name is immortalised by the Tanjore Sarasvati Mahal Library which he founded and which is named after him. This Library is one of the most valuable Libraries in the whole of India and has been greatly appreciated by all scholars Oriental as well as Occidental. It contains several rare, precious, and hitherto unpublished works in all branches of Sanskrit learning and one such work is this *Kumarasambhavachampu* composed by the Maharaja himself. It closely follows the Kumarasambhava of the renowned Kalidasa and its diction often reminds us of the said Kavya.

We have brought out this edition with the help of two Manuscripts—one from the Tanjore Sarasvati Mahal Library and the other from the Sringeri Mutt Library. Our thanks are due to Vidyasagara Vidyavacaspati Prof. P. P. Subrahmanya Sastri M.A., for his fine Foreword and to Pandit S. Subrahmanya Sastri of Tanjore, now at Adyar, our collaborator in all Sanskrit publications, for having kindly gone through the proofs.

Sri Sankaragurukulam
Srirangam.

*T. K. Balasubrahmanyam.*

# FOREWORD

BY

*Vidyasagara Vidyavacaspati P. P. Subrahmanya Sastri, B. A. (Oxon), M. A. (Madras), Professor of Sanskrit, Presidency College, Madras.*

From the Upanishadic age onwards, many Hindu Kings belonging to the Warrior caste have been not only great patrons of learning and art but have been themselves learned men also. And some of them have also been distinguished authors as well.

Some modern scholars, notably Macdonell, think that these kingly authors must have had their works written for them—a gratuitous assumption. Even today in comparatively modern times, we know of not a few Kings of Travancore and Cochin who were not only great Kings but greater writers and authors of works of established reputation.

To this class of author-kings belongs King Serfojee II who ruled Tanjore from 1800 to 1832 A. D. King Serfojee II deserves in full the gratitude of the Oriental world as he it was who organised the famous Saraswati Mahal Palace Library at Tanjore, by ordering not only the copying of many valuable manuscripts but also by spending his valuable time and financial resources in buying up as many manuscripts as were available for sale during his pilgrimage to Benares. It is in recognition of this unparallelled munificence that the Royal Library at Tanjore, which is surely one of the richest and most costly libraries for Oriental Manuscripts, is justly called even today the Tanjore Maharaja Serfojee Saraswati Mahal Palace Library.

King Serfojee had many learned sabhas under his patronage and patronised as many as 30 erudite scholars in these sabhas.* There are at least four Sanskrit works to his credit, still preserved in the Tanjore Library—Smritisarasamuccaya,

---

* For details see pp. 40-41 of the "Guide to the Tanjore Palace Library" by Professor P. P. S, Sastri. Presidency College, Madras, 1934.

Smritisangraha, Mudraraksasacchaya and Kumarasambhavacampu. Of these the last, Kumarasambhavacampu is *par excellence* his best work. The work is written in an easy, flowing and elegant style and recalls to mind famous expressions and ideas contained in Kalidasa's Kumarasambhava. The Royal author is conscious of the merits of Bhojadeva's Ramayanacampu as a standard campu work and follows in Bhojadeva's footsteps with an ease and grace all his own.

The theme of the work and the excellent and easy flow of expression and ideas which characterise the work, contribute to make it as a fit one to be placed in the hands of those who are beginning to make their acquaintance with Classical Sanskrit.

Presidency College,<br>
Madras, 16—8—40.

*P. P. Subrahmanya Sastri.*

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

# INTRODUCTION.

Royal patronage in a generous and discerning measure has always been one of the important causes for the promotion and expansion of Sanskrit language and Literature in India. The Seventeenth and Eighteenth centuries of our era were marked in South India by the composition of numerous works in Sanskrit, representative of all branches of learning, thanks to uninterrupted patronage learning and wit enjoyed at the munificent hands of the Mahratha rules of the Tanjore Kingdom.

Among the galaxy of poets who adorned the court of King Tulaja (alias Tukkoji, 1729-1735) Ghanasyama Pandita was easily one of the brightest stars in the Literary firmament. Besides being a minister to King Tulaja, administering to his political and economic wants, he was also successfully ministering to his aesthetic and spiritual wants by composing numerous works of art in all the well-known as well as recondite modes of Sanskrit composition.

Of Ghanasyama, we have fortunately abundant details regarding his parentage, his own life and lineage, preserved in his own works as well as in the works of contemporary writers.

Born of Mahadeva and Kasi, Ghanasyama had an elder brother who retired to the fourth Asrama under the title of Cidambarayogin. His two wives Kamala and Sundari not only helped him in his literary adventures but immortalised themselves by commenting on his works. His son Govardhana, followed in some measure the literary path of his erudite father. Govardhana though blind from his youth composed a commentary on Ghatakarpara's works.*

Ghanasyama is the reputed author of more than one hundred works, 64 in Sanskrit, 20 in Prakrt and 25 in Vernaculars. His works include Dramas, Kavyas,

---

* For further details, see Mr. V. A. Ramaswami Sastri's instructive monograph on 'Pandit Ghanasyama'—Part III Vol. III of the Journal of Oriental Research, Madras.

commentaries on dramas and kavyas, works on lexicography, Rhetoric—in fact, all branches of Indian languages and literature.

Professor Macdonell remarks that "The Sanskrit dramatists......do not show much fertility of invention" (History of Sanskrit Literature Page 349). It is not that the Sanskrit Dramatists are not possessed of the inventive faculty. The reason is rather the limited and restricted knowledge that we possess of compositions in Sanskrit. Owing to various reasons our knowledge of works in Sanskrit even today is neither full nor deep. Even if we take one type of Sanskrit Literature, the Drama, the Rhetoricians speak of as many as ten varieties of dramatic compositions, though we know of only two or three representative specimens in some of the rarer varieties. The Manuscript collections in the various Libraries in India and abroad have to be systematically explored before sweeping remarks could be passed.

"Prahasana" or Farce is a type of dramatic composition which calls for the inventive intellect of the author in quite a good measure indeed. To be able to compose a successful farce, the author must not only be a master who can wield his literary pen in whatever crooked or clever manner the situation warrants but should also have drunk deep from the well of human experience, in all its varied and varying shades. No apology is therefore needed for the publication of the Damaruka which is a farce of the first magnitude. Ghanasyama, the author, was well-known in his own day by the honorific epithets of Vasyavacah, Sarvajna and Sarasvati, signifying his unparallelled command over the Sanskrit language.

On account of the uniqueness and excellence of the Damaruka as a farce, the publication of the work was begun, even though it was represented by only one manuscript which was fairly full of lacunae also. When the work had been printed, we were fortunate in tracing a commentary on the work by Candrasekhara son of Sabdasesha in the Tanjore Palace Library.

The Commentary, though very short, is useful in explaining some obscure passages and in giving better readings where the original manuscript of the Text was not satisfactory. The Commentary as well as a list of additions and corrections based on the commentary are also printed as an appendix to this edition. The edition of Damaruka is based on the single Manuscript D. No. 12519 (a paper transcript in Devanagari script) available in the Government Oriental Manuscripts Library, Madras. The Damaruka Vyakhya is based on the Tanjore Palace Library manuscript No. 3793 noticed in Volume VI of the Descriptive Catalogue of the Sanskrit Manuscripts in the Tanjore Palace Library.

The Sri Vani Vilas Press, Srirangam deserve our thanks for coming forward to publish this rare work under the conditions laid down in G. O. No. 148 dated 2nd February 1925, whereby the Curator is empowered to publish rare works with the co-operation of private printing presses.

Thanks are also due to my esteemed colleague Pandit V. Krishnamachariar, Sanskrit Pandit of the Presidency College, Madras, for his valuable help in preparing the press-copy.

Presidency College,
Triplicane,
Madras, 15th July 1940.

*P. P. Subrahmanya Sastri.*
Curator, Government Oriental
Manuscripts Library, Madras.

# ॥ डमरुकव्याख्यानम् ॥

## श्रीमच्चन्द्रशेखरप्रणीतम् ।

श्रीमत्कामेश्वरं देवं देवीं कामेश्वरीं पुनः ।
पितरं शब्दशेषं च वाञ्छापूर्त्यै नमाम्यहम् ॥ १ ॥

घनश्यामस्य सुमहाकविशब्दजुषः कृतेः ।
कुर्वे डमरुकस्याहं टिप्पणं चन्द्रशेखरः ॥ २ ॥

जामातृशोधमत्राकुर्वद्भिर्धातुविस्तराद्यखिलम् ।
डमरुकचित्रावल्यां ज्ञेयं मत्तातपादरचितायाम् ॥ ३ ॥

१. अथ कविर्ग्रन्थपूर्त्यै विघ्नघ्नं मङ्गलं करोति— यस्येति । महसः अर्धनारीश्वरस्य ।

२. क्रोडितः आलिङ्गितः । निर्वाहकः निर्वहणकारी, सूत्रधार इति यावत् ।

७. अस्मिन् पद्ये 'वर्धितशैवपक्ष' इत्यादीनि संबोधनानि बिरुदप्राप्तानि ।

९. भावभूतिः भवभूतिः । अङ्गिरःपुत्रो बृहस्पतिः । गुणाढ्यः क्षेमेन्द्रः । भर्तृमेण्ठः कालिदासः । दक्षते प्रगल्भते ।

१०. गवला महिषाः । पीयूषोऽभिनवं पयः ।

१२. काव्यालापाश्चेति । श्लोकोऽयं विष्णुपुराणस्थः ॥
देशरूपं समञ्जसम् । दार्भिकाः पशवः, सदसद्ज्ञानिन इति यावत् ।

१८. आकूणनमुत्कण्ठनम् ।
पात्रसूचना, प्रस्तावनेति व्यज्यते ।

२२. पितामहः पितृपिता, ब्रह्मा च । विधुश्चन्द्रः विष्णुश्च । हरश्चोरः, महेश्वरश्च ।

२४. शतधृतिर्ब्रह्मा । काकोलं काकम् । विकुण्ठासुतो विष्णुः ।

२५. अङ्कनं कलङ्कम् ।

२७. ततं विस्तृतम् । सुधां चूर्णम् । धातुः रक्तमनःशिला ।

२८. चन्द्रः कर्पूरम् ।

२९. स्वभूर्विष्णुः ।

३०. पृथग्जनैः चण्डालैः ।

३३. दासेरो भृत्यः ।

३४. अगदङ्कारो वैद्यः । भगन्दरो रोगविशेषः ।

३५. पात्राण्युपकरणानि ।

३६. सिद्धार्थः सर्षपविशेषः ।

३७. शीतको मन्दः ।

३८. भोगः सुखं फणा च ।

४१. त्रिस्रोताः गङ्गा ।
[1]ईशः परमेश्वरः ।

४६. प्राङ्निबन्धेषु प्राचीनप्रबन्धेषु; खिन्त्ते खिद्यते ।

५४. कवमानस्य कवयतः ।
सांप्रतं युक्तम् ।

६१. त्रयं पार्वतीपञ्चवक्त्रषण्मुखत्रयम् ।

६२. कीलालवर्णा रक्तकान्तिः [2]कुगवर्णवर्णस्थानं भूगामिचातुर्वर्ण्यस्तोत्रपात्रम् । सदास्थानसदोषणतर्का सत्सभानित्यचतुरतर्कशास्त्रा । [3]करीरशब्दग्रहः कुम्भकर्णः । लोलचक्षुः, स्त्रीत्यर्थः ।

---

1. एतत्पदघटितः श्लोकः मूलमातृकायां नोपलभ्यते ।

2. 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाऽक्षरे' इत्यमरः ।

3. 'वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना' इति कोशात् करीरशब्दो घटपर्यायकुम्भवाची । शब्दग्रहशब्दश्च श्रोत्रपर्यायकर्णवाची । अतश्च करीरशब्दग्रह इति संघातो रावणानुजकुम्भकर्णं कथंचिल्लक्षयति ।

६३. पाण्डुरस्य पाण्डोः। आत्मरुहानात्मजान्। झषक्षितिक्षिद्विराटः। पुटभेदनं पुरम्। शब्दगृहं कर्णम्। सशङ्कुः शल्यसहितः। धृतचक्रो धृतराष्ट्रः।

६४. भूभूः सीता। सुशिरोधिः सुग्रीवः। कृष्णो नीलः। केयूरसाष्टापदसिंहजुष्टः अङ्गदस-शरभकेसरिसेवितः। स्वपुत्रसावे पत्न्यै। चाणूरजित्पूर्वजजिष्णुरिन्द्रजित्, तस्य तातं रावणम्।

६५. पत्रिपत्रो गरुडवाहनः। 'पत्रं स्याद्वाहनेऽपि च' इति केशवः। अघाकरं पापपुञ्जम्। सिन्धुमित्रं मैनाकः, तत्प्रसूर्मेना, तद्भर्ता हिमवान्, तत्कन्या गौरी, तत्पतिः शिवः, तदङ्गनानुजः तच्छ्यालः।

६६. अनयानः, सयान इति यावत्। घटश्रोत्रदायादः कुम्भकर्णसुतः; घटः कुम्भः। शालावृकान् कपीन्। अल्पकुक्षिप्रियो मन्दोदरीपतिः।

६७. अभ्यवहरेद्भक्षयेत्। चक्री सर्पः। प्लवंगमो मण्डूकः। [1]ओतुजेमनवस्तूनां मार्जा-रखादनपदार्थानाम्, मूषिकाणामिति यावत्। क्षयनिर्ग्रथनं वासबिलम्।

६८. घनध्वनिखगाः मेघनादशराः। पङ्क्तिशताङ्गो दशरथः। सालावृकाः कपयः। दरो भयम्।

६९. नीलः कृष्णः। अन्धका यादवाः। अहन्तानिकायस्था गर्वाधिक्यस्थिता।

७०. अजादक्षेक्षणं विष्णुवामलोचनम्। चन्द्र इति यावत्। शुचिभूः स्कन्दः। शृङ्गिसूनुर्गिरिजा। द्विद्विजास्यो द्विरदमुखः।

७१. मा लक्ष्मीः। शिवा शुभा। दुग्धधरं पयोधरम्। गौरनेत्रः पीताम्बरः। 'नेत्रं लोच-नवस्त्रयोः' इति वामनः। महाममः महान् ममशब्दो यस्य स तथोक्तः। वत्सल इति यावत्।

७३. भीष्मो भीषणः, भीष्माचार्यश्च। कृपा दया। अन्यत्र कृपः कृपाचार्यः। भीमधर्मः। भयंकरधनुः। अन्यत्र (भीमधर्मौ ?) भीमसेनयुधिष्ठिरौ। दीर्घपृष्ठाः सर्पाः। अन्यत्र (दीर्घपृष्ठं); दीर्घं पृष्ठम्। कामं मन्मथं, यथेप्सितं च। विजयति अर्जुनवदाचरतीत्यर्थः।

७४. भवमानः अधिगच्छन्। प्रकाशतामतिप्रसिद्धताम्। आमोदत्यामोदवदाचरतीत्यर्थः।

७५. पीयते पिबति। लजते लज्जते। वचति वदति। विश्रमते विश्राम्यति। रङ्कूयते हरिणायते।

---

1. 'जग्धिस्तु भोजनम्। जेमनं लेह आहारः' इत्यमरः।

७६. अनुत्तिष्ठमाना अचेष्टमाना । ऊरीकुर्वङ्गीकुरु ।

[1]संपृच्छते विचारयति, आपृच्छते । राजं राजानम् । अध्येति स्मरति । इदं, प्रसिद्धमित्यर्थः । तिष्ठमानः, आत्मानं प्रकाशयन्नित्यर्थः ।

७७. ज्ञेति बुधं प्रति संबोधनम् । अनः शकटम् । संक्रीडति कूजति । गुणो रज्जुः । क्षायति क्षीयते । वधुमणी स्त्रीरत्नम् ।

७८. स्नायति स्नाति । क्षिपते त्यजति । भरते बिभर्ति ।

७९. शुचिः पूतः, अग्निश्च । द्विजा ब्राह्मणाः, पक्षिणश्च । अ इति संबोधनम् । सदं सदा । एधति एधवदाचरतीत्यर्थः । 'इन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्' इत्यमरः ।

८०. ईश्वरे इति पार्वतीं प्रति संबोधनम् । ते तव । अजेन शिवेन । पत् चरणम् । प्रार्थयते याचमानाय । क्लिश्यते खिद्यमानाय ।

८१. प्रसूयते प्रसूते । निचायन् पश्यन् । आनुते उत्कण्ठते । संतिष्ठते नश्यति ।

८२. गिरिजामातरं शंकरम् ।

८३. निर्णेनेक्तितरां भृशं शोधयति । ब्रह्माणो ब्राह्मणाः । शंभुर्ब्रह्मा । 'शंभू ब्रह्मत्रिलोचनौ' इत्यमरः ।

८४. दुर्दशारिदशकन्धर इति । दुष्टा ये दशारयस्तेषां दश कन्धरा (यस्य) इत्यर्थः । रामो बलरामः ।

८५. हारिप्रिया इन्द्राणी । महालक्ष्मीरधिककान्तिः । हरिं चन्द्रम् ।

८६. पुण्यो मनोज्ञः । गौरी संनिहितार्तवा कन्या । कुमारो युवराजः ।

८७. सुमित्रालिङ्गनं सुवयस्यपरिष्वङ्गम् ।

८८. लसद्रसतरङ्गिणी शृङ्गारकल्लोलिनी, गङ्गा च । ऊर्मिलां लक्ष्मणपत्नीं वीचीजटिलां च । मन्युः क्रोधो दैन्यं च । सीतां रामपत्नीं लाङ्गलपद्धतिं च ।

८९. उष्णांशुं चतुरकान्तिम् । चन्द्रं कर्पूरम् ।

---

1. व्याख्यादर्शनेन ग्रन्थस्थः कश्चन श्लोकोऽत्र आदर्शप्राचीनमूलपुस्तके त्रुटितः स्यादित्यूह्यते ॥

९०. गोस्वामिसुतः वृषभपार्थिवः। 'पार्थिवे तनये सुतः' इत्यमरः। देवराजस्तु—गौर्मयूरः, तत्स्वामी षण्मुखः, स सुतो यस्य स तथोक्त इति व्याचकार। विधवः पक्षिपतिः गरुड इति यावत्। वृषाकप्योरिव हरविष्ण्वोरिव।

९१. निशामयमाने पश्यति। चन्द्ररहितां कर्पूरवियुक्ताम्। विरोचनश्चन्द्रः॥

९२. पौलस्त्यं रावणं कुबेरं च। पिनाकं शिवधनुः शूलं च।

९३. शयनतः शेषात्। दृशोश्चन्द्रसूर्ययोः। नाभिसरोजतः ब्रह्मणः। वक्षोमणेः कौस्तुभात्। स्वाख्यादिमार्धं, मङ्गलमित्यर्थः।

आर्यावेष (आर्यौ! एष) खलु सुनेमिरागच्छति।

शरणं गृहम्।

१०५. पशोः उपाकृतिं कृतावभिमन्त्र्य हननम्।

[1]बृहतिका वस्त्रविशेषः।

१०८. स्वान्ते स्वविनाशे। स्वमात्मानम्।

११२. स्वप्रमदाः धनहर्षाः, निजाङ्गनाश्च।

चक्षूकरिष्यावः द्रक्ष्यावः।

११३. ०आजवंजवसरस्वति संसारसागरे।

[2]प्लीहा इति रोगविशेषः

११९. उशन्ति इच्छन्ति।

१२०. निजगुणः शब्दः।

१२५. आहितं रचितम्। प्रवचा वश्यवचाः। स्वाधीनसरस्वतीक इति यावत्।

संपूर्णमिदं डमरुकव्याख्यानम्

---

1. एतत्पदघटितं पद्यं वाक्यं वा मातृकायां नोपलभ्यते।

2. इदं पदं मूले न दृश्यते।

# CORRECTIONS AND ADDITIONS.

The Text of the Damarukam was reconstructed from the only Manuscript available in the Government Oriental Manuscripts Library, Madras. When the text had been printed, a commentary on the text, called Damarukavyakhyanam by Candrasekhara became available from the Tanjore Palace Library. The Commentator, a son of the author, has been very useful in preserving correct readings where the Original Text had many lacunae. The following additions and corrections based on the commentary will be found to be very useful and instructive. The commentary is also printed *in Extenso* after the Text.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| Page | 1. | L. | 11 | For | क्रीडितो | read | क्रोडितो |
| ,, | 3. | ,, | 14 | ,, | भावभूत्याङ्गिर: | ,, | भावभूत्याङ्गिर: |
| ,, | ,, | ,, | 17 | ,, | दृश्यते | ,, | दक्षते |
| ,, | 5. | ,, | 3 | ,, | सम्यगुक्तम् | ,, | देशरूपमुक्तम् |
| ,, | 7 | ,, | 7 | ,, | गगनं | ,, | गगने |
| ,, | ,, | ,, | 23 | ,, | विभु | ,, | विधु |
| ,, | ,, | ,, | ,, | ,, | हरिः | ,, | हरः |
| ,, | 9 | ,, | 8 | ,, | वपुः | ,, | पटुः |
| ,, | 10 | ,, | 19 | ,, | तद्...कारजना | ,, | तदागदङ्कारजना |
| ,, | 11 | ,, | 9 | ,, | शीतलः | ,, | शीतकः |
| ,, | 12 | ,, | 7 | ,, | कुलतटी | ,, | कुचतटी |
| ,, | 13 | ,, | 4 | ,, | खिन्नो | ,, | खिन्ते |
| ,, | 14 | ,, | 3 | Read | सखे ! | before | कतमं |
| ,, | 16 | ,, | 5 | For | वयं | read | त्रयं |
| ,, | ,, | ,, | 8 | ,, | कृत...तक | ,, | कुगवर्णवर्णस्थानं सदास्थानसदोष्णतर्को |
| ,, | ,, | ,, | 9 | ,, | ०लोचनस्य | ,, | ०लोलचक्षुः |
| ,, | ,, | ,, | 11 | ,, | पाण्डुरस्याघवहान्... | ,, | पाण्डुरस्यात्मरुहान्निहन्तुं |
| ,, | ,, | ,, | 14 | ,, | शिशिरोऽथ... | ,, | सुशिरोधि कृष्णकेयूरसाष्टपद-सिंहज्जुष्टः |

| Page | 16 | L. | 18 | For | ०त्यङ्गजानुजः | read | ०त्यङ्गनानुजः |
|---|---|---|---|---|---|---|---|
| ,, | 17 | ,, | 4 | Re-read as | ओतुजेमनवस्तूनां क्षयनिर्व्यथनं गतः । | | |
| ,, | ,, | ,, | 7 | For | सालावृकादरपराः | read | सालावृका दरपराः |
| ,, | ,, | ,, | 9 | ,, | मण्डचतुष्टये | ,, | मन्धकतुष्टये |
| ,, | ,, | ,, | 10 | Re-read | आत्ताहंतानिकायस्था वनिता पूतना गता | | |
| ,, | ,, | ,, | 15 | ,, | सद्यः | ,, | माऽद्य |
| ,, | ,, | ,, | 16 | ,, | ... | ,, | वीक्ष्य |
| ,, | ,, | ,, | ,, | ,, | महा नमः | ,, | महाममः |
| ,, | 18 | ,, | 10 | ,, | भीमधर्मपरिव्रतः | ,, | भीमधर्मपरीवृतः |
| ,, | ,, | ,, | 11 | ,, | दीर्घपृष्ठादिकः | ,, | दीर्घपृष्ठाञ्चितः |
| ,, | ,, | ,, | 21 | Re-read as | विन्ते किंचिन्नैव खिन्ते नितान्तं छिन्ते धैर्यं जातु भिन्ते न भाति ॥ | | |
| ,, | ,, | ,, | 22 | For | भाजति | read | भ्राजति |
| ,, | 19 | ,, | 9 | ,, | शुभि | ,, | शुचि |
| ,, | ,, | ,, | 10 | ,, | अमृष्यमाणः | ,, | अ मृष्यमाणः |
| ,, | ,, | ,, | ,, | ,, | स्वयमे० | ,, | सदमे० |
| ,, | ,, | ,, | 12 | ,, | तेजे न | ,, | तेऽजेन |
| ,, | 21 | ,, | 11 | ,, | गोस्वामी स्वयमीशानो | ,, | गोस्वामिसुत ईशानो |
| ,, | ,, | ,, | 14 | , | निशामपमाने | ,, | निशामयमाने |
| ,, | 22 | ,, | 7 | ,, | वक्षोजयोः | ,, | वक्षोमणेः |
| ,, | ,, | ,, | 12 | ,, | रज्जुग्रथनकर्मणा | ,, | धात्रा ग्रामक्षये कृताः |
| ,, | 24 | ,, | 12 | Re-read as | असत्यं सेवनं पित्रोर्हिंसां चोपाकृतिं पशोः ॥ | | |
| ,, | ,, | ,, | 21 | For | मुदम् | read | मदम् |
| ,, | ,, | ,, | 22 | ,, | स्वान्ते | ,, | स्वं ते |
| ,, | 25 | ,, | 22 | ,, | प्रत्यक्षीकुर्वः | ,, | चक्षूकरिष्यावः |
| ,, | 26 | ,, | 8 | ,, | तृष्णाजवे भवसरस्वति | ,, | तृष्णाजवंजवसरस्वति |
| ,, | ,, | ,, | 13 | ,, | अस्त्रिक्ष्व | ,, | अस्त्रक्षि |
| ,, | 27 | ,, | 5 | ,, | निर्याञ्च्वं | ,, | निर्याच्च्वं |

॥ श्रीशंकरगुरुकुलपत्रिका ॥

# THE JOURNAL

OF THE

# SRI SANKARAGURUKULAM, SRIRANGAM.


**Editor:** Gurubhaktasikhamani, Sastraprasarabhushana, T. K. Balasubrahmanya Aiyar, B A., Founder of Sri Sankaragurukulam, Srirangam.

**Literary Adviser:** Vidyasagara, Vidyavacaspati, P. P. Subrahmanya Sastri B. A. (Oxon), M. A., Curator, Government Oriental Manuscripts Library and Professor of Sanskrit, Presidency College, Madras.

**The Main features are :**

1. The publication of rare and hitherto unpublished works of writers of established reputation on all branches of learning bearing on Hindu Culture and Learning.
2. The reviewing of books and periodicals on current thought.
3. The encouraging of the production of original compositions in Sanskrit by contemporary writers and poets.

**Annual Subscription Rs. 6/only.**

For *bona fide Vidyarthis* on production of certificate from their teacher Rs. 4/only

The Journal is now published Quarterly. If sufficient encouragement is forthcoming it is hoped to convert it into a Bimonthly and even a Monthly,

**Advertisement rates are :** 1 Full page for one insertion Rs. 10/—
Do. for one year Rs. 30/—
½ page for one insertion Rs. 6/—
½ ,, for one year Rs 20/—

THE MANAGER,
***The Journal of the Sri Sankaragurukulam,***
***SRIRANGAM.***

रिक्तो भवति। एवं तर्हि बहुमातङ्गमिति समाहारे, एष दोषो भवति— "अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते" इति पञ्चपूलीवदीकारान्तत्वं प्राप्नोति; न वाऽयं पात्रादिषु पठ्यते, येन चतुष्पात्र-त्रिभुवनादिवत्तन्निषेधो भविष्यति; नाप्याबन्तः, येन पञ्चखट्वी पञ्चखट्वम् इत्यादिवद्विकल्पोऽवकल्पेत। ननु च द्विगावपीकारो न दृश्यते, यथा एकपुत्रः एकभिक्षेति। नायं द्विगुः। किं तर्हि? "पूर्वकालैकसर्वजरत्पुराण" (पा. २. १. ४९.) इत्यादिना कर्मधारयः। किं च भोः संख्या-पूर्वोऽपि द्विगुर्न भवति? बाढम्, तस्य तद्धितार्थोत्तरपदसमाहारेष्वेव भावात्; न चेह तद्धितार्थ उत्तरपदं वा विद्यते; न चैकस्य समाहारः संभवति। यदा तु सामर्थ्यातिशयादेकस्मिन्नपि समूहा-रोपणं, तदा भवत्येव, यथा एकापूपी एकशाटीति। किं पुनर्द्विगुसंज्ञा प्रत्ययोत्तरपदयोर्भवति? एवं तावत्। एतर्हीतरेतराश्रयत्वादप्रसिद्धिः। कथमितरेतराश्रयत्वम्? द्विगुनिमित्ते प्रत्ययोत्तरपदे प्रत्ययोत्तरपदनिमित्ता च द्विगुसंज्ञेति। एवं तर्हि, अर्थ इति वक्ष्यामि। अर्थे चेत्तद्धितानुत्पत्तिः बहुव्रीहिवत्; तत्र यथा चित्रगुः शबलगुः इति बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवति, एवं द्वैमातुरः पाञ्चनापितिः इत्यादौ तद्धितार्थस्य द्विगुनोक्तत्वात्तद्धितोत्पत्तिर्न प्राप्नोति। यथेच्छसि तथाऽस्तु; अस्तु तावत् प्रत्ययोत्तरपदयोरिति। ननूक्तमितरेतराश्रयत्वादप्रसिद्धिरिति। नैष दोषः; नेदं तुल्यमन्यैरितरेतराश्रयैः, शब्दनित्यत्वात्। ननु च न संज्ञा नित्या; किं तर्हि? शब्दः। यद्येवं भाविनी संज्ञा विज्ञास्यते; तद्यथा— कश्चित्तन्तुवायमाह, अस्य सूत्रस्य शाटकं वयेति; स पश्यति— यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी तु खल्वस्य संज्ञाऽभिप्रेता, स मन्यते— वातव्यं यस्मिन्नुते शाटक इत्ये-तद्भवतीति। एवमिहापि तस्मिन् द्विगुर्भवति यस्याभिनिर्वृत्तस्य प्रत्ययः उत्तरपदमित्येते संज्ञे भविष्यत इति। अथवा पुनरस्त्वर्थ इति। ननु चोक्तमर्थे चेत्तद्धितानुत्पत्तिः बहुव्रीहिवदिति। नैष दोषः; नावश्यमर्थशब्दोऽभिधेय एव वर्तते; किं तर्हि? स्यादर्थेऽपि; तद्यथा— दारार्थं भिक्षामहे, जनार्थं भिक्षामहे; दारा नः स्युः, जना नः स्युः, इति। एवमिहापि तद्धितार्थे द्विगुर्भवति, तद्धितः स्यादिति। द्विगोर्वा लुग्वचनं ज्ञापकम्; यदयं "द्विगोर्लुगनपत्ये" (पा. ४. १. ८८) इति द्विगोस्तद्धितस्य लुकं शास्ति, तज्ज्ञापयति— उत्पद्यते द्विगोस्तद्धित इति। यद्येवं समाहारसमूहयोरविशेषात् समाहारग्रहणमनर्थकम्, "तस्य समूहः" (पा. ४. २. ३७) इति तद्धितार्थेनैव कृतत्वात्; तथा हि समाहारः समूह इत्यविशिष्टावेतावर्थौ; तत्र समूह इव समाहारेऽपि तद्धितार्थे द्विगुः इत्येव भविष्यति। यदि तद्धितार्थे द्विगुर्भवतीत्युच्यते, तद्धितोत्पत्तिः प्राप्नोति। उत्पद्यताम्; लुग्भविष्यति। लुक्कृतानि प्राप्नुवन्ति। कानि पुनस्तानि? पञ्चपूली दशपूली इति; 'न तद्धितलुकि' (पा. ४. १. २२) इति ङीप्प्रतिषेधः प्राप्नोति; पञ्चगवं दशगवमिति 'गोरतद्धितलुकि' इति टच् न प्राप्नोति। नैष दोषः; अविशेषेण द्विगोः ङीप्

भवतीत्युक्त्वा अपरिमाणबिस्ताचितकम्बल्येभ्यः समाहारे इति वक्ष्यामि; अविशेषेण च गोष्टच् भवतीत्युक्त्वा द्विगोः समाहारे इति वक्ष्यामि; तदुभयमपि नियमार्थं भविष्यति समाहार एव नान्यत्रेति। एवं तर्हि, अभिधानार्थं समाहारग्रहणम्; समाहारेणाभिधानं यथा स्यात् न तद्धितार्थेन। यदि स्यात् को दोषः स्यात्? तद्धितोत्पत्तिः प्रसज्येत। प्रसज्यताम्; लुग्भविष्यति। लुक्कृतानि प्राप्नुवन्ति। सर्वाणि परिहृतानि। न सर्वाणि परिहृतानि; पञ्चकुमारि दशकुमारीति "लुक् तद्धितलुकि" (पा. १. २. ४९) इति ङीपो लुक् प्रसज्यत इति। ननु च यदि तद्धितार्थे द्विगुः इत्युच्यते पञ्चखट्वः दशखट्वः इति मत्वर्थेऽपि द्विगुसंज्ञायां "द्विगोः" (पा. ४. १. २१) इतीकारः प्राप्नोति। बहुव्रीहिसंज्ञया द्विगुसंज्ञाया बाधितत्वान्न भविष्यति; समानाधिकरणानां मत्वर्थे बहुव्रीहिर्भवति। यद्युत्तरपदे द्विगुरित्युच्यते, उत्तरपदोक्तिर्वक्तव्या। इयमुच्यते— "उत्तरपदेन परिमाणिना द्विगोः समासवचनम्"; द्वौ मासौ जातस्य द्विमासजातः, द्वे अहनी जातस्य द्व्यह्नजात इति। किमुच्यते परिमाणिनैवेति, न पुनरन्यत्रापि; तद्यथा— पञ्चगवप्रियः पञ्चगवधन इति। अन्यत्र समुदायस्य बहुव्रीहित्वादुत्तरपदं प्रसिद्धमेव; तथा हि— "अनेकमन्यपदार्थे" (पा. २. २. २४.) समस्यते, बहुव्रीहिश्च समासो भवति। अथ द्वन्द्वस्य का वार्ता? द्वन्द्वोऽग्रतो विशेषेण व्याकरिष्यत इति। अथ बहुभिर्बहुव्रीहिः—

'चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य'। इति। (वेणीसंहारम् १.२१.)

तत्र चञ्चद्भ्यां भुजाभ्यां भ्रमितायाश्चण्डाया गदायाः अभिघातेन संचूर्णितमूरुयुगलमस्येति विग्रहः। न चैतद्वाच्यं समानाधिकरणानामेव बहुव्रीहिः; "सप्तमीविशेषणे बहुव्रीहौ" (पा. २. २. ३५.) इति ज्ञापकेन वैयधिकरण्येऽपि बहुव्रीहेः स्मरणात्। एतेन सर्वपदप्रधानो द्वन्द्वोऽपि व्याख्यातः; यथा—

'सूर्यानलानिलहिमांशुधनेशशक्रप्रेताधिनाथवरुणाः करुणास्पदं नः।' इति॥

ननु च अन्यपदार्थे बहुव्रीहिः स्मर्यते; तत्र चित्रगुर्देवदत्तः इति देवदत्तादेरनुप्रयोगो न प्राप्नोति; न हि चैत्रादिशब्दप्रयोगादवधृतेषु चैत्रादिषु पुनश्चैत्रादिश्रुतयः प्रयुज्यन्ते। नैवम्; चित्रगुशब्दः चित्रगवीनां स्वामिसामान्यमभिधत्ते; तत्रावश्यं विशेषार्थिना विशेषेऽनुप्रयोक्तव्यः। चित्रगुः कः? देवदत्त इति; यत्र त्वसाधारणविशेषणादिभिर्विशेष एव समासः तत्रानुप्रयोगो न भवत्येव; यथा— त्रिलोचनः, शूलपाणिरिति। एवं तर्हि, सामान्यवचनानामनुप्रयोगस्याप्राप्तिः; यथा— चित्रगु सर्वम्, चित्रगु विश्वम्, इति। सामान्यमपि यथा विशेषः; तथा हि— यथा चित्रगुशब्दादिप्रयोगे विशेषान्तराणां निवृत्तिः, तथा सर्वादिशब्दप्रयोगे विशेषाणां निवृत्तिः

प्रतीयते । यदि वा, चित्रा गावोऽस्य देवदत्तस्येति षष्ठ्यर्थस्य समासेनाभिधानात् षष्ठी नानुप्रयुज्यते; संबन्धी तु न समासोपादान इत्यनुप्रयुज्यते । एवं तर्हि, विभक्त्यर्थाभिधायिनो बहुव्रीहिपदस्य देवदत्तादिभिर्द्रव्यवचनैः सामानाधिकरण्यं न प्राप्नोति। मतुल्लोपाद्भविष्यति । मैवम्; मतुपोऽपि संबन्धार्थत्वात् द्रव्यवचनैरसामानाधिकरण्यमेव। न च बहुव्रीहेः विभक्त्यर्थाभिधायिनो मतुप्प्रत्ययो विधातुं शक्यते; स हि प्रथमासमर्थादस्त्युपाधिर्विधीयते; न च विभक्त्यर्थवृत्तेर्बहुव्रीहिपदस्यास्त्यादिक्रियाभिः सामानाधिकरण्येन संबन्धो भवति । अथ, अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति सामानाधिकरण्यमुपपत्स्यते। तन्न; अभिहितोऽप्यसौ यतो यत्नेत्यादिवन्न स्वरूपं हास्यति। एवं तर्हि, यथा— जातौ पदार्थे जातेः कार्यमुच्यमानमसंभवात् तत्सहचरितासु व्यक्तिषु निविशते, तथा बहुव्रीह्यर्थे संबन्धे सामानाधिकरण्यक्रियायोगादिकार्यं प्रयुज्यमानं तदाश्रये भविष्यति; एवं च सोऽयमित्युपचरितसंबन्धेषु संबन्धिषु बहुव्रीहिपदैराभेधीयमानेषु, शुक्लादिविशेषणानामिवाश्रयतो लिङ्गवचनान्यपि न विरोत्स्यन्ते । यदि वा, अन्यपदार्थे इत्यर्थग्रहणसामर्थ्यात् सद्रव्यस्य सलिङ्गस्य ससङ्ख्यस्य चोपादानं भविष्यति, न विभक्त्यर्थमात्रस्य। कथं पुनरर्थशब्दोपादानादयमर्थो लभ्यते? श्रूयताम् — अन्यपद इतीयत्युच्यमाने पदे वृत्त्यसंभवात् पदसहचरितां यां कांचिदर्थमात्रां पदशब्दो लक्षयेत्; पदत्वस्य वा निमित्तत्वेन प्रत्यासन्नोपकारिणं विभक्त्यर्थं प्रत्याययेत्; सोऽयमेवं सिद्धे समीहिते, यदर्थग्रहणं करोति तेनैतत् ज्ञापयति— यावानर्थश्रुतेः पदविषयोऽर्थः प्रतीयते, तावान् सर्वोऽपि त्यागनिमित्ताभावादुपादीयत इति। अपि च, पदमर्थस्य परिच्छेदायोपादीयते; अर्था हि प्रकृत्यादीनां सामान्येन प्रसक्ताः पदेनावच्छिद्यन्ते पदावधिकोऽर्थ उपादेय इति; तत्र यथा वाक्यार्थस्यानाश्रयणमाधिक्यात् तथा पदार्थैकदेशस्यापि, न्यूनत्वात् । तदेवमर्थग्रहणसामर्थ्यात् सलिङ्गः ससङ्ख्यः सद्रव्यश्च समर्थः पदार्थ उपादीयते। ननु च बहुव्रीहिणा समस्तपदार्थाभिधाने यथा संबन्धाभिधायिका षष्ठी न प्रयुज्यते, तथा संख्याभिधायिनः स्वादयः लिङ्गाभिधायिनष्टाबादयो वा न प्रयुज्येरन् । उच्यते— एकादिपदैरिव वृत्तिपदैरभिहिताऽपि न संख्या संख्याकार्यं निम्नयिष्यति; न हि षष्ठ्यादिविधान इव वचनविधावनभिहिताधिकारो विद्यते, कर्मादयश्च कारकविशेषाः प्रत्याययितव्या इत्यवश्यविधेया द्वितीयादयः; प्रथमा तु वचनग्रहणसामर्थ्यात् न केवला प्रकृतिः प्रयोक्तव्या इति समयाद्वा प्राथमिककल्पिकी भविष्यति । स्यादेतत्; यथा अभिहिता एकत्वादयो वचनव्यवस्थानिमित्तं तथाऽभिहितः संबन्धोऽपि षष्ठीनिमित्तं भवति । तदयुक्तम्, अनभिहिताधिकारात्। अपि च, संबन्धोपसर्जनं प्रातिपदिकार्थो वृत्तिशब्देनाभिधीयते; न चायं षष्ठीविषयः, तस्याः प्रातिपदिकार्थोपसर्जने संबन्धे विधानात् । टाबादयस्तु स्वार्थिकत्वादभिहितेऽपि लिङ्गे भवन्ति;

तदुक्तम्— 'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः' इति (महाभाष्यम् ४.१.१.१.)। यदि वान्य एव वाक्यार्थो वृत्त्यर्थात्; तथा हि— चित्रा गावोऽस्येत्यन्यपदार्थोपसर्जनाश्चित्रगव्यो वाक्येनाभिधीयन्ते; चित्रगुरिति पुनर्वृत्तौ गवार्थोपसर्जनस्वामी प्रतीयते; तत्र यदा निर्ज्ञातपराधीनतानां चित्रगवीनां स्वामिविशेषावच्छेदायान्यपदार्थ उपादीयते अस्यैता गाव इति, तदा बहुव्रीहिर्न भवति; यदा तु ताश्चित्रा गावः स्वामिनो विशेषाभिधानाय प्रत्यवमृश्यन्ते—चित्रगवीनामासामयं स्वामीति, तदा बहुव्रीहिर्भवति— चित्रगुः शबलगुरिति; तामेव च स्वामिविशेषणतां स्फुटमुपदर्शयन्तो निदर्शयन्ति— यस्य चित्रा गावः स चित्रगुः, यस्य शबलाः स शबलगुरिति। उपलक्षणं चात्र षष्ठी; तेन कर्मकर्तृप्रवचनेनाप्रथमाया अपि बहुव्रीहिर्वक्तव्यः— ऊढो रथोऽनेन ऊढरथोऽनड्वान्, उद्धृतः ओदनः अस्याः उद्धृतौदना स्थाली, उपहृतः पशुः अस्मै उपहृतपशू रुद्रः, आरूढो वानरोऽमुम् आरूढवानरो वृक्षः, प्राप्ता अतिथयोऽस्मिन् प्राप्तातिथिर्ग्रामः, सिद्धः साधकोऽनया सिद्धसाधका विद्येति। अथ अप्रथमाया इति किमर्थम्? इह माभूत्— वृष्टे देवे गत इति। अथेह कस्मान्न भवति— वृष्टे देवे गतं पश्येति? बहिरङ्गाऽत्राप्रथमा। यद्येवं षष्ठ्याद्यन्तरङ्गत्वे चित्रगोर्देवदत्तस्येत्यादौ पुनः षष्ठ्यादयो न स्युः। बाह्यं संबन्धिनमपेक्ष्य भविष्यन्ति। अथ, यथा चित्रगुप्रभृतिभ्यः षष्ठ्यादयः, तथा यतो यत्रेत्यादिभ्यः पञ्चमीसप्तम्यादयोऽपि कस्मान्न भवन्ति? उच्यते— तसिल्त्रलादिभिः पञ्चमीसप्तम्यादीनामभिहितोऽर्थोऽनन्तर्भूतः। चित्रगुप्रभृतिषु तु बहुव्रीहिणाभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति। अथेह बहुव्रीहिः कस्मान्न भवति— पञ्चभिर्भुक्तमस्य? बहुव्रीहिः समानाधिकरणानामेवेति स्मरणात्। यद्येवम्, अस्तिक्षीरा, उच्चैर्मुखः, अभार्यः, प्रपर्णः, उष्ट्रमुखः, चन्द्रवदना, केशचूडः, सुवर्णालंकारः, चन्द्रशेखरः, शूलपाणिः, कण्ठेकालः, उरसिलोमेति बहुव्रीहिसंज्ञा न प्राप्नोति; तथा हि— आद्येषु चतुर्षु पूर्वपदमव्ययम्, तस्यासत्त्ववाचित्वात् सत्त्वभूतैः क्षीरादिभिः सह सामानाधिकरण्यं नास्ति; मध्यमेष्वपि विशेषणविशेष्यभावानुपपत्तेर्न सामानाधिकरण्यं घटते; अन्त्येषु तु सप्तम्यन्तप्रथमान्तयोरसामानाधिकरण्यं व्यक्तमेवेति। नैवम्, एतेष्वपि सामानाधिकरण्योपपत्तेः। तत्रास्तीति निपातो विभक्तिप्रतिरूप इति कालं पुरुषं संख्यां साधनं च न व्यभिचरति; उच्चैःशब्दस्यापि सत्त्ववचनत्वं दृश्यते— 'किं पुनर्यस्तथोच्चैः' इति; अत एव एताभ्यामस्तितोच्चैस्त्वमिति भावप्रत्यया अपि; अभार्य इत्यादिषु दध्योदनादिवन्मध्यमपदलोपो व्यवस्थितविभाषया वृत्तिविषये द्रष्टव्यः; तेनायमर्थः संपद्यते— अस्ति क्षीरमस्याः अस्तिक्षीरा गौः, उच्चैर्मुखमस्य उच्चैर्मुखो मैत्रेयः, अविद्यमाना भार्या अस्य अभार्यः अविद्यमान भार्यो वा, प्रपतितानि पर्णानि अस्य प्रपर्णः, प्रपतितपर्णो वा। उष्ट्रमुखः चन्द्रवदना इत्येतयोस्तु उष्ट्रचन्द्रशब्दौ भूयोऽवयवसामान्ययोगातिशयादभेदोपचारेण

मुखविशेषणं भवन्तौ गौणीं वृत्तिमनुभवतः । ननु किमुष्ट्रमुखयोर्मिथः सादृश्यम्? उष्ट्रशब्देनेहोष्ट्रमुखमभिधीयते; अवयवेऽप्यवयविवदुपचारो द्रष्टव्य इति । केशचूडः सुवर्णालंकारः इत्येतयोस्तु केशसंघाते केशशब्दो वर्तते, सुवर्णविकारे तु सुवर्णशब्दः, कारणे कार्योपचारात् । चन्द्रशेखरः शूलपाणिः इत्यत्र चन्द्रशूलोपलक्षितौ शेखरपाणी चन्द्रशूलशब्दाभिधेयौ; यथा— कुन्तान् प्रवेशय, यष्टीः प्रवेशयेति । कण्ठेकालः उरसिलोमा इत्येतयोस्तु कण्ठे स्थिताः कालाः अस्य, उरसि जातानि लोमान्यस्येति पदान्तरमध्याह्रियते; यथा— द्वारं द्वारम् इत्युक्ते अपाव्रियतां संव्रियतां वेति । एतेन 'सुबधिकारे अस्तिक्षीरेत्युपसंख्यानम्' 'अव्ययानां बहुव्रीहिर्वक्तव्यः' 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च' 'समुदायविकारषष्ठ्याश्च' 'प्रादिभ्यो धातुजस्य वा' (महाभाष्यम् २. २. २४) इत्यपि न वक्तव्यं भवति। ननु परिगणनार्थमप्येतदवश्यं वक्तव्यम्, नैवम्; क्रियमाणेऽपि हि परिगणने यत्राभिधानं नास्ति न तत्र समानाधिकरणानामपि बहुव्रीहिः; तद्यथा— पञ्च भुक्तवन्तोऽस्येति । एवं तर्हि मत्वर्थग्रहणं करिष्यते— समानाधिकरणानां मत्वर्थे बहुव्रीहिर्भवतीति; तथाऽपि, ऊढो रथोऽनेन ऊढरथोऽनड्वान्, दक्षिणस्याश्च पूर्वस्याश्च दिशो यदन्तरालं सा दक्षिणपूर्वा, पुत्रेण सह सपुत्रः, केशेषु केशेषु च गृहीत्वा प्रवृत्तं युद्धं केशाकेशि, दण्डैश्च दण्डैश्च प्रहृत्य दण्डादण्डि, त्रिर्दशैते त्रिदशाः, इत्येवमादिभिरव्याप्तिरेव । तस्मात्सुदूरमपि गत्वाऽभिधानमेवाश्रयितव्यम्; अभिधानलक्षणा हि कृत्तद्धितसमासा इति कृतं परिगणनेन । अथ त्रिदशा इति कोऽस्य विग्रहः? त्रिर्दशैते त्रिदशा इति । 'संख्यासमासे सुजन्तस्य संख्येत्यप्रसिद्धिः इति; न हि सुजन्ता संख्याऽस्ति । अस्तु तर्ह्येवं विग्रहः— त्रयो दशत एते त्रिदशा इति । एवमप्यत्कारान्तस्य संख्येत्यप्रसिद्धिः; न ह्यत्कारान्ता संख्याऽस्ति । अस्तु तर्ह्ययमेव विग्रहः— त्रिर्दशैते त्रिदशा इति । ननु चोक्तं संख्यासमासे सुजन्तस्य संख्येत्यप्रसिद्धिरिति । नैष दोषः; सुजन्तस्य संख्येत्यप्रसिद्धिः; न चात्र समासे सुचं पश्यामः । किं तर्हि? वाक्ये । कुतः पुनरेतद्वाक्ये सुच् दृश्यते, समासे तु न दृश्यते? अभिहितत्वात्; अभिहितः सुजर्थः । केन? समासेन । किं च भोः सुजर्थे समास उच्यते? नैवम्; सामर्थ्यादिह सुजर्थो गम्यते । कथम्? यावता संख्या संख्यया संख्यायते, स च क्रियाभ्यावृत्त्यर्थ उक्तः समासेनेति कृत्वा सुज् न भविष्यति' (महाभाष्यम् २. २. २५) ॥

प्रकृतिः प्रातिपदिकरूपाऽप्येषोपवर्णिता ।
स्वरूपं प्रत्ययादीनां पृथक् पृथगथोच्यते ॥

तत्र प्रतीयते अनेनार्थ इति प्रत्ययः; स त्रिधा— धातुप्रत्ययः, प्रत्ययप्रत्ययः, प्रातिपदिकप्रत्यय इति । तेषु सनादयः, तिबादयः, तुमुनादयः, तव्यादयः, ण्वुलादयः, उणादयश्चेति धातु-

प्रत्ययभेदाः। तत्र इच्छाप्रयोजकव्यापारादिक्रियासु क्रियासमभिहारादिषु च ये विधीयमानाः क्रियावचनत्वात् भूवादिवदेव प्रत्ययान्तरमपेक्षन्ते ते सनादयः; यथा— चिकीर्षति, अध्यापयति, पापच्यते, गोपायति, ऋतीयते, कामयते, इति। क्रियाप्रधानाः कर्तृकर्मणोः क्रियायां च ये विहिताः साध्यरूपापन्नक्रियाभिधायित्वेन प्रत्ययान्तरं नापेक्षन्ते ते तिबादयः; यथा— व्रजति देवदत्तः, पच्यते ओदनः, रज्यति वस्त्रम्, लूयते केदारः, चोरस्य रुजति, आस्यते युष्माभिः इति। अनुपात्तक्रमक्रियाभिधायिनोऽसत्त्वभूतार्थाः साध्यभावे ये विधीयन्ते ते तुमुनादयः; यथा— पक्तुमिच्छति, भुक्त्वा व्रजति, अधीत्य स्नाति, पायंपायमास्ते, चोरंकारमाक्रोशति, चकासांचकार इति। प्रायेण भावकर्मणोः कर्त्रादिषु च ये विधीयन्ते ते तव्यादयः; यथा गन्तव्यं भवता, करणीयः कटः, कृतो भवता, लूयमानः केदारः, दुर्गमो मार्गः, वास्तव्यो लोक इति। प्रायेण कर्तरि कर्मादिषु च ये विधीयन्ते ते ण्वुलादयः; यथा— पाचकः पुमान्, सोमं पवमानः, पचन्यवागूम्, कन्यामलंकरिष्णुः, पादहारकः पङ्कः, प्रियंकरणं शीलम्, इति। सर्वकारकेषु सिद्धभावे च ये विधीयमानाः प्रायेण द्रव्यवचनत्वं लभन्ते ते उणादयः; यथा— शीतो वायुः, वत्सला धात्री, तीक्ष्णं दात्रम्, वृद्ध उपाध्यायः, रम्यः प्रासादः, पाको वर्तत इति। यदादयः, घादयः, मबादयः, फगादयः, युजादयः, ढगादयश्चेति प्रत्ययप्रत्ययभेदाः। तेषु भवापत्यस्वार्थमत्वर्थादिषु सुबन्तेभ्यो य उत्पद्यन्ते ते यदादयः; यथा— अप्सव्यः, पूर्वाह्णेतनम्, चिरंतनम्, आमुष्यायणः, त्वयका, शुभंयुः इति। प्रकर्षापकर्षकुत्साप्रशंसादिषु तिङन्तेभ्यो य उत्पद्यन्ते ते घादयः; यथा— पचतितराम्, गच्छतितमाम्, जल्पतिकल्पम्, स्पृशतिदेश्यम्, पचतकि, पचतिरूपम्, इति। निर्वृत्तस्वार्थमत्वर्थादिषु कृद्भ्यो य उत्पद्यन्ते ते मबादयः; यथा— कृत्रिमम्, पाकिमम्, सांराविणम्, व्यावक्रोशी, जित्वरी, श्यैनंपाता इति। जीवद्वंश्यप्रशस्तकुत्सितस्वार्थादिषु अपत्यादितद्धितान्तेभ्यो य उत्पद्यन्ते ते फगादयः; यथा— गार्ग्यायणः, दाक्षायणः, वार्ष्यायणीयः, वार्ष्यायणिकः, आभिजित्यः, कौञ्जायन्यः इति। सिद्धभावताच्छील्योपाधिकर्त्रादिषु णिजादिधातुप्रत्ययान्तेभ्यो य उत्पद्यन्ते ते युजादयः; यथा— कारणा, अटाट्या, यायजूकः, सासहिः, यायावरः, चिकीर्षुः इति। अपत्याद्यर्थस्वार्थशक्तिसंख्यादिषु स्त्रीप्रत्ययान्तेभ्यो य उत्पद्यन्ते ते ढगादयः; यथा— गाङ्गेयः, यौवतेयः, वाराणसेयः, सुवधूकः, नद्याम्, खट्वायाम्, युवतयः, इति। टाबादयः, स्वादयः, तसिलादयः, कादयः, अणादयः, क्यजादयश्चेति प्रातिपदिकप्रत्ययभेदाः। तेषु प्रकृतिलिङ्गाभिधायिनः प्रातिपदिकाद्य उत्पद्यन्ते ते टाबादयः; यथा— खट्वा, सुदामा, कारीषगन्ध्या, ब्रह्मबन्धूः, कुमारी, युवतिः, इति। प्रकृत्यर्थसंख्याभिधायिनः प्रातिपदिकादेव य उत्पद्यन्ते ते स्वादयः; यथा— कुण्डं, कुण्डे, कुण्डाभ्याम्, कुण्डेभ्यः, कुण्डयोः, कुण्डेषु, इति। शक्तिमात्राभिधायिनः सोपाधिशक्त्यभिधायिनो वा सुबन्तप्रातिपदिकात् स्वार्थादिषु य उत्पद्यन्ते

